अनया च वर्णयमकमालया पदयमकमाला व्याख्याता॥ भङ्गादुत्कर्षः॥ ३॥ उत्कृष्टं खलु यमकं भङ्गाद्भवति। शृङ्खला परिवर्त्तकश्चूर्णमिति भङ्गमार्गाः॥ ४॥ एते खलु शृङ्खलादयो यमकभङ्गानां प्रकारा भवन्ति। तान् क्रमेण व्याचष्टे। वर्णविच्छेदचलनं शृङ्खला॥ ५॥ वर्णानां विच्छेदस्तस्य चलनं यत् सा शृङ्खला॥ यथा, कलिकामधुकाशब्दे विच्छेदः, धुशब्दे च तस्य चलनं लिमवर्णयोर्विच्छेदात्। सङ्गनिवृत्तौ स्वरूपापत्तिः परिवर्त्तकः॥ ६॥ अन्यवर्णसंसर्गः सङ्गः। तद्विनिवृत्तौ स्वरूपस्यान्यरूपतिरस्कृतस्यापत्तिः प्राप्तिः परिवर्त्तकः॥ यथा, कलिकामधुगर्हितमिति। अत्र अर्हितमिति पदङ्गकारस्य व्यञ्जनस्य सङ्गाद्गर्हितमिति अन्यस्य रूपमापन्नं। तत्र व्यञ्जनसङ्गे विनिवृत्ते स्वरूपमापद्यते अर्हितमिति। अन्यवर्णसंक्रमेण भिन्नरूपस्य पदस्य तादूप्यविधिरिति तात्पर्यार्थः॥ एतेनेतरावपि व्याख्यातौ। पिण्डाक्षरभेदे स्वरूपलोपश्चूर्णम्॥ ७॥ पिण्डाक्षरभेदे सति पदस्य स्वरूपलोपश्चूर्णं॥ यथा, योऽचलकुलमवति चलं दूरसमुन्मुक्तशुक्तिमीनाङ्कान्तः। सालिं विभर्त्ति च सलिलं दूरसमुन्मुक्तशुक्तिमीनां कान्तः॥ अत्र शुक्तिपदे क्तीति पदं पिण्डाक्षरं। तस्य भेदे शुक्तिपदं लुप्यते ककारतिकारयोरन्यत्र संक्रमात्। दूरसमुन्मुक्तशुक् अचलकुलन्तिमीनां कान्तः समुद्रः। श्लोकाश्चात्र। अखण्डवर्णविन्यासचलनं शृङ्खला मता। अनेन खलु भङ्गेन यमकानां विचित्रता॥ यदन्यसङ्गमुत्सृज्य नेपथ्यमिव नर्त्तकः। शब्दस्वरूपमारोहेत् स ज्ञेयः परिवर्त्तकः॥ पिण्डाक्षरस्य भेदेन पूर्वापरपदाश्रयात्। वर्णयोः पदलोपो यः स भङ्गश्चूर्णसंज्ञकः॥ अप्राप्तभङ्गचूर्णानि यथास्थानस्थितान्यपि। अलकानीव नात्यर्थं यमकानि चकासति॥ विभक्तिपरिणामेन यत्र भङ्गः क्वचिद्भवेत्। न तदिच्छन्ति यमकं प्रायो यमककोविदाः॥ आरूढं भूयसा यत्तु पदं यमकभूमिकाम्। न युज्यते पुनस्तत्र युक्तानुप्रासकल्पना॥ विभक्तीनां विभक्तत्वं संख्यायाः कारकस्य च। आवृत्तिः सुप्तिङन्तानां मियश्च यमकाद्भुतम्॥ शेषः सरूपोऽनुप्रासः॥ ८॥

पदमेकार्थमनेकार्थं च अस्थाननियमेन तद्विधमक्षरं च श्लेषः। सरूपोऽन्येन प्रयुक्तेन तुल्यरूपोऽनुप्रासः। ननु श्लेषोऽनुप्रासइत्येतावदेव सूत्रं कस्मान्न कृतं आवृत्तिश्लेषोऽनुप्रासइत्येव हि व्याख्यास्यते। सत्यं सिध्यत्येव आवृत्तिश्लेषे किंत्वव्याप्तिप्रसङ्गः। विशेषार्थं च सरूपग्रहणं। कात्स्न्र्येनैवावृत्तिः, कात्स्न्र्यैकदेशाभ्यां च सारूप्यमिति। अनुल्वणो वर्णानुप्रासः श्रेयान् ॥१०॥ वर्णानामनुप्रासः स खल्वनुल्वणो लीनः श्रेयान्। यथा, क्वचिन्मसृणमांसलं क्वचिदतीवतारास्पदं प्रसन्नसुभगं मुहुः स्वरतरङ्गलीलाङ्कितम्। इदं हि तव वल्लकीरणितनिर्गमैर्गुम्फितं मनो मदयतीव मे किमपि साधुसङ्गीतकम्॥ उल्वणस्तु न श्रेयान्। यथा, वल्लीवद्धोर्द्धजूटोद्भटमटति रटत्कोटिकोदण्डदण्डः॥ पादानुप्रासः पादयमकवत् ॥११॥ ये पादयमकस्य भेदास्ते पादानुप्रासस्येत्यर्थः। तेषामुदाहरणानि यथा। कविराजमविज्ञाय कुतः काव्यक्रियादरः। कविराजं च विज्ञाय कुतः काव्यक्रियादरः॥ आखण्डयन्ति मुहुरामलकीफलानि बालानि बालकपिलोचनपिङ्गलानि॥ वस्त्रायन्ते नदीनां सितकुसुमधराः शक्रसङ्काशकाशाः काशाभा भान्ति तासां नवपुलिनगताः श्रीनदीहंसहंसाः। हंसाभाम्भोदमुक्तः स्फुरदमलरुचिर्मेदिनीचन्द्रचन्द्रः चन्द्राङ्कः शारदस्ते जयकृदुपनतो विद्विषां कालकालः॥ कुवलयदलश्यामा मेघा विहाय दिवङ्गताः कुवलयदलश्यामो निद्रां विमुञ्चति केशवः। कुवलयदलश्यामा श्यामालताद्य विजृम्भते कुवलयदलश्यामश्चन्द्रो नभः प्रविगाहते॥ एवमन्येऽपि द्रष्टव्याः। इति काव्यालङ्कारसूत्रवृत्तावालङ्कारिके चतुर्थेऽधिकरणे प्रथमोऽध्यायः शब्दालङ्कारविचारस्य॥ ४ ॥ १ ॥

संप्रत्यर्थालङ्काराणां प्रस्तावः तन्मूलञ्चोपमेति सैव विचार्यते॥ उपमानेनोपमेयस्य गुणलेशतः साम्यमुपमा ॥ १ ॥ उपमीयते सादृश्यमानीयते येनोत्कृष्टगुणेनान्यस्य यत्तदुपमानं। यदुपमीयते सादृश्यमानीयते यन्न्यूनगुणन्तदुपमेयं। उपमानेन उपमेयस्य गुणलेशतः साम्यं यदसावुपमेति। ननु चोपमानमित्युपमेयमिति च सम्बन्धिशब्दावेतौ तयोरेकतरोपादानेन चान्यतरसिद्धिरिति। यथा, उपमितं व्याघ्रादिभिः सामान्यप्रयोग

इत्यत्रोपमितग्रहणमेव कृतं नोपमानग्रहणमिति । तद्वदत्रोभयग्रहणं न कर्त्तव्यमिति। सत्यं तत् कृतं लोकप्रसिद्धिपरिग्रहार्थं । यदेवो-पमेयमुपमानञ्च लोकप्रसिद्धं तदेव परिगृह्यते नेतरत् । नहि यथा मुखं कमलमिवेति तथा कुमुदमिवेति भवति । गुणबाहुल्यतश्च कल्पिता ॥ २ ॥ गुणानां बाहुल्यं गुणबाहुल्यं तत उपमानोपमेययोः साम्यात्कल्पि-तोपमा कविभिः कल्पितत्वात्कल्पिता । पूर्वा तु लौकिकी । (ननु कल्पितायां लोकप्रसिद्ध्यभावात्कथमुपमानोपमेयनियमः । गुणबाहुल्य-स्योत्कर्षापकर्षकल्पनाभ्यां ।) तद्यथा, उद्‌गर्भहूणरमणीरमणोपमर्द्दभुग्नो-न्नतिस्तननिवेशनिभं हिमांशोः । बिम्बं कठोरबिसकाण्डकडारगौरैर्विष्णोः पदं प्रथममग्रकरैर्व्यनक्ति ॥ सद्योमुण्डितमत्तहूणचिबुकप्रस्पर्द्धि नारङ्गकम् ॥ अभिनवकुशसूचिस्पर्द्धि कर्णे शिरीषमिति । इदानीं प्लक्षाणाञ्जठरदल-विश्लेषचतुरः शिखानां माबन्धः स्फुरति शुकचञ्चुपुटनिभः । ततः क्षीणां हन्त प्रसमधरकान्तिं तुलयितुं समन्तादुद्भाति स्फुटसुभगरागं किसलयम् ॥ तद्‌द्वैविध्यं पदवाक्यार्थवृत्तिभेदात् ॥ ३ ॥ तस्या उपमाया द्वैविध्यं पदवाक्यार्थवृत्तिभेदात् एका पदार्थवृत्तिरन्या वाक्यार्थवृत्ति-रिति ॥ पदार्थवृत्तिर्यथा, हरति तनुषु बन्धु मुग्धविविक्तासु यासां कनककणस-धर्मा मान्मथो रोमभेदः ॥ वाक्यार्थवृत्तिर्यथा ॥ पाण्ड्योऽयमंसार्पित-लम्बहारः कॢप्ताङ्गरागो हरिचन्दनेन । आभाति बालातपरक्तसानुः सनिर्झरो-द्गार इवाद्रिराजः ॥ सा पूर्णा लुप्ता च ॥४॥ सा उपमा पूर्णा लुप्ता च भवति । गुणद्योतकोपमानोपमेयशब्दानां सामग्र्ये पूर्णा ॥५॥ गुणादिशब्दानां सामग्र्ये साकल्ये पूर्णा यथा । कमलमिव मुखं मनोज्ञमेतदिति ॥ लोपे लुप्ता ६॥गुणादि शब्दानां लोपे वैकल्ये लुप्ता । गुणशब्दलोपे यथा, शशीव राजेति । द्योतक-शब्दलोपे यथा, दूर्वाश्यामेयमिति । उभयशब्दलोपे यथा, शशिमुखीति ॥ उपमानोपमेयलोपस्तूपमाप्रपञ्चे द्रष्टव्यः ॥ स्तुतिनिन्दातत्त्वाख्यानेषु ॥ ७ ॥ स्तुतौ निन्दायाञ्च तत्त्वाख्याने चास्याः प्रयोगः । स्तुतिनिन्दयोर्यथा, स्निग्धं भवत्यमृतकल्पमहो कलत्रं हालाहलं विषमिवापगुणं तदेव ॥ तत्त्वाख्याने

यथा, तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले। यस्तन्वि तारकान्यासः शकटाकारमाश्रितः॥ हीनत्वाधिकत्वलिङ्गवचनभेदासादृश्यासम्भवास्तद्दोषाः॥८॥ तस्या उपमाया दोषा भवन्ति हीनत्वं अधिकत्वं लिङ्गभेदो वचनभेदः असादृश्यमसम्भव इति॥ तान् क्रमेण व्याख्यातुमाह। जातिप्रमाणधर्मन्यूनतोपमानस्य हीनत्वम्॥९॥ जात्या प्रमाणेन धर्मेण चोपमानस्य न्यूनता या तद्धीनत्वमिति। जातिन्यूनत्वरूपं हीनत्वं यथा। चाण्डालैरिव युष्माभिः साहसं परमं कृतं॥ प्रमाणन्यूनत्वरूपं हीनत्वं यथा। वह्निस्फुलिङ्ग इव भासुरयं चकास्ति॥ उपमेयादुपमानस्य धर्मतो न्यूनत्वं तद्धर्मन्यूनत्वं यथा। स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन्। व्यरोचन्नीलजीमूतभागाश्लिष्ट इवांशुमान्॥ अत्र मौञ्जीप्रतिवस्तु तड़ित् नास्त्युपमानमिति हीनत्वं, न च कृष्णाजिनपटसात्म्योपमेयत्वं युक्तं मौञ्ज्या व्यर्थत्वप्रसङ्गात्। ननु नीलजीमूतग्रहणेनैव तड़ित् प्रतिपाद्यते, तन्न व्यभिचारात्। अव्यभिचारे तु सम्भवन्ती प्रतिपत्तिः केन वार्यते॥ तदाह॥ धर्मयोरेकनिर्देशेऽन्यस्य संवित् साहचर्यात्॥१०॥ धर्मयोरेकस्यापि, धर्मस्य निर्देशेऽन्यस्य धर्मस्य सम्वित् प्रतिपत्तिर्भवति। कुतः साहचर्यात् सहचरितत्वेन प्रसिद्धयोरवश्यमेकतरनिर्देशेऽन्यतरप्रतिपत्तिः॥ तद्यथा, निष्टप्टेऽपि वह्निर्धने न विरमत्यन्तर्जरद्वेश्मनो लूतातन्तुततिच्छिदो मधुपृषत्पिङ्गाः पयोविन्दवः। चूड़ावर्वरकेो निपत्य कणिकाभावेन जाताः शिशोरङ्गास्फालनभग्ननिद्ररटद्गेहिणीचित्तव्यथादायिनः॥ अत्र मधुपृषतां उष्णत्वपिङ्गत्वे सहचरिते तत्र पिङ्गशब्देन पिङ्गत्वे प्रतिपन्ने उष्णत्वप्रतिपत्तिर्भवति। एतेन, कनकफलकचतुरस्रं श्रोणिविम्बमिति व्याख्यातं॥ कनकफलकस्य गौरत्वचतुरस्रत्वयोः साहचर्यात् चतुरस्रत्वश्रुत्यैव गौरत्वप्रतिपत्तिरिति। ननु च यदि धर्मन्यूनत्वमुपमानस्य दोषः, कथमयं प्रयोगः। सूर्यांशुसंमीलितलोचनेषु दिनेषु पद्मानिलनिर्मलेषु। साध्व्यः स्वगेहेष्विव भर्तृहीनाः केका विनेशुः शिखिनां मुखेषु॥ अत्र बहुत्वमुपमेयधर्माणामुपमानतः न विशिष्टानामेव मुखानामुपमेयत्वात्।

ताहश्येव फेकाविनाभस्य सम्भवात्॥ अतो न धर्मात् न्यूनत्वमुपमानस्येति।
तेनाधिकत्वं व्याख्यातं ॥११॥ तेन हीनत्वेनाधिकत्वं व्याख्यातं, जाति
प्रमाणधर्माधिकत्वमधिकत्वमिति ॥ जात्याधिकत्वरूपमधिकत्वं यथा। विप्रन्तु
दृष्णुयः श्रीमं रुद्रा इव महौजसः ॥ प्रमाणाधिकत्वरूपं यथा। पातालमिव
नाभिस्ते स्तनौ क्षितिधरोपमौ। वेणीदण्डः पुनरयं कालिन्दीपातसन्निभः॥
धर्माधिकत्वरूपं यथा। सरश्मि चञ्चलं चक्रं दधद्देवो व्यराजत। सवाड़वाग्निः
सावर्त्तः स्रोतसामिव नायकः॥ सवाड़वाग्निरित्यस्योपमेयत्वाभावाद्धर्मा-
धिकत्वमिति। अनयोर्दोषयो र्विपर्ययाख्यस्य दोषस्यान्तर्भावात् न पृथगुपा-
दानं। अत एवास्माकं मते षड् दोषा इति॥ उपमानोपमेययो र्लिङ्ग-
व्यत्यासो लिङ्गभेदः॥१२॥ उपमानस्योपमेयस्य च लिङ्गयो र्व्यत्यासो विपर्ययो
लिङ्गभेदः॥ यथा, सैन्यानि नद्य इव जग्मु रनर्गलानि॥ इष्टः पुंनपुंसकयोः
प्रायेण॥१३॥ पुंनपुंसकयो रुपमानोपमेययो र्लिङ्गभेदः प्रायेण वाङ्ल्येनेष्टः॥
यथा, चन्द्रमिव मुखं पश्यतीति। इन्दुरिव मुखं भातीत्येवमाद्यं तु नेच्छन्ति।
लौकिक्यां समासाभिहितायामुपमाप्रपञ्चे च॥१४॥ लौकिक्यामुपमायां
समासाभिहितायां चोपमाया मुपमाप्रपञ्चे चेष्टो लिङ्गभेदः प्रायेणेति॥
लौकिक्यां यथा। छायेव सा तस्य, पुरुषइव स्त्रीति। समासाभिहितायां
यथा। भुजलता नीलोत्पलसदृशीति॥ उपमाप्रपञ्चे यथा, शुद्धान्तदुर्लभ-
मिदं वपुराश्रमवासिनो यदि जनस्य। दूरीकृताः खलु गुणैरुद्यानलता
वनलताभिः॥ एवमन्यदपि प्रयोगजातं द्रष्टव्यं। तेन वचनभेदो व्याख्यातः
॥१५॥ तेन लिङ्गभेदेन वचनभेदो व्याख्यातः। यथा, पश्यामि लोचने
तस्याः पुष्पं पुष्पलिहो यथा॥ अप्रतीतगुणसादृश्यमसादृश्यम्॥१६॥
अप्रतीतैरेव गुणै र्यत् सादृश्यं तदप्रतीतगुणसादृश्यमसादृश्यं यथा। ग्रथ्नामि
काव्यशशिनं विततार्थरश्मिं॥ काव्यस्य शशिना सह यत् सादृश्यं तदप्रतीतै-
रेव गुणैरिति। ननु चार्थानां रश्मितुल्यत्वे सति काव्यस्य शशितुल्यत्वं
भविष्यतीति। मैवं। काव्यस्य शशितुल्यत्वे सिद्धे अर्थानां रश्मितुल्यत्वं
सिध्यति, न चार्थानां रश्मीनां च कश्चित् सादृश्यहेतुः प्रतीतो गुणोऽस्ति

तदेवमितरेतराश्रयदोषो दुस्तर इति॥ असादृश्यहता ह्युपमा तन्निष्ठाश्च कवयः॥ १७॥ असादृश्येन हता असादृश्यहता उपमा तन्निष्ठा उपमाननिष्ठाश्च कवय इति। उपमानाधिक्यात्तदपोह इत्येके॥ १८॥ उपमानाधिक्यात्तस्यासादृश्यस्यापोह इत्येके मन्यन्ते। यथा। कर्पूरहारहरहाससितं यशस्ते॥ कर्पूरादिभिरुपमानै र्बहुभि र्यशसः सादृश्यं संस्थापितं भवति तेषां शुक्लगुणातिरेकात्॥ नापुष्टार्थत्वात्॥१९॥ उपमानाधिक्यात्तदपोह इति यदुक्तं तन्न। अपुष्टार्थत्वात्। एकस्मिन्नुपमाने प्रयुक्ते उपमानानन्तरप्रयोगो न कञ्चिदर्थविशेषं पुष्णाति॥ तेन बलसिन्धुः सिन्धुरिव क्षुभित इति प्रयुक्तं॥ ननु सिन्धुशब्दस्य द्विः प्रयोगत्वात् पौनरुक्त्यं, न अर्थविशेषात्। बलं सिन्धुरिव वैपुल्याद्बलसिन्धुः सिन्धुरिव क्षुभित इति क्षोभसारूप्यं तस्मादर्थभेदान्न पौनरुक्त्यम्। अर्थपुष्टिस्तु नास्ति सिन्धुरिव क्षुभित इत्यनेनैव वैपुल्यं प्रतिपत्स्यते। उक्तं हि। धर्मयोरेकनिर्द्देशेऽन्यस्य संवित् साहचर्यात्॥ अनुपपत्ति रसम्भवः॥ २०॥ अनुपपत्ति रनुपपन्नत्वमुपमानस्यासम्भवः॥ यथा, चकास्ति वदने तस्याः स्मितच्छाया विकाशिनि। उन्निद्रस्यारविन्दस्य मध्ये मुग्धेव चन्द्रिका॥ चन्द्रिकायां उन्निद्रत्वमरविन्दस्येत्यनुपपत्तिः। नन्वर्थविरोधोऽयमस्तु किमुपमादोषकल्पनया। नोपमायामतिशयस्येष्टत्वात्। कथं तर्हि दोषः। न विरुद्धोऽतिशयः॥ २१॥ विरुद्धस्यातिशयस्य संग्रहो न कर्त्तव्य इत्यस्य सूत्रस्य तात्पर्य्यार्थः। तानेतान् षड् दोषानुपमायाः ज्ञात्वा कविः परित्यजेत्॥ इति काव्यालङ्कारसूत्रवृत्तौ चतुर्थेऽधिकरणे द्वितीयोऽध्याय उपमाविचारः॥ ४॥ २॥

सम्प्रत्युपमाप्रपञ्चो विचार्यते॥ कः पुनरसावाह। प्रतिवस्तुप्रभृतिरुपमाप्रपञ्चः॥ १॥ प्रतिवस्तु प्रभृति र्यस्येति स प्रतिवस्तुप्रभृतिः, उपमायाः प्रपञ्च उपमाप्रपञ्च इति। वाक्यार्थोपमायाः प्रतिवस्तुनो भेदं दर्शयितु माह॥ उपमेयस्योक्तौ समानवस्तुन्यासः प्रतिवस्तु॥ २॥ समानं वस्तु वाक्यार्थस्तस्य न्यासः समानवस्तुन्यासः, उपमेयस्यार्था-

वाक्यार्थस्योक्तौ सत्यामिति । अत्र द्वौ वाक्यार्थौ एको वाक्यार्थ
उपमायामिति भेदः ॥ तद्यथा, देवीभावं गमिता परिवारपदं कथं
भजत्येषा । न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नं ॥ प्रतिवस्तुनः
समासोक्तेर्भेदं दर्शयितुमाह । अनुक्तौ समासोक्तिः ॥ ३ ॥ उपमानस्यानुक्तौ
समानवस्तुन्यासः समासोक्तिः । संक्षेपवचनात् समासोक्तिरित्याख्या ।
यथा । श्लाघ्या धूमाधूमग्लानेः करीरस्य मरौ स्थितिः ॥ धिङ् मेरौ कल्प-
वृक्षाणामनुत्पन्नार्थिनां श्रियम् ॥ समासोक्तेरप्रस्तुतप्रशंसाया भेदं दर्शयितु-
माह ॥ किञ्चिदुक्तावप्रस्तुतप्रशंसा ॥ ४ ॥ उपमेयस्य किञ्चिल्लिङ्गमात्रेणोक्तौ
समानवस्तुन्यासोऽप्रस्तुतप्रशंसा ॥ यथा । लावण्यसिन्धुरपरैव हि केयमत्र
यत्रोत्पलानि शशिना सह संप्लवन्ते । उन्मज्जति द्विरदकुम्भतटी च यत्र
यत्रापरे कदलिकाण्डमृणालदण्डाः ॥ अप्रस्तुतस्यार्थस्य प्रशंसनमप्रस्तुत
प्रशंसा । अपह्नुतिरपि ततो भिन्नेति दर्शयितुमाह । समेन वस्तुना-
न्यापलापोऽपह्नुतिः ॥५॥ समेन तुल्येन वस्तुना वाक्यार्थेनान्यस्य वाक्यार्थ-
स्यापलापो निह्नवो य स्तत्त्वाध्यारोपेणासावपह्नुतिः ॥ यथा, न केत-
कीनां विलसन्ति सूचयः प्रवासिनो हन्त हसत्ययं विधिः । तडिल्लतेयं न
चकास्ति चञ्चला पुरः स्मरज्योतिरिदं प्रवर्त्तते ॥ वाक्यार्थयोस्तात्-
पर्यात् तादूप्यमिति न रूपकं । रूपकं तु कीदृश मित्याह ॥ उपमानो-
पमेयस्य गुणसाम्यात् तत्त्वारोपो रूपकम् ॥ ६ ॥ उपमानेनोपमेयस्य
गुणसाम्यात् तत्त्वस्याभेदस्यारोपणमारोपः रूपकं । उपमानोपमेययो रुभयो
रपि ग्रहणं लौकिकयोः कल्पितायाश्चोपमायाः प्रकृतित्वमत्र यथा विज्ञा-
यत इति ॥ यथा, इयं गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयोरसावस्याः स्पर्शो
वपुषि बहलश्चन्दनरसः । अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥ मुखचन्द्रादीनां तूपमासमा-
सात् न चन्द्रादीनां रूपकत्वं युक्तमिति । रूपकाच्छ्लेषस्य भेदं दर्शयितु-
माह । सधर्मेषु तन्त्रप्रयोगे श्लेषः ॥ ७ ॥ उपमानेनोपमेयस्य धर्मेषु गुण-
क्रियाशब्दरूपेषु न तन्त्रारोपस्तन्त्रप्रयोगे तन्त्रेणोच्चारणे सति श्लेषः ।

यथा। आकृष्टामलमण्डलाग्ररुचयः सन्नद्धवक्षःस्थलाः सोष्माणो व्रणिता विपक्षहृदयप्रोन्माथिनः कर्कशाः। उद्वृत्ता गुरवश्च यस्य शमिनः श्यामायमानानना योधा वारवधूस्तनाश्च न दधुः क्षोभं स वोऽव्याज्जिनः॥ यथा च गौणस्यार्थस्यालङ्कारत्वं तथा लाक्षणिकस्यापीति दर्शयितुमाह॥ सादृश्याल्लक्षणा वक्रोक्तिः॥ ८॥ बहूनि हि निबन्धनानि लक्षणायां। तत्र सादृश्यात् लक्षणा वक्रोक्तिरसाविति। यथा। उन्मिमील कमलं सरसीनां कैरवञ्च निमिमील मुहूर्तात्॥ अत्र नेत्रधर्मावुन्मीलननिमीलने सादृश्याद्विकाशसङ्कोचौ लक्षयतः॥ इह च निरन्तरनवमुकुलपुलकिता हरति माधवी हृदयं। मदयति च केशराणां परिणतमधुगन्धि निःश्वसितं॥ अत्र निःश्वसितमिति परिमलनिर्गमं लक्षयति। हंस्यानेन स्फुरतु सुभगः स्वर्गिणा चुम्बितुं यां॥ आलस्यमालिङ्गति गात्रमस्याः॥ परिम्लानच्छाया मनुवदति दृष्टिः कमलिनीं॥ मत्तत्रपेषु स्फुटितकमलामोदमैत्रीकषायः॥ ऊरुद्वन्द्वं तरुणकदलीकाण्डसब्रह्मचारि॥ इत्येवमादिषु लक्षणार्थो निरूप्यत इति। लक्षणायां झटित्यर्थप्रतिपत्तिक्षमत्वं रहस्यमाचक्षते। असादृश्यनिबन्धना लक्षणा न वक्रोक्तिः। यथा, जरठकमलकन्दच्छेदगौरैर्मयूखैः। अत्र छेदः सामीप्यात् द्रव्यं लक्षयति, तस्यैव गौरत्वोपपत्तेः। रूपकवक्रोक्तिभ्यामुत्प्रेक्षाया भेदं दर्शयितुमाह। अतद्रूपस्यान्यथाध्यवसानमतिशयार्थमुत्प्रेक्षा॥ ९॥ अतद्रूपस्यातत्स्वभावस्यान्यथा अतत्स्वभावतया अध्यवसानं अध्यवसायः। न पुनरध्यारोपो लक्षणा वा। अतिशयार्थमिति च भ्रान्तिज्ञाननिवृत्त्यर्थं॥ सादृश्यादियमुत्प्रेक्षेति। एनाञ्चेवादिशब्दा द्योतयन्ति। यथा। स वः पायादिन्दुर्नवबिसलताकोटिकुटिलः स्मरारेर्यो मूर्ध्नि ज्वलनकपिशे भाति निहितः। स्रवन्मन्दाकिन्याः प्रतिदिवससिक्तेन पयसा कपालेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इव॥ उत्प्रेक्षैवातिशयोक्तिरिति केचित्तन्निरासार्थमाह॥ संभाव्यधर्मस्य तदुत्कर्षकल्पनातिशयोक्तिः॥ १०॥ संभाव्यस्य धर्मस्य तदुत्कर्षस्य च कल्पनातिशयोक्तिः। यथा, उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेतां। तदोपमीयेत तमालनीलमा-

मुक्तमुक्तालतमग्र वचः॥ यथा वा, मलयजरसविलिप्ततनवो नवहार-
लताविभूषिताः सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः। शशभृति
विततधाम्नि धवलयति धरामविभाव्यतां गताः प्रियवसतिं प्रयान्ति
सुखमेव निरस्तभियोऽभिसारिकाः॥ यथा भ्रान्तिज्ञानस्वरूपोत्प्रेक्षा
तथा संशयज्ञानस्वरूपः सन्देहोऽपीति दर्शयितुमाह। उपमानोपमेय-
संशयः सन्देहः॥ ११॥ उपमानोपमेययोरतिशयार्थं यः क्रियते संशयः
स सन्देहः॥ यथा। इदं कर्णोत्पलं चक्षुरिदं वेति विलासिनि। न
निश्चिनोति हृदयं किन्तु दोलायते मनः॥ सन्देहवद्विरोधोऽपि मात्रा-
वसर इत्याह॥ विरुद्धाभासत्वं विरोधः॥ १२॥ अर्थस्य विरुद्धस्येवाभासत्वं
विरुद्धाभासत्वं॥ यथा, पीतं पानमिदं त्वयाद्य दयिते मत्तं ममेदं मनः
पत्राली तव कुङ्कुमेन रचिता रक्ता वयं मानिनि। त्वं तुङ्गस्तनभारमन्थर-
गति र्गात्रेषु मे वेपथुः स्तन्वङ्गे तनुता ममाधृतिरहो मारस्य चित्रा गतिः॥
यथावा, सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः सा पीनोन्नतिमत्
पयोधरयुगं धत्ते सखेदा वयं। साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न
शक्ता वयं दोषैरन्यजनाश्रयैरपटवो जाताः स्म इत्यद्भुतं॥ विरोधाद्विभा-
वनाया भेदं दर्शयितुमाह॥ क्रियाप्रतिषेधे प्रसिद्धतत्फलव्यक्ति र्विभावना
॥ १३॥ क्रियायाः प्रतिषेधे तस्या एव क्रियायाः फलस्य प्रसिद्धस्य
व्यक्ति र्विभावना। अप्यसज्जनसाङ्गत्ये न वसत्येव वैकृतं। अक्षालित-
विशुद्धेषु हृदयेषु मनीषिणां॥ विरोधप्रसङ्गेनानन्वयं दर्शयितुमाह।
एकस्योपमेयत्वोपमानत्वेऽनन्वयः॥ १४॥ एकस्यैवार्थस्योपमेयत्वमुपमा-
नत्वं चानन्वयः। यथा। रामरावणयो र्युद्धं रामरावणयोरिव। गगनं
गगनाकारं सागरः सागरोपमः॥ अनन्यसादृश्यमेतेन प्रतिपादितं॥
क्रमेणोपमेयोपमा॥ १५॥ एकस्यैवार्थस्योपमेयत्वमुपमानत्वं च क्रमेणोप-
मेयोपमा। यथा, खमिव जलं जलमिव खं हंस इव शशी शशीव हंसोऽयं।
कुमुदाकारास्तारास्ताराकाराणि कुमुदानि॥ इयमेव परिवृत्तिरित्येके
तन्निरासार्थमाह। समविसदृशाभ्यां परिवर्त्तनं परिवृत्तिः॥ १६॥ समेन

विसदृशेन चार्थस्य परिवर्त्तनं परिवृत्तिः। यथा, आदाय कर्णकिशलय-मियमस्मै चरणमरुणमर्पयति। उभयोः सदृशविनिमयादन्योन्यमवञ्चितं मन्ये॥ यथा वा, विहाय सा हारमहार्यनिश्चया विलोलदृष्टिः प्रविलुप्तचन्दनं। बबन्ध बालारुणबभ्रु वल्कलं पयोधरोत्सेधविशीर्णसंहति॥ उपमेयोपमायाः क्रमो भिन्न इति दर्शयितुमाह। उपमेयोपमानानां क्रमसंबन्धः क्रमः॥ १७॥ उपमेयानामुपमानानां चोद्देशिनामनुद्देशिनां च क्रमेण संबन्धः क्रमः। यथा, तस्याः प्रफुल्ललीलाभिरालापस्मितदृष्टिभिः। जीयन्ते वल्लकीकुन्दकुसुमेन्दीवरस्रजः॥ संबन्धप्रसङ्गेनैव दीपकं दर्शयितुमाह॥ उपमानोपमेयवाक्येष्वेका क्रिया दीपकम्॥ १८॥ उपमानवाक्येषु उपमेयवाक्येषु च एका क्रियानुषङ्गतः संबध्यमाना दीपकं॥ तत्त्रिविधमादिमध्यान्तवाक्यवृत्तिभेदात्॥ १९॥ तत्त्रिविधं भवति आदिमध्यान्तेषु वाक्येषु वृत्तेर्भेदात्॥ यथा, भूषयन्ते प्रमदवनानि बालपुष्पैः कामिन्यो मधुमदमांसलैर्विलासैः। ब्रह्माणः श्रुतिगदितैः क्रियाकलापै राजानो विरलितवैरिभिः प्रतापैः॥ वाष्पः पथिककान्तानां जलं जलमुचां मुहुः। विगलत्यधुना दण्डयात्रोद्योगो महीभुजां॥ गुरुशुश्रूषया बुद्धिं मधुगोष्ठ्या मनोभवः। उदयेन शशाङ्कस्य पयोराशिर्विवर्द्धते॥ दीपकवन्निदर्शनमपि संक्षिप्तमित्याह। क्रिययैव स्वतदर्थान्वयख्यापनं निदर्शनं॥ २०॥ क्रिययैव शुद्धया स्वस्यात्मनस्तदर्थस्य चान्वयस्य संबन्धस्य ख्यापनं संवृद्धिहेतुदृष्टान्तभागं निदर्शनं॥ यथा, अतुच्छपदाधायः पतनायेत्यर्थशालिनां शंसत्। आपाण्डु पतति पत्रं तरोरिदं बन्धनग्रन्थ्यः॥ पततीति क्रिया तस्याः स्वं पतनं तदर्थोऽतुच्छपदाधायः पतनायेति शंसनं तस्य ख्यापनं अर्थशालिनां शंसदिति। इदश्च नार्थान्तरन्यासः। स ह्यन्यथाभूतस्तमाह॥ उक्तसिद्ध्यै वस्तुनोऽर्थान्तरस्यैव न्यसनमर्थान्तरन्यासः॥ २१॥ उक्तसिद्ध्यै उक्तस्यार्थस्य सिद्ध्यर्थं वस्तुनो वाक्यार्थान्तरस्यैव न्यसनमर्थान्तरन्यासः॥ वस्तुग्रहणादर्थस्य हेतोर्न्यसनं नार्थान्तरन्यासः॥ इह नातिदूरगोचरमस्ति सरः कमलसौ-

गन्धग्रात्॥ अर्थान्तरस्यैवेति वचनम् यत्र हेतु र्व्याप्तिगूढत्वात् कथञ्चित् प्रतीयते तत्र यथा यत्रात्॥ यद् यत् कृतकं तत्तदनित्यं इत्येवं प्रायेषु माभूदिति। अत्रोदाहरणं। प्रियेण संग्रथ्य विपक्षसन्निधावुपाहितां वक्षसि पीवरस्तने। स्रजं न काचिद्विजहौ जलाविलां वसन्ति हि प्रेम्णि गुणा न वस्तुनि॥ अर्थान्तरन्यासस्य हेतुरूपत्वात् हेतोश्चान्वयव्यतिरेकात्मकत्वात् न पृथग् व्यतिरेक इति केचित्। तन्निरासार्थमाह॥ उपमेयस्य गुणातिरेकत्वं व्यतिरेकः॥ २२॥ उपमेयस्य गुणातिरेकत्वं गुणाधिक्यं यत् अर्थादुपमानात् स व्यतिरेकः॥ यथा। सततं हरिणश्यामाघया: प्रसन्नसुभगं मुखं। समानं शशिनः किन्तु स कलङ्कविडम्बितः कश्चिद्गम्यमानगुणो व्यतिरेकः। यथा॥ कुवलयवनं प्रत्याख्यातं, नवं मधु निन्दितं, हसितममृतं, भग्नं स्वादोः पदं रससम्पदः। विषमुपहितं चिन्ताव्याजात् मनसोऽपि कामिनाश्चतुरमधुरे लीलातन्त्रे स्तवाङ्क विलोकिते॥ व्यतिरेकाद्विशेषोक्तेर्भेदं दर्शयितुमाह। एकगुणहानि कल्पनायां साम्यदार्ढ्यं विशेषोक्तिः॥ २३॥ एकस्य गुणस्य हानेः कल्पनायां शेषैर्गुणैः साम्यं यत्र तस्य दार्ढ्यं विशेषोक्तिः रूपकं चेदं प्रायेणेति। यथा। भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः॥ द्यूतं हि नाम पुरुषस्यासिंहासनं राज्यं॥ इयमकमला लक्ष्मीः, हस्ती हि जङ्गमं दुर्गमिति॥ अत्रापि जङ्गमशब्दस्य स्थावरत्वनिवृत्तिप्रतिपादनपरत्वादेकगुणहानिकल्पनैव। एतेन वेश्या हि नाम मूर्तिमत्येव निकृतिः॥ व्यसनं हि नाम सोच्छ्वासं मरणम्। द्विजो भूमिबृहस्पतिरित्येव मादिष्वेकगुणहानिकल्पना व्याख्याता। व्यतिरेकविशेषोक्तिभ्यां व्याजस्तुतिं भिन्नां दर्शयितुमाह॥ सम्भाव्यविशिष्टकर्माकरणान्निन्दास्तोत्रार्थं व्याजस्तुतिः॥ २४॥ अत्यन्तगुणाधिको विशिष्टस्तस्य च कर्म विशिष्टकर्म तस्य सम्भाव्यस्य कर्तुं शक्यस्याकरणान्निन्दाविशिष्टसाम्यसम्पादनेन स्तोत्रार्थं व्याजस्तुतिः॥ यथा, बबन्ध सिन्धुं गिरिचक्रवाले विभेद सप्तैकशरेण तालान्। एवंविधं कर्म ततान रामस्त्वया कृतं तन्न मुधैव गर्वः॥ व्याजस्तुतेर्व्याजोक्तिं भिन्नां दर्शयितुमाह॥

व्याजस्य सत्यसारूप्यं व्याजोक्तिः ॥ २५ ॥ व्याजस्य छद्मनः सत्येन सारूप्यं व्याजोक्तिं यां मायोक्तिमित्याहुः ॥ यथा, शरच्चन्द्रांशुगौरेण वाताविद्धेन भाविनि। काशपुष्पलवेनेदं साश्रुपातं मुखं कृतम् ॥ व्याजस्तुतेः पृथक् तुल्ययोगितेत्याह ॥ विशिष्टेन साम्यार्थमेककालक्रियायोगस्तुल्ययोगिता ॥ २६ ॥ विशिष्टेन न्यूनस्य साम्यार्थमेककालायां क्रियायां योगस्तुल्ययोगिता। यथा, जलनिधिरशनामिमां धरित्रीं वहति भुजगविभु र्भवद्भुजश्च ॥ उपमानाक्षेपश्चाक्षेपः ॥ २७ ॥ उपमानस्याक्षेपः प्रतिषेधः उपमानाक्षेपः तुल्यकार्यार्थस्य नैरर्थक्यविवक्षायां। यथा, तस्याश्चेन्मुखमस्ति सौम्यसुभगं किं पार्वणेनेन्दुना, सौन्दर्यस्य पदं दृशौ च यदि चेत् किं नाम नीलोत्पलैः। किं वा कोमलकान्तिभिः किसलयैः सत्येव तत्राधरे, हा धातुः पुनरुक्तवस्तुरचनारम्भेष्वपूर्वो ग्रहः ॥ उपमानस्याक्षेपतः प्रतिपत्तिरित्यपि सूत्रार्थः। यथा, ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम्। प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं ततान ॥ अत्र शरद्वेश्येव, इन्दुं नायकमिव, रवेः प्रतिनायकस्येवेत्युपमानानि गम्यन्त इति। तुल्ययोगितायाः सहोक्तेर्भेदमाह ॥ वस्तुद्वयक्रिययोस्तुल्यकालयोरेकपदाभिधानं सहोक्तिः ॥ २८ ॥ वस्तुद्वयक्रिययोस्तुल्यकालयोरेकेन पदेनाभिधानं सहार्थशब्दसामर्थ्यात् सहोक्तिः ॥ यथा, अस्तं भास्वान् प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि। अत्रार्थयो र्न्यूनत्वविशिष्टत्वे न स्त इति न तुल्ययोगितेति। समाहितमेकमवशिष्यते तल्लक्षणार्थमाह ॥ यत्सादृश्यं तत्सम्पत्तिः समाहितम् ॥ २९ ॥ यस्य वस्तुनः सादृश्यं गृह्यते तस्य वस्तुनः सम्पत्तिः समाहितम् ॥ यथा, तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः, शून्येवाभरणैः स्वकालविरहाद्विश्रान्तपुष्पोद्गमा। चिन्तामौनमिवास्थिता मधुलिहां शब्दै र्विना लक्ष्यते, चण्डी मामवधूय पादपतितं जातानुतापेव सा ॥ अत्र पुरूरवसो मतावुर्वश्याः सादृश्यं गृह्णतः सैव लतोर्वशी सम्पन्नेति। एते चालङ्काराः शुद्धा मिश्राश्च प्रयोक्तव्या इति। विशिष्टानामलङ्काराणां मिश्रत्वं संसृष्टिरित्याह ॥ अलङ्कारस्यालङ्कारयोनित्वं संसृष्टिः ॥

ऽपि व्याख्याता: ॥ अतिप्रयुक्तं देशभाषापदम्॥ १३ ॥ अतीव कविभि: प्रयुक्तं अतिप्रयुक्तं देशभाषापदं प्रयोज्यम्॥ यथा, योषिदित्यभिललाष न हालामित्यत्र हालेति देशभाषापदम्। अनतिप्रयुक्तं तु न प्रयोज्यम्। यथा, कङ्केल्लीकाननालीरविरलविलसत्पल्लवा नर्त्तयन्ति॥ इत्यत्र कङ्केल्लीपदम्। लिङ्गाध्याहारौ॥ १४॥ लिङ्गस्याध्याहारस्य लिङ्गाध्याहारावतिप्रयुक्तौ प्रयोज्याविति। लिङ्गं यथा, वत्से मा वक्ष्व नि:श्वसी: कुरु सुरागण्डूषमेकं शनैरित्यादिषु गण्डूषशब्द: पुंसि भूयसा प्रयुक्तो न स्त्रिया-म्नातोऽपि क्लीवे। अध्याहारो यथा, मा भवन्तमनल: पवनो वा वारणो मदकर: परशुर्वा। वह्निनीजलभर: कुलिशं वा स्वस्ति तेऽस्तु लतया सह वृच॥ अत्र त्वधाक्षीदित्यादीनामध्याहारोऽयं प्रयुक्त इति॥ लक्षणाशब्दाश्च॥ १५॥ लक्षणाशब्दाश्चातिप्रयुक्ता: प्रयोज्या:। यथा, द्विरेफरथचरणशब्दौ भ्रमरचक्रवाकार्थौ लक्षणापरौ॥ अनतिप्रयुक्ताश्च न प्रयोक्तव्या:। यथा, द्विक: काक इति॥ न तद्बाहुल्यमेकत्र॥ १६॥ तेषां लक्षणाशब्दानां बाहुल्यमेकस्मिन् वाक्ये न प्रयोक्तव्यम्। वाक्ये तत्त्वैकस्या-वाचकस्य वाचकवद्भाव: कर्त्तुं शक्यो न बहूनामिति॥ स्तनादीनां द्वित्वाविष्टा जाति: प्रायेण॥ १७॥ स्तनादीनां द्वित्वाविष्टा द्वित्वाध्यासिता जाति: प्रायेण बाहुल्येन। यथा, स्तनयोस्तरुणीजनस्येति। प्रायेणेतिवचनात् क्वचिन्न भवति। यथा, स्त्रीणां चक्षुरिति॥ अथ कथं द्वित्वाविष्टत्वं जाते:, तद्धि द्रव्ये न जातौ अतद्रूपत्वात् जाते:। न दोष: तद्-तद्रूपत्वात् जाते:। कथं तदतद्रूपत्वं जाते:॥ तद्धि जैमिनीया जानन्ति। वयं तु लक्ष्यसिद्धौ सिद्धपरमतानुवादिन:॥ न चैवमतिप्रसङ्ग:। लक्ष्यानुसारित्वात् न्यायस्य। एवमन्यापि व्यवस्थाप्यूह्या॥ इति काव्यालङ्कार-सूत्रवृत्तौ प्रायोगिके पञ्चमेऽधिकरणे प्रथमोऽध्याय: काव्यसमय:॥

साम्प्रतं शब्दशुद्धिरुच्यते इत्याह। रुद्रावितेरकशेषोऽनुन्यः॥ १॥ रुद्रावित्यत्र प्रयोगे एकशेषोऽन्वेष्य: अनुपपन्न:॥ रुद्रश्च रुद्राणी चेति पुमान् स्त्रियेत्येकशेष: स च न प्राप्नोति। तत्र हि तल्लक्षणश्चेदेव विशेष

इत्यनुवर्त्तते॥ तत्रैवकारकरणात् स्त्रीपुंसक्रत एव विशेषो भवतीति व्यवस्थितम्। अत्र तु पुंयोगादाख्यायामिति विशेषान्तरमप्यस्तीति। तेनेन्द्री भवौ इत्यादयः प्रयोगाः प्रत्युक्ताः॥ मिलिक्लविचिपिप्रभृतीनां धातुत्वं धातुगणस्यासमाप्तेः॥ २॥ मिलति विक्लवति चपयतीत्यादयः प्रयोगाः। तत्र मिलिक्लविचपिप्रभृतीनां कथं धातुत्वं गणपाठे गणपरिपठितानामेव धातुसंज्ञाविधानात्। तत्राह धातुगणस्यासमाप्तेः। वर्द्धते धातुगण इति हि शब्दविद आचक्षते। तेनैषां गणपाठोऽनुमतः शिष्टप्रयोगादिति॥ चलेरात्मनेपदमनित्यं ज्ञापकात्॥ ३॥ चलेरनुदात्तेत्त्वादात्मनेपदं यत् तदनित्यं दृश्यते लज्जालोलं चलतीत्यादिप्रयोगेषु। तत्कथमित्याह ज्ञापकात्। किं पुनस्तत् ज्ञापकम् अत आह॥ चक्षिङोऽनुबन्धकरणम्॥४॥ चक्षिङ इकारेणैवानुदात्तेन सिद्धमात्मनेपदं किमर्थं ङित्करणं। तत्क्रियते अनुदात्तनिमित्तस्यात्मनेपदस्यानित्यत्वज्ञापनार्थम्। एतेन वेदिभर्त्सितर्ज्जिप्रभृतयो व्याख्याताः आवेदयति भर्त्सयति तर्ज्जयतीत्यादीनां प्रयोगानां दर्शनात्। अत्रापि अनुदात्तनिबन्धनस्यात्मनेपदस्यानित्यत्वं ज्ञापकेन द्रष्टव्यमिति॥ क्षीयत इति कर्मकर्त्तरि॥५॥ क्षीयत इति प्रयोगो दृश्यते यः स कर्मकर्त्तरि द्रष्टव्यः क्षयतेरनात्मनेपदित्वात्॥ खिद्यत इति च॥६॥ खिद्यत इति च प्रयोगो दृश्यते सोऽपि कर्मकर्त्तर्येव द्रष्टव्यो न कर्त्तरि अदैवादिकत्वात् खिदेः॥ मार्गेरात्मनेपदमलक्ष्म॥७॥ चुरादौ मार्ग अन्वेषण इति पठ्यते आ धृषाद्वेति विकल्पितणिच्कः। तस्माद् यदात्मनेपदं दृश्यते मार्गन्तां देहभारमिति तदलक्ष्म अलक्षणं परस्मैपदित्वान्मार्गेः। तथाच शिष्टप्रयोगः, करकिसलयं धूत्वा धूत्वा विमार्गति वाससी॥ लोलमानादयश्चानशि॥८॥ लोलमानो वेल्लमान इत्यादयश्चानशि द्रष्टव्याः आनचस्त्वभावः परस्मैपदित्वाद्धात्वनामिति॥ लभे गत्यर्थत्वाण्णिचयणौ कर्त्तुः कर्मत्वाकर्मत्वे॥९॥ अस्त्यत्र लभिः यः प्राप्त्युपसर्जनां गतिमाह, अस्ति च गत्युपसर्जनां प्राप्तिमाहेति। अत्र पूर्वस्मिन् पक्षे गत्यर्थत्वाल्लभेः णिच्यणौ यः कर्त्ता तस्य गत्यादिसूत्रेण कर्मसंज्ञा। यथा,

दीर्घिकासु कुमुदानि विकासं लम्भयन्ति शिशिराः शशिभासः। द्वितीये पक्षे गत्यर्थत्वाल्लभे र्णिचप्रणौ कर्त्तुर्न कर्मसंज्ञा। यथा, सितं सितिम्ना सुतरां मुने र्वपु र्विसारिभिः सौधमिवाथ लम्भयन्। द्विजावलिव्याजनिशाकरांशुभिः शुचिस्मितां वाचमवोचदच्युतः॥ ते मे शब्दौ निपातेषु॥ १०॥ त्वया मयेत्यस्मिन्नर्थे ते मे शब्दौ निपातेषु द्रष्टव्यौ। यथा, श्रुतं ते वचनं तस्य॥ वेदानधीत इति नाधिगतं पुरा मे॥ तिरस्कृत इति परिभूतेऽन्तर्द्ध्युपचारात्॥ ११॥ तिरस्कृत इति शब्दः परिभूते दृश्यते, राज्ञा तिरस्कृतं इति। च न प्राप्नोति तिरःशब्दस्य हि तिरोऽन्तर्द्धाविन्यन्तर्द्धौ गतिसंज्ञा तस्याश्च सतत्रां तिरसोऽन्यतरस्यामिति सकारस्तत् कथं तिरस्कृत इति परिभूते। आह अन्तर्द्ध्युपचारादिति। परिभूतो ह्यन्तर्हितवद् भवति। मुख्यस्तु प्रयोगो यथा, लावण्यप्रसरतिरस्कृताङ्गलेखामिति॥ नैकशब्दः सुप्सुपेति समासात्॥ १२॥ अरण्यानीस्थानं फलनमितनैकद्रुममित्यादिषु नैकशब्दो दृश्यते। स च सिध्यति। नञा समासे न लोपो नञ इति नलोपे तस्मात् नुडचीति नुडागमे सति अनेकमिति रूपं स्यात्। निरनुबन्धस्य नशब्दस्य समासलक्षणं नास्ति। तत् कथं नैकशब्द इत्याह सुप्सुपेति समासात्॥ मधुपिपासुप्रभृतीनां समासो गमिगाम्यादिषु पाठात्॥ १३॥ मधुपिपासुमधुव्रतसेवितं मुकुलजालमजृम्भत वीरुधामित्यादिषु मधुपिपासुप्रभृतीनां समासो गमिगाम्यादिषु पिपासुप्रभृतीनां पाठात् श्रितादिषु गमिगाम्यादीनामिति द्वितीयासमासलक्षणं दर्शयति॥ त्रिवलीशब्दः सिद्धः संज्ञा चेत्॥ १४॥ त्रिवलीत्ययं शब्दः सिद्धो यदि संज्ञा दिक्संख्ये संज्ञायामिति संज्ञायामेव समासविधानात्॥ बिम्बाधर इति वृत्तौ मध्यपदलोपिन्याम्॥ १५॥ बिम्बाधरः पीयत इति प्रयोगो दृश्यते। स च न युक्तः अधरबिम्ब इति भवितव्यम्। उपमितं व्याघ्रादिभिरिति समासे सति तत् कथं बिम्बाधर इत्याह वृत्तौ मध्यपदलोपिन्यां शाकपार्थिवादित्वात् समासे मध्यपदलोपिनि सति बिम्बाकारो ऽधरो बिम्बाधर इति। तेन बिम्बोष्ठशब्दोऽपि व्याख्यातः। अत्रापि पूर्ववत् वृत्तिः। शिष्टप्रयोगेषु चैष विधिः तेन नातिप्रसङ्गः॥ आमूललोला-

दिषु वृत्तिर्विस्पष्टपटुवत् ॥ १६ ॥ आमूललोलमामूलसरलमित्यादिषु वृत्तिर्विस्पष्टपटुवत् मयूरव्यंसकादित्वात् लोलमिव लोलं आमूलञ्च तल्लोलञ्चेति ॥ न धान्यषष्ठादिषु षष्ठीसमासप्रतिषेधः पूरणेनान्यतद्धितान्तत्वात् ॥ १७ ॥ धान्यषष्ठं तानुरक्तषष्ठाङ्कितसैकतानीत्यादिषु न षष्ठीसमासप्रतिषेधः। पूरणेन पूरणप्रत्ययान्तेनान्यतद्धितान्तत्वात् षष्ठो भागः षष्ठ इति। पूरणाद्भागे तीयादन् षष्ठाष्टमाभ्यां ञ चेत्यन् विधानात् स प्राप्तः ॥ पत्वपीतिमादिषु गुणवचनेन ॥१८॥ पत्वपीतिमा पत्वालीपिङ्गलिमा इत्यादिषु षष्ठीसमासप्रतिषेधो गुणवचनेन प्राप्तो बालिश्यात्तु न कृतः ॥ अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः ॥ १९ ॥ अवर्ज्यो न वर्जनीयो व्यधिकरणो बहुव्रीहिः जन्माद्युत्तरं पदं यस्य स जन्माद्युत्तरपदः ॥ यथा, शास्त्रार्थजन्मा हि विवेकलाभः। कण्ठेस्थिताः प्राणा इति ॥ हस्ताग्राग्रहस्तादयो गुणगुणिनो र्भेदाभेदात् ॥ २० ॥ हस्ताग्रं अग्रहस्तः पुष्पाग्रं अग्रपुष्पमित्यादयः प्रयोगाः कथम् आहिताग्न्यादिष्वपाठात् पाठे वा तदनियमः स्यात्। अत आह गुणगुणिनो र्भेदाभेदात् भेदात् हस्ताग्रादयः अभेदादग्रहस्तादयः ॥ पूर्वनिपातापभ्रंशो रक्ष्यः ॥ २१ ॥ काष्ठतृणं तृणकाष्ठमिति यदृच्छया पूर्वनिपातं कुर्वन्ति। तत्रापभ्रंशो रक्ष्यः रक्षणीयः अनित्यत्वज्ञापकन्तु न सर्वविषयमिति ॥ निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः परिगणनस्य प्रायिकत्वात् ॥ २२ ॥ अनभिहित इत्यत्र सूत्रे तिङ्कृत्तद्धितसमासैरिति परिगणनं कृतं। तस्य प्रायिकत्वात् निपातेनाप्यभिहिते कर्मणि न कर्मविभक्ति र्भवति। यथा, विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतमिति। परिडतं मूर्ख इति मन्यते ॥ शक्यमिति रूपं विलिङ्गवचनस्यापि कर्माभिधायां सामान्योपक्रमात् शकेः ॥ २३ ॥ शकिसहोश्चेति कर्मणि यति कृते शक्यमिति रूपं भवति, विलिङ्गवचनस्यापि विरुद्धलिङ्गवचनस्यापि, कर्माभिधाने सामान्योपक्रमाद्विशेषानपेक्षाया मिति। यथा, शक्यमोपधिपते र्नवोदयाः कर्णपूररचना कृते तव। अप्रगल्भयवसूचिकोमलाश्छेत्तुमग्रनखसंपुटैः कराः ॥ अत भाष्यकृद्वचनं लिङ्गं यथा, शक्यञ्च श्वमांसादिभिरपि क्षुत्प्रतिहन्तुमिति। न चैकान्तिकः सामान्योप-

क्रमः । तदाह, शय्या भंक्तुं झटिति बिसिनीकन्दवच्चन्द्रपादाः इत्यपि भवति ॥ हानिवदाधिक्यमप्यङ्गानां विकारः ॥२४॥ येनाङ्गविकार इत्यत्र सूत्रे यथाङ्गानां हानिस्तथाधिक्यमपि विकारः । यथा, अक्ष्णा काण इति भवति, तथा मुखेन त्रिलोचन इति ॥ न कृमिकीटानामित्येकवद्भावप्रसङ्गात् ॥ २५ ॥ आयुषः कृमिकीटानामलङ्करणमल्पतेत्यत्र कृमिकीटानामिति प्रयोगो न युक्तः क्षुद्रजन्तव इत्येकवद्भावप्रसङ्गात् । न च मध्यपदलोपी समासो युक्तः तस्यासर्वविषयत्वात् ॥ आसेत्यसतेः ॥२६॥ लावण्यमुत्पाद्य इवास यत्न इत्यत्र आसेत्यसते र्धातोरस गतिदीप्त्यादानेष्विति अस्य प्रयोगो नास्ते र्भूभावविधानात् ॥ न खरोष्ट्रावुष्ट्रखरमिति पाठात् ॥ २७ ॥ खरोष्ट्रौ वाहनं येषामित्यत्र खरोष्ट्राविति पाठो न युक्तः गवाश्वप्रभृतिषूष्ट्रखरमिति पाठात् ॥ युध्येदिति युधः क्यचि ॥२८॥ यो भर्तृपिण्डस्य कृते न युध्येदिति प्रयोगः स चायुक्तो युध्यतिधातोरात्मनेपदित्वात् । कथं युध्येदिति आह युधः क्यचि युधमात्मन इच्छति ॥ विरलायमानादिषु क्यङ् निरूप्यः ॥ २९ ॥ विरलायमाने मलममारुत इत्यादिषु क्यङ् निरूप्यः भृशादिष्वपाठात् नापि क्यष् लोहितादिष्वपाठात् ॥ अहेतौ हन्ते र्णिच् चुरादिपाठात् ॥३०॥ घातयित्वा दशास्यमित्यत्र अहेतौ णिच् दृश्यते । स कथमित्याह चुरादिपाठात् चुरादिषु चटस्फुटभेदे घटसङ्घाते हन्त्यर्थाश्चेति पाठात् ॥ अनुचरीति चरेष्टित्वात् ॥ ३१ ॥ अनुचरी प्रियतमा मदालसेत्यत्र अनुचरीति न युक्तः ईकाराभावात् । तत्कथमाह चरेष्टित्वात् । पचादिषु चरट् इति पठ्यते ॥ केसरालमित्यलतेरणि ॥ ३२ ॥ केसरालं शिलीन्ध्रमित्यत्र केसरालमिति कथम् । आह अलतेरणि अलम्भूषणपर्याप्तिवारणेष्वित्यस्माद्धातोः केसरशब्दे कर्मण्युपपदे कर्मण्यणित्यनेनाणि सति केसरालमिति सिध्यति ॥ पललमिति लाते के ॥ ३३ ॥ पललं वनमिदं विराजत इत्यत्र पललमिति कथम् । आह लातेः के । ला आदाने इत्येतस्माद्धातोरादानार्थात् पलशब्दे कर्मण्युपपदे आतोऽनुपसर्गे क इति कप्रत्यये सतीति ॥ महीध्रादयो मूलविभुजादिदर्शनात् ॥ ३४ ॥ महीध्रधरणीध्रा इत्यादयः शब्दाः

मूलविभुजादिदर्शनात् के प्रत्यये सति महीं धरतीति महीध्र इत्येव-माद्योऽन्येऽपि द्रष्टव्याः ॥ ब्रह्मादिषु हन्तेर्नियमादरिहाद्यसिद्धिः ॥ ३५ ॥ ब्रह्मादिषूपपदेषु हन्तेः क्विब्विधौ ब्रह्मभ्रूणवृत्रेष्विति अत्र अरिहा रिपुहा इत्येवमादीनामसिद्धिर्नियमात्। ब्रह्मादिष्वेव हन्तेरेव क्विबेव भूतकाल एवेति चतुर्विधश्चात्र नियम इति नियमान्तरविषयो निरूप्यः ॥ ब्रह्मविदादयः कृदन्तवृत्त्या ॥ ३६ ॥ ब्रह्मवित् छत्रभिदित्याद्यः प्रयोगा न युक्ता ब्रह्मादिषु हन्तेरत्र नियमात्। आह कृदन्तवृत्त्या वेत्तीति वित् भिनत्तीति भित् क्विप् चेति क्विप् ततः कृदन्तैर्विदादिभिः सह ब्रह्मादीनां षष्ठीसमास इति ॥ तैर्महीधरादयो व्याख्याताः ॥ ३७ ॥ तैर्विदादिभिर्महीधरादयो व्याख्याताः। धरतीति धरो मह्या धरो महीधर एवं गङ्गाधरादयो व्याख्याताः ॥ भिदुरादयः कर्मकर्त्तरि कर्त्तरि च ॥ ३८ ॥ भिदुरं काष्ठं, भिदुरं तमः, तिमिरभिदुरं व्योम्नः शृङ्गमिति, छिदुरातपो दिवसः, मत्सरच्छिदुरं प्रेम, भङ्गुरा प्रीतिः, मातङ्गं मानभङ्गुरमित्याद्यो हि प्रयोगा दृश्यन्ते। कथमित्याह ते कर्मकर्त्तरि कर्त्तरि च भवन्ति। कर्मकर्त्तरि चायमिष्यते इत्यत्र हि चकारः कर्त्तरि चेत्यस्य समुच्चयार्थः ॥ गुणविस्तरादयश्चिन्त्याः ॥ ३९॥ गुणविस्तरो व्याक्षेपः विस्तर इत्यादयः प्रयोगाश्चिन्त्याः प्रथने वावशब्द इति बञ्प्रसङ्गात् ॥ अवतरावचायशब्दयोर्दीर्घह्रस्वव्यत्यासो बालानाम् ॥ ४० ॥ अवतरशब्दस्यावचायशब्दस्य च दीर्घह्रस्वयोर्व्यत्यासो बालानां बालिशानां प्रयोगेष्विति। ते हि अवतरणमवतार इति प्रयुञ्जते मारुतावतार इति स ह्ययुक्तो भावे तरतेरविधानात्। अवचायमवचय इति प्रयुञ्जते पुष्पावचय इत्यत्र हस्तादाने चेरस्तेये इति घञ् प्राप्त इति ॥ शोभेति निपातनात् ॥ ४१ ॥ शोभेत्ययं शब्दः साधुर्निपातनात्। शुभशुम्भ शोभार्थाविति शुभेर्भिदादेराकृतिगणत्वादेव अङः सिद्धत्वाद्व गुणप्रतिषेधाभावस्तु निपात्यत इति। शोभार्थावित्यत्र कर्तृत्वे किं शोमा आहोस्विच्छोभ इति विशेषावगतिराचार्यपरम्परोपदेशादिति ॥ अविधौ गुरोः स्त्रियां बहुलं विवक्षा ॥ ४२ ॥ अविधौ अविधाने गुरोश्च इत्य

इति स्त्रियां बहुलं विवक्षा क्वचिद्विवक्षा क्वचिदविवक्षा क्वचिदुभयमिति। तत्र विवक्षा यथा, ईहा लज्जेति। अविवक्षा यथा, आतङ्क इति। विवक्षाविवक्षे यथा, बाधा बाधः ऊहा ऊहः वीडा वीड इति। व्यवसितादिषु कर्त्तरि क्तः चकारात् ॥ ४३ ॥ व्यवसितः प्रतिपन्न इत्यादिषु भावकर्म्मविहितोऽपि क्तः कर्त्तरि गत्यादिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात्। भावकर्म्मानुकर्षणार्थत्वं चकारस्येति चेत् तदावृत्तिः कर्त्तव्या ॥ आहेति भूतेऽन्यलडन्तभ्रमाद् ब्रुवो लटि ॥ ४४ ॥ ब्रुवः पञ्चानामित्यादिना आहेति लट्युत्पादितः। स भूते प्रयुक्तः, इत्याह भगवान् प्रभुरिति, अन्यस्य भूतकालाभिधायिनो लङन्तस्य लिटि भ्रमात्। निपुणास्त्वेवं प्रयुञ्जते आह स्म स्मितमधुमधुराक्षरां गिरमिति। अनुकरोति भगवतो नारायणस्येत्यत्रापि स्मशब्दः कविना प्रयुक्तो लेखकैस्तु प्रमादान्न लिखित इति ॥ शबलादिभ्यः स्त्रियां टापोऽप्राप्तिः ॥ ४५ ॥ उपच्छोतः सस्यस्थितमहिषगोवर्गशबलाः स्रवन्तीनां जाताः प्रमुदितविहङ्गास्तटभुवः। भ्रमरोत्करकल्माषाः कुसुमानां समृद्धयः। इत्यादिषु शबलादिभ्यः स्त्रियां टापोऽप्राप्तिः अन्यतो ङीषिति ङीष्विधानात् तेन शबली कल्माषीति भवति ॥ प्राणिनि नीलेति चिन्त्यम् ॥ ४६ ॥ कुवलयदलनीला कोकिला बालचूते इत्यादिषु नीलेति चिन्त्यं। कोकिला नीलीति भवितव्यं। नीलशब्दाज्जानपदादिसूत्रेण प्राणिनि चेति ङीष्विधानात् ॥ मनुष्यजातेर्विवक्षाविवक्षे ॥ ४७ ॥ इतो मनुष्यजातेरूङुत इति इत्यत्र च विवक्षा अविवक्षा च लक्ष्यानुसारतः। मन्दरस्य मदिराक्षि पार्श्वतो निम्ननाभि न भवन्ति निम्नगाः। यासु वासुकिविकर्षणोद्भवा भामिनीह पदवी विभाव्यते ॥ अत्र मनुष्यजातेर्विवक्षायामितो मनुष्यजातेरिति ङीपि सति अम्बार्थनद्योर्ह्रस्व इति ह्रस्वत्वं सिध्यति। नाभिशब्दात्पुनरितश्च प्राण्यङ्गादिति ईकारे कृते निम्ननाभीकेति स्यात्। हृतौष्ठरागैर्नयनोदबिन्दुभिर्निमग्ननाभेर्निपतद्भिरङ्कितम्। च्युतं रुषा भिन्नगतेरसंशयं शुकोदरश्याममिदं स्तनांशुकम् ॥ अत्र निम्ननाभेरिति मनुष्यजातेरविवक्षेति ङीप् न कृतः। सुतनु जहिहि कोपमित्यत्र

सुतनुशब्दान्मनुष्यजातेर्विवचेति सुतनुशब्दादूङ् ऊत ऊङि सति ऋस्वत्वे सुतनुति सिध्यति। वरतनुरयवासो नैव दृष्टा प्रिया मे। अत्र मनुष्यजातेरविवचेति ऊङ् न कृतः॥ ऊकारादप्यूङ् प्रवृत्तेः॥ ४९॥ उत ऊङ् विहितः ऊकारान्तादपि क्वचिद्भवति आचार्यप्रवृत्तेः। कासी प्रवृत्तिः। अप्राणिजातेश्वारज्ज्वादीनाम् इति अलावूः कर्कन्धूरितुप्रदाहरणं। तेन सुभ्रु किं सम्भ्रमेण इत्यत्र सुभ्रूशब्दादूङ् सिद्धो भवति ऊङि ऋसति हे सुभ्रूरिति स्यात्॥ कार्त्तिकीय इति ठञ् दुर्ह्नरः॥ ५०॥ कार्त्तिकीयो नभश्चानित्यत्र कालाट्ठञिति ठञ् दुर्ह्नरः ठञ्भवनं दुःखेन ध्रियत इति॥ शार्वरमिति च॥ ५१॥ शार्वरं तम इत्यत्र च कालाट्ठञिति ठञ् दुर्ह्नरः॥ शाश्वतमिति प्रयुक्तेः॥ ५२॥ शाश्वतं जयोतिरित्यत्र शाश्वतमिति न सिध्यति कालाट्ठञिति ठञ्प्रसङ्गात्। येषाञ्च विरोधः शाश्वतिक इति सूत्रकारस्यापि प्रयोगः। आह प्रयुक्तेः शाश्वते प्रतिषेध इति प्रयोगात् शाश्वतमिति भवति॥ राजवंश्यादयः साध्वर्थे ये सति॥ ५३॥ राजवंश्याः सूर्यवंश्या इत्यादयः शब्दाः तत्र साधुरित्यनेन साध्वर्थे ये (यति) प्रत्यये सति साधवो भवन्ति। भवार्थे पुनर्दिगादिपाठेऽपि वंशशब्दान्तान्न यत्प्रत्ययः तदन्तविधेः प्रतिषेधात्॥ दारवशब्दो दुष्प्रयुक्तः॥ ५४॥ दारवं पात्रमित्यादिषु दारवशब्दो दुष्प्रयुक्तः नित्यं वृद्धशरादिभ्य इति मयटा भवितव्यम्। ननु विकारावयवयोरर्थयोर्मयट् विधीयते,अत्र तु दारुण इदमिति विवचायां दारवमिति भविष्यति। नैवमपि स्यात् वृद्धाच्छ इति छविधानात्॥ सुग्धिमादिष्विमनिज् मृग्यः॥५५॥ सुग्धिमा म्रौढिमेत्यादिषु इमनिज् मृग्यः अन्वेषणीय इति॥ औपम्यादयश्चातुर्वर्ण्यवत्॥ ५६॥ औपम्यं सान्निध्यमित्यादयश्चातुर्वर्ण्यवत् गुणवचनेत्यत्र चातुर्वर्ण्यादीनामुपसङ्ख्यानमिति वार्त्तिकात् स्वार्थिकष्यञन्ताः॥ ष्यञः षित्करणादीकारो बहुलम्॥ ५७॥ गुणवचने ब्राह्मणादिभ्य इति यः ष्यञ् तस्य षित्करणादीकारो भवति। स बहुलं, ब्राह्मण्यमित्यादिषु न भवति॥ सामग्र्यमित्यादिषु विकल्पेन॥ ५८॥ सामग्र्यं सामग्री वैदग्ध्यं

वैदग्धी॥ धनौ वीह्यादिषुपाठात्॥ ५८॥ ब्रीह्यादिषु धनुर् शब्दस्य पाठात् धनुीति इनौ सति सिद्धो भवति॥ चतुरस्रशोभीति णिनौ॥ ६०॥ बभूव तस्याश्चतुरस्रशोभि वपुर्विभक्तं नवयौवनेन। इत्यत्र चतुरस्रशोभीति न युक्तं व्रीह्यादिषु शोभाशब्दस्य पाठेऽपि इनिरत्न न सिध्यति, ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात्। भवतु वा तदन्तविधिस्तथापि कर्मधारयान्मत्वर्थीयानुपपत्तिः लघुत्वात् प्रक्रमस्येति बहुव्रीहिरेव भवितव्यं। तत् कथमिति मत्वर्थीयस्याप्राप्तौ चतुरस्रशोभीति प्रयोगः। आह णिनौ चतुरस्रं शोभत इति ताच्छीलिके णिनावयं प्रयोगः। अथानुमेयशोभीति कथं। न ह्यत्र पूर्ववत् दृढ़क्तिः शक्या कर्त्तुमिति शुभेः साधुकारिण्यावश्यके वा णिनिं कृत्वा तदन्तात् भावप्रत्ययः पश्चाद्‌ बहुव्रीहिः कर्त्तव्यः अनुमेयं शोभित्वं यस्येति भावप्रत्ययस्तु गतार्थत्वान्न प्रयुक्तः। यथा, निराकुलं तिष्ठति सधीरसुवाचेति॥ कश्चु कीया इति यचि॥ ६१॥ जीवन्ति राजमहिषीमनुकश्चुकीया इत्यत्र कश्चुकीया इति कथं मत्वर्थीयस्य छप्रत्ययस्याभावात्। अत आह क्यचि क्यचि प्रत्यये सति कश्चुकीया इति भवति कश्चुकमात्मन इच्छन्ति कश्चुकीयाः॥ बोद्धप्रतियोग्यपेक्षायामप्यातिशायनिकाः॥ ६२॥ बोद्धस्त्र प्रतियोगिनोऽपेक्षाया-मप्यातिशायनिकास्तरबादयो भवन्ति घनतरं तमः बहुलतरं प्रेम॥ कौशिलादय इलचि वर्णलोपात्॥ ६३॥ कौशिलवाशिल इत्यत्रादयः कथं कौशिकवाशिष्ठादिभ्यो नीतावनुकम्पायां घनिलचौ चेतीलचि कृते ठाजादावूर्द्धं हितीयादच इति वर्णलोपात् सिध्यन्ति॥ मौक्तिकमिति विनयादियोगात्॥ ६४॥ मुक्तैव मौक्तिकं विनयादिपाठाद्‌द्रष्टव्यम्॥ स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते॥ ६५॥ इति नपुंसकत्वम्॥ प्रातिभादयः प्रज्ञादिषु॥ ६६॥ प्रातिभादयः शब्दाः प्रज्ञादिषु द्रष्टव्याः। प्रतिभाविकृतिहितादिभ्यः शब्देभ्यः प्रज्ञादिपाठादणि स्वार्थिके कृते प्रातिभं वैकृतं हैतमित्यादयः प्रयोगाः सिध्यन्तीति॥ न सरजसमित्यनव्ययीभावे॥ ६७॥ मधु सरजसं मध्ये पद्मं पिवन्ति शिलीमुखा इत्यत्रादिषु सरजसमिति न युक्तः

प्रयोगः अनव्ययीभावे, अव्ययीभाव एव सरजसशब्दस्येष्टत्वात्॥ न हत-धनुषीत्यसंज्ञायाम्॥ ६८॥ हतधनुषि मौर्व्यशालिनीत्यत्र हतधनुषीत्य-संज्ञायां न युक्तः प्रयोगः, धनुषश्चेत्यनङ्विधानात्, संज्ञायां त्वनङ् विकल्पितो वा संज्ञायां॥ दुर्गन्धीति दुर्लभः॥ ६९॥ दुर्गन्धिः काय इत्यादिषु समा-सान्तो दुर्लभः। उत्पूत्यादिषु दुःशब्दस्यापाठात्॥ सुदत्यादयः प्रति-विधेयाः॥ ७०॥ सा दन्तरोपात् सुदती ससर्जेति शिखरदति पतति रसनेत्यादिषु सुदत्यादयः शब्दाः प्रतिविधेया दत्रादेशलक्षणाभावात्। तत्र प्रतिविधानमग्रान्तादिति सूत्रेण चकारस्यानुक्तसमुच्चयार्थत्वात् सुदत्यादिषु दत्रादेश इत्येके। अन्ये तु वर्णयन्ति सुदत्यादयः स्त्र्यभिधायिनो योग-रूढिशब्दास्तेषु स्त्रियां संज्ञायामिति दत्रादेशो विकल्पेन सिद्ध एवेति॥ घनदृढोरस इति न कप्, तदन्तविधिप्रतिषेधात्॥ ७१॥ प्लवङ्गनखकोटिभिः घनदृढोरस्को राक्षसा इति। अत्र दृढोरःशब्दादुरःप्रभृतिभ्यः कप् न कृतः, ग्रहणवता प्रातिपदिकेन तदन्तविधेः प्रतिषेधात्। वाक्यन्तु एवं कर्त्तव्यं घनं दृढोरो येषामिति॥ अवेहीति दृक्षिरवद्या॥ ७२॥ अवेहि इति दृक्षिरवद्या गुण एवात्र युक्तः॥ अपाङ्गनेत्रे ति लुगलभ्यः॥ ७३॥ अपाङ्गे नेत्रे यस्याः सेयमपाङ्गनेत्रेत्यत्र लुगलभ्यः अमूर्द्धमस्तकात् स्वाङ्गदकाम इति सप्तम्या अलुग्विधानात्॥ नेष्टाः श्लिष्टप्रियादयः पुंवद्भावप्रतिषेधात्॥ ७४॥ श्लिष्टप्रियो दृढकान्त इत्यादयो नेष्टाः स्त्रियां पुंवदिति पुंवद्भावस्य प्रियादिषु निषेधात्॥ दृढभक्तिरिति सर्व्वत्रे ति॥ ७५॥ दृढभक्तिरसौ जनेऽत्र पूर्व्वपदस्य स्त्रियामिति अविवक्षितत्वात्॥ जलजम्बुलता-दयो ह्रस्वविधेः॥ ७६॥ जलजम्बुलताविलाः स्रवन्त्यः, भाग्ये कर्कन्धु-ग्रहणमित्यादिषु कथं जलजम्बुलतादयः प्रयोगाः। आह ह्रस्वविधेः इको-ह्रस्वोऽङ्यो गालवस्येति ह्रस्वविधानात्॥ तिलकादयोऽजिरादिषु॥ ७७॥ तिलकादयः शब्दा अजिरादिषु द्रष्टव्याः अन्यथा तिलकवती कनक-वतीत्यादिषु मतुपि मतौ बह्वचोऽनजिरादीनां इति दीर्घत्वं स्यात्। केचित्तु वर्णयन्ति नद्यां मतुबिति यो मतुप् तत्रायं विधिः तेषां मते ना-

सरस्वतीत्यादीनामसिद्धिः ॥ निशम्यनिशमय्यशब्दौ प्रकृतिभेदात् ॥ ७८ ॥ निशम्य निशमय्य इत्येतौ श्रुत्वेत्यस्मिन्नर्थे शमेर्ल्यपि लघुपूर्वादित्ययादेशे सति निशमय्येति भवितव्यं न निशम्येति आह प्रकृतिभेदात् शमेर्दर्शनादिकस्य निशम्येति रूपं शमोदर्शने इति चुरादौ णिचि मित्संज्ञकस्य निशमय्येति रूपम् ॥ संयम्यनियम्यशब्दावणिजन्तत्वात् ॥७९॥ कथं संयम्य नियम्येति ल्यपि लघुपूर्वादिति णेरयादेशेन भवितव्यम्। आह अणिजन्तत्वात् धातोर्णिच् न कृतो गतार्थत्वात् यथा वाचं नियच्छतीति। णिजर्थानवगतौ तु णिच् प्रयुज्यत एव, यथा संयमयितुमारब्ध इति ॥ प्रपीयेति पीङः ॥८०॥ प्रपीयेति शब्दः पीङ् पाने इत्येतस्य, पिबतेर्न, ल्यपीति ह्रस्वप्रतिषेधात् प्रपायेति भवितव्यम् ॥ दूरयतीति बहुलग्रहणात् ॥ ८१ ॥ दूरयत्यवनते विवस्वतीत्यत्र दूरयतीति कथं णाविष्ठवद्भावेन स्थूलदूरेत्यादिना गुणलोपयोः कृतयोर्दवयतीति भवितव्यं। आह बहुलग्रहणात् प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चेति बहुलग्रहणात् स्थूलदूरादिसूत्रेण यद्विहितं तन्न भविष्यतीति ॥ गच्छतीप्रभृतिभ्योऽनिषेधो नुम् ॥ ८२ ॥ हरति हि वनराजिर्गच्छती श्यामभावं इत्यादिषु गच्छतीप्रभृतिषु शब्देषु शप्श्यनोर्नित्यमिति नुमनिषेधो निषेद्धुमशक्यः ॥ मित्रेण गोप्त्रेति पुंवद्भावात् ॥ ८३ ॥ मित्रेण गोप्त्रेति कथं गोप्तृणेति भवितव्यम्, इकोऽचि विभक्ताविति नुम्विधानात्। आह पुंवद्भावात् तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्येति पुंवद्भावेन गोप्त्रेति भवति ॥ वेत्स्यसीति पदभङ्गात् ॥ ८४ ॥ पतितं वेत्स्यसि क्षितावित्यत्र वेत्स्यसीति न सिध्यति इट्प्रसङ्गात्। अत आह पदभङ्गात् सिध्यति वेत्स्यसीति पदं भज्यते वेत्सि असीति अयं निपातस्त्वमित्यस्मिन्नर्थे क्वचिद्वाक्यालङ्कारे प्रयुज्यते, यथा पार्थिवस्त्वमसि सत्यमभ्यधा इति ॥ कामयानशब्दः सिद्धोऽनादिश्चेत् ॥ ८५ ॥ कामयानशब्दः आगमानुशासनमनित्यमिति मुक्कृते यदानादिः स्यात् ॥ सौहृददौर्हृदशब्दावणि हृद्भावात् ॥ ८६ ॥ सुहृदयदुर्हृदयशब्दाभ्यां युवादिपाठादणि कृते हृदयस्य हृद्भावः आदिवृद्धौ सौहृददौर्हृदशब्दौ भवतः। सुहृद..

दुह्वच्छब्दाभ्यां युवादिपाठादेवाणि कृते च्छङ्गसिन्धून्त इति च्छदन्तसत्र तद्धिते ऽणि कृते सत्यात्रभयपदवृद्धौ सत्यां सौहार्दं दौर्हार्दमिति भवति॥ विरम इति निपातनात्॥ ८७॥ रमेरनुदात्तोपदेशत्वान्नोदात्तोपदेशस्येत्यादिना वृद्धिप्रतिषेधस्याभावात् कथं विरम इत्याह निपातनात् निपातनन्तु यम उपरम इति अतन्त्रं चोपसर्ग इति अत्रोपरम इति॥ उपर्यग्रादिषु सामीप्येऽपु द्विरुक्तेषु द्वितीया॥ ८८॥ उपर्यग्रादिषु शब्देषु सामीप्ये द्विरुक्तेषु उपर्यग्रथधसः सामीप्ये इत्यनेन उपर्यग्रादिषु त्रिषु द्वितीयाम्रेडितान्तेषु इति द्वितीया। वीप्सायान्तु द्विरुक्तेषु षष्ठेरव भवति, उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः। मन्दं मन्दमित्यत्वप्रकारार्थत्वे॥८९॥ मन्दं मन्दं तुदति पवन इत्यत्र मन्दं मन्दमित्यप्रकारार्थत्वे भवति। प्रकारार्थत्वे तु प्रकारे गुणवचनस्येति द्विर्वचने कृते कर्मधारयवद्भावे मन्दमन्दमिति प्रयोगः। मन्दं मन्दमित्यत्र नित्यवीप्सयोरिति द्विर्वचनं अनेकभागात्मकस्य तुदेर्यदा सर्वे भागा मन्दत्वेन व्याप्तमिष्टा भवन्ति तदा वीप्सेति॥ न निद्राद्रुगिति भष्भावप्राप्तेः॥ ९०॥ निद्राद्रुक् काद्रवेयच्छविरुपरिलसद्वर्वरो वारिवाह इत्यत्र निद्राद्रुगिति न युक्तः एकाचो बशो भषिति भष्भावप्राप्तेः अनुप्रसमियैस्वपभङ्गः कृतः॥ निष्पन्द इति षत्वं चिन्त्यम्॥ ९१॥ न ह्यत्र षत्वलक्षणमस्ति कस्कादिपाठोऽप्यस्य न निश्चितः॥ नाङ्गुलिसङ्ग इति-मूर्द्धन्यविधेः॥ ९२॥ म्लायन्त्यङ्गुलिसङ्गेऽपि कोमलाः कुसुमस्रज इति त्वत्राङ्गुलिसङ्ग इति न युक्तः समासेऽङ्गुलेः सङ्ग इति मूर्द्धन्यविधानात्। तेनावन्तिसेनादयः प्रत्युक्ताः॥९३॥ तेनाङ्गुलिसङ्ग इत्यनेनावन्तिसेनाद्यसेव-मादयः प्रत्युक्ताः प्रत्याख्याताः सुषमादिष्विति संज्ञायां मूर्द्धन्यविधानात्॥ नेन्द्रवाहने णत्वमाहितत्वस्याविवक्षितत्वात्॥ ९४॥ कुर्येन नागेन्द्र-मिवेन्द्रवाहनमित्यत्र इन्द्रवाहनशब्दे वाहनमाहितादि णत्वं न भवति आहितत्वस्याविवक्षितत्वात् स्वस्वामिभावमात्रं विवक्षितं तेन सिद्धमिन्द्र-वाहनमिति। सदसन्तो मया शब्दा विविच्याल्पे न दर्शिताः॥ अनयैव दिशा कार्यं शेषाणामप्यवेक्षणम्॥ इति श्रीवामनाचार्यकृतौ काव्या-

लङ्कारसूत्रवृत्तौ पञ्चमेऽधिकरणे द्वितीयोऽध्यायः। समाप्तं प्रायोगिकं पञ्चममधिकरणमिति ॥

वामनसूत्रवृत्तिः समाप्ता ॥

---

१।३ "इति पूर्व्वोक्तप्रकारेण पुराणकवीनां संकथा उपदेशः।" १।८ "नृणामधीशो नधीशः।" १।१७ "अनन्त्यान्तपादान्तेऽपि प्रथमतृतीयपादान्तेऽपि। १।२४ "स्वः स्वर्गेऽधीतो विख्यातो मेरुरित्यर्थः।" १।२४ "चटुलितं चञ्चलीकृतं स्वरधीतसत्र मेरुशैलसत्र साररत्नासनं येन स तम्। श्रीवीरेण मेरोः कम्पनादासनमपि कम्पते। अथवा स्वः स्वर्गेण स्वर्गवासिदेवजनेनाधीतं पठितं व्यावर्णितं सारं जलं यस्य स स्वरधीतसार इन्द्र इत्यर्थः। चटुलितं कम्पितं स्वरधीतसारसत्र इन्द्रसत्र रत्नासनं येन स तम्।" "लोचयति दर्शयतीति।" २।१२ "वानरध्वजैरर्जुनरथैरिति।" २।१४ "अम्भोजः कर्दमः।" २।२१ मानसौकः पतन् हंसः स एव यानं यसत्र स च स देवश्च तद्यानदेवो ब्रह्मा तसत्रासनं कमलं तद्वत् तत्सदृशे निविष्टलोचने यसत्र सः। तमोरिपुः सूर्यसतसत्र विपक्षो राक्षसतसत्रारिर्विष्णुसतसत्र प्रिया लक्ष्मीसताम्। ३।४ "श्रीनेमिनाथो" नेमिनाथो जिनः। ३।१५ कुण्डली सर्पः कुण्डलिनी दुर्गाया मूर्त्तिभेदः। ४।७ "यत्र वन्धे वस्तुकल्पनापदार्थघटनाङ्गसन्धितद्रूपैरक्षरैर्भवति। वस्तुनः कमलच्छत्र चामरबन्धादेर्घटना। वस्तुनोऽङ्गानां ये सन्धयसतेषु तद्रूपाणि तान्येवाक्षराणि वस्तु कमलच्छत्रं बन्धादितदङ्गानीति कमलाङ्गानि दलादीनि छत्राङ्गानि दण्डयष्टिकादीनि तेषामङ्गानां येषामङ्गानां ये सन्धयसतत्र सदृशाक्षराणि कार्य्याणीत्यर्थः। तत् चित्रमुच्यते यच्च चित्रसतत् आश्चर्य्यकारि दुष्करत्वेन कविप्रज्ञातिशयव्यापकं भवति एकस्वरादिकमेकव्यञ्जनादिकं वा तदपि चित्रमुच्यते। परमपि यथा चित्रं प्रसक्तौ सतरां प्रसक्तेरेव कवित्रविधेयम्। अप्रसक्तेसतु कवित्रः को नाम चित्रकविर्न भवेत् चित्रमाकारगतिस्वरव्यञ्जनभेदाच्चतुर्विधं भवति।" ४।८ "आकारचित्रमाह" "इनः स्वामी" "एनः पापं" "षोडशदलकमलम्।" ४।९ "गणा षट्पदः" "करतरो प्रकृष्टकल्याणकारी" "करकमलं हस्तयुगलम्" "एकस्वरचित्रम्"। ४।१० "मात्राच्युतकम्" "विट-

पदादिकारमात्राचुरतकं वट इति।" ४ । ११ "विन्दुचुरतकमपि" अथ वचनशब्दात् विन्दुचुरतौ अर्थान्यत्वम्।" ४ । १२ "ककाकु इतेत्रय श्लोक एकव्यञ्जनो नेमिनिर्वाणमहाकाव्ये राजीमतीपरित्यागाधिकारे समुद्रवर्णनरूपो ज्ञेयः तथा ककः समुद्रो वर्त्तते केन जलेनोपलक्षितः को वायुर्यत्र स ककः। यद्वा केन वायुना प्रेरितं कं जलं यत्र स ककः अथवा कमेव जलमेव कः आत्मा यस्य स ककः समुद्रः कीदृशः ककाकुकङ्केकाङ्ककेकिकोकैककुः कं सुखं यथा भवति तथा काकुर्ध्वनिर्येषां ते ककाकवः। अथवा केन सुखेन जलेन वा काकवो ध्वनिविशेषा येषां ते ककाकवः ककाकवश्च ते कङ्का जलपक्षिणस्तथा केका केकारवोऽङ्कः चिह्नं येषां ते केकाङ्काः केकिनो मयूरास्तथा कोकाश्चक्रवाकाः। कथं मिथो मेलाः ककाकुकङ्काः केकाङ्ककेकिनः कोका एव एका अद्वितीया कुर्भूमिर्यस्य स तथा। अकुकैकःकाककाक्षा कवः कुत्सिताः न कवोऽकवः शोभनाः कौकसो जलवासिनः काकाः शोभनजलवायसा इत्यर्थः तेषां समूहः काङ्ककाकमेव काककं स्वार्थे कः तत्र अक्षा माता। यः समुद्रः स एव पालनत्वात् माता। तथा अक्षाकुकुककाङ्ककुः अक्षो वेदवाक्यानि तेषां काकवो वक्रोक्तयः तासां कुक उच्चारकः को ब्रह्मा सोऽङ्के उत्सङ्गे यस्यासौ। अर्थादेव विष्णुस्तत्रं कुःस्थानं यः समुद्रः जलशयनत्वादस्येति ॥" ४ । १५ "तुरङ्गवदनो मयुः किन्नरः" कलापी कं सुखं लपतीति ॥ ४ । २२ " संयुता अन्तराला परपदरहिता अयुता अन्तरालपदसहिता।" ४ । २४ "आर गतम्"."रोरगा दारिद्र्यं गता अरयो यस्य सः।" ४ ।२६ " कुर्भूमि" " वलक्षं धवलं॥" ४ । ३० " अत्र पर्वते कुर्भूमिः शोभते इति सम्बन्धः कीदृशी भूमिः रम्भारामा रम्भाभिः कदलीभिर्मिश्रा आरामा यस्यां सा तथा अवककमला अवकं वकरहितं कं पानीयं मलते धारयतीति अवककमला तथा अरं अत्यर्थं भारामा भाभिर्नवैः आ ईषत् रामा कर्बुरेत्यर्थः। तथा कुरवककमलारम्भा कुरवका वृक्षविशेषाः कमलानि पद्मानि तेषामारम्भ

उपायो यस्त्रां सा कुरवककमलारम्भा तथा रामा रम्या अथवा कुरवककमलारम्भारामा। कुरवककमलानां आरम्भे नोद्गमेन आ ईषत् रामा मनोज्ञा हे कुरवक न विद्यते कुत्सितो रवः शब्दः यस्य सोऽकुरवः अकुरव एव अकुरवकः शेषाद् वा कः हे अकुरवक हे कोमलध्वने नेमिसम्बोधनमेतत् पुनः कीदृशी कुः कमलारम्भारामा कमला लक्ष्मीः रम्भा अप्सरसः ता एव रामाः स्त्रियो यस्त्रां सा गिरिभूमौ क्रीडार्थं रामा आयान्ति। अत्र कमलारम्भा एव रामा यमा तथा अकुरवककमलाः कुत्सितं राजन्ते इति कुरा न कुरा अकुराः शोभना वका वृक्षविशेषाः कमला हरिणविशेषाश्च यस्त्रां सा अकुरवककमलारम्भारामेत्यत्र श्लोके द्वितीयपादयोरन्तरा न यतिः इदं शंसयाय यदि पुनर्मद्यायमकतात् कविना कृतं तथापि विलोक्य रम्भारामाकुरवकेत्यस्त्रविशेषवती अवचूड़िः हे अकुरवककमल अत्र पर्वते कुर्भूमिः शोभते रवो यस्याश्चिदानन्दादिशब्दवाच्यत्वात् एवंविधा कस्य सुखस्य कमला यस्य नेमेः सम्बोधनं रम्भारामा तथैव तथा आरम्भरामा तथा कुर्भूमिः अवककमला तथा रम्भारामा एव रामा यस्त्रां सा रम्भारामाकुरवककमलारम्भा तथा अकुरवककमला एवं व्याख्याने पदद्वयस्यान्तरं भवति। स्रौ स्रौ मः सप्राद् भ्रमर विलसता छन्दः॥"

४।३२ "अजनगरात् नारायणपुरात्॥" "४।३६ "विदारं विगतकलत्रम्" विदार वीन् पक्षिणो दृणाति दारयति दारम्॥" ४।३७ "स्त्रिन्धरोचिलिताः स्त्रिन्धरणां मजानाम्॥" ४।४२ "आस्यति स्यति क्षिपसि सति दासी अतिकोपात्॥" ४।४८ "आरक्तनेत्रश्रेणीभीषणवदनोत्करः कुरङ्गाक्षि। उल्लसितविंशतिभुजवनविनिवेशो दशमुख एषः। स०। "सक्रियोदाहरणमाह हे कुरङ्गाक्षि एष दशमुखो रावणः। कीदृशः आरक्तनेत्रश्रेणीभीषणवदनोत्करः। उल्लसितविंशतिभुजवनविनिवेशः। उल्लसितविंशतिभुजा एव काननं तस्य विनिवेशः स्थानं। अत्रापि यादृशो रावणस्तावदेवोक्तत्वात् स्वभावोक्तिरेषा जातिः। ४।५३।

"हे सुभग तव विरहे तस्या मुखं संकुचितं यथा, शशिनो विरहे कुमुदं सङ्कोचमाप्नोति। कीदृ शस्य दोषाकारस्य दोषाकरस्य उभयोर्विशेषण-मेतत्। तथा मदभरितमानसस्यापि। चन्द्रपक्षे मृगभरितमानसस्यापि मानसमत्र मर्थं ज्ञेयम्। शशिन एवेति द्रव्योपमा। कुमुदं सङ्कुचित-मिति क्रियोपमा।" ४।५४ "अन्योन्योपमालङ्कारमाह। तं वीत-रागं जिनेन्द्रं नमत। खण्डित दृढ़तरकषायं यस्य मन इव शरीरं सुप्रसन्नम्। शरीरमिव मनः सुप्रसन्नम्।" ४।७५ "हे प्रहताक्षि भ्रमराणां श्रेणिः तव वदने इदं हेमकमलमिति भ्रान्त्या निपतति। तव नयने इदं नीलोत्पलमिति भ्रान्त्या निपतति। तव हसिते इदं कुसुममिति भ्रान्त्या निपतति। अत्र भ्रान्तिमत्यलङ्कारे अन्त्यक्रिया-दीपकं ज्ञेयम्। उक्तो भ्रान्तिमानलङ्कारः।" ४।७६ "कर्णनरेन्द्रसूनुः जयसिंहदेवः।"

४।७८ "अथ निषेधपूर्वकं विधो प्रतीतिरुच्यते ये कीर्त्तिं नेच्छन्ति ये च क्षणमपि करुणां नैव कुर्वन्ति ते किं मरणसमयेऽपि धनदपक्षवत् धनं ददति अपि तु न ददतीत्यर्थः एतावता कीर्त्तिमभिलषद्भिः करु-णाञ्च कुर्वद्भिः धनमवसरे देयमित्यर्थः। अत्र निषेधपूर्वको विधिरव-गन्तव्यः। देयमिति प्रतीयमानोऽर्थस्य अतोऽत्रापि प्रतीतिर्घटते। एषावचूड़िः स्वमत्या कल्पना नास्ति। इत्तौ तु किमपि न विद्यते तथा। ४।८६ चिन्तयन्निव चूर्णलतां चरति न जाति केतकीं कमते। कमललतालग्नमना मधुप युवा केवलं क्वणति। (क)। ४।१०६ "बालिका यौवनसमयोन्मत्ता सती नाथस्य भर्त्तु-र्विरहेण तथा सती कण्ठाभ्यन्तरदोलना मधुरस्वरं गीतं करोति कण्ठाभ्यन्तर एव दोलने गीतं लज्जया बहिर्न प्रकटयतीत्यर्थः। अत्र कर्त्तुः कश्चिदर्थमुत्पादयत इति कर्त्तृरूपाया बालिकाया गीतमिति उत्पादितोऽर्थः। तस्य योग्यता युक्तिः। नाथस्य विरहेण यौवनोन्मत्ता च गीतस्य हेतुः कारणमेतद्दिति गाथार्थः।

४ । १०७ "मृगाङ्को विषसोदरः चन्द्रविषयोरैकत्र उत्पत्तित्वात्। कृतान्तदिशः आगतः पवनः शिखरी वृक्षो जातिपलाशः एते त्रयो विपथि कानने इदानीं मारयन्ति अत्र मरणस्य हेतुरमी। एको विषसोदरः अन्यो यमाशानिवासी पवनः। अपरस्तु पलाशः पक्षे पलाशो वृक्षः॥"

४ । १४७ असौ खड्गे, दानवारि मदजलं, विः पक्षी, आजितः संग्रमात्।

४ । १४८ ब्रह्माण्डशुक्तिसम्पुटमौक्तिकमणेः प्रभासमूह इव। अत्रीवाङ्क इति तनय आसीत् बुधः तस्य सोमस्य॥

---

अनुक्रमः ॥


| | पृष्ठा |
|---|---|
| प्रथमः परिच्छेदः ... ... ... ... ... | १ |
| द्वितीयः परिच्छेदः ... ... ... ... ... | ३ |
| तृतीयः परिच्छेदः ... ... ... ... ... | ५ |
| चतुर्थः परिच्छेदः ... ... ... ... ... | ७ |
| पञ्चमः परिच्छेदः ... ... ... ... ... | २१ |
| षष्ठः परिच्छेदः ... ... ... ... ... | २३ |


## Readings.

२ । २६ (क्रियापदविहीनं) सत्क्रियापदहीनं क, ख; २७. (विशिष्ट) विसृष्ट क ॥ ४.९९ (मुहुर्मुदा) मुहुर्मुहुः क ; १०० (दीपिकाः) दीपकाः ग ॥ ५.४. (संयोगो विप्रयोगश्च) सम्भोगो विप्रलम्भश्च क,ख; २२. (चोद्भवः) सम्भवः क; २४. (विस्मयात्प्राङ्गुतो ) विस्मयात् प्राङ्गुतो क ; २६. (भयानको) भयानके ख ॥

## Corrections.

३. २८. (जलतीड़ायामं) जलक्रीड़ायामं ; २९ (विबुधैः) विबुधैः ॥ ४. ३९. (वभुः) बभुः.; ५२ (चन्द्रवद्वदनं) चन्द्रवद्वदनं ; ५५. (नद्रव) न इव ; ६९. (सुरभित्वमिव) सुरभित्वमाजमिव ; ७३ (वस्तुत्यत्र) वस्तुन्यत्र ; ८३. (चिन्तनीयो) . चिन्तनीयः ; १०२. (वक्त) वक्तृ ; १११. (मुतकखिरुता) मुतकखिन्नता ; १४८ (भण्ड) मण्ड ॥

# वाग्भटालङ्कारः।

श्रीसरस्वत्यै नमः॥

श्रियं दिशतु वो देवः श्रीनाभेयजिनः सदा।
मोक्षमार्गं सतां ब्रूते यदागमपदावली॥ १॥
साधुशब्दार्थसन्दर्भं गुणालङ्कारभूषितम्।
स्फुटरीतिरसोपेतं काव्यं कुर्वीत कीर्त्तये॥ २॥
प्रतिभा कारणं तस्य व्युत्पत्तिस्तु विभूषणम्।
भृशोत्पत्तिकृदभ्यास इत्याद्यकविसङ्कथा॥ ३॥
प्रसन्नपदनव्यार्थयुक्त्युद्बोधविधायिनी।
स्फुरन्ती सत्कवेर्बुद्धिः प्रतिभा सर्वतोमुखी॥ ४॥
शब्दधर्मार्थकामादिशास्त्रेष्वाम्नायपूर्विका।
प्रतिपत्तिरसामान्या व्युत्पत्तिरभिधीयते॥ ५॥
अनारतं गुरूपान्ते यः काव्ये रचनादरः।
तमभ्यासं विदुस्तस्य क्रमः कोऽप्युपदिश्यते॥ ६॥
बिभ्रत्या बन्धचारुत्वं पदावल्यार्थशून्यया।
वशीकुर्वीत काव्याय छन्दांसि निखिलान्यपि॥ ७॥
पदाङ्गत्वं संयोगाद्विसर्गाणामलोपनम्।
विसन्धिवर्जनं चेति बन्धचारुत्वहेतवः॥ ८॥
(यथा), क्षिते कृपाणे विष्टते त्वया घोरे रणे कृते।
अधीश घिसिषा भीत्या वन एव गता भवात्॥ ९॥

अनुप्रासन्तत्रां नव्यार्थयुक्तावभिनवत्वतः।
अर्थसङ्कलनातत्वमभ्यस्येत् सङ्क्यास्वपि ॥ १० ॥

यथा, आगम्यतां सखे गाढमालिङ्गयात्र निषीद च।
सन्दिष्टं यन्निजभ्रातृजायया तन्निवेद्य ॥ ११ ॥

परार्थबन्धाद् यश्च स्यादभ्यासो वाचप्रसङ्गतौ।
स न श्रेयान् यतोऽनेन कविर्भवति तस्करः ॥ १२ ॥

परकाव्यग्रहोऽपि स्यात् समस्यायां गुणः कवेः।
अर्थं तदर्थानुगतं नवं हि रचयत्यसौ ॥ १३ ॥

मनः प्रसत्तिः प्रतिभा प्रातःकालोऽभियोगिता।
अनेकशास्त्रदर्शित्वमित्यर्था लोकहेतवः ॥ १४ ॥

समाप्तमिव पूर्वार्द्धं कुर्यान्नादर्थप्रकाशनं।
तत्पुरुषबहुव्रीही न मिथः प्रत्ययावहौ ॥ १५ ॥

एकस्यैवाभिधेयस्य समासं व्यासमेव च।
अभ्यसेत्कर्त्तुं साधानं निःशेषालंक्रियासु च ॥ १६ ॥

स्यादनन्तोन्तपादान्तेऽप्यशैथिल्ये लघुर्गुरुः।
पादादौ न च वक्तव्याश्चादयः प्रायशो बुधैः ॥ १७ ॥

भुवनानि निबध्नीयात् त्रीणि सप्त चतुर्दश।
अप्यष्टस्त्री सिता कीर्त्तिस कीर्त्तिश्च ततोऽन्यथा ॥ १८ ॥

वारणं शुभ्रमिन्द्रस्य चतुरः सप्त साम्बुधीन्।
चतस्रः कीर्त्तयेद् याष्टौ दश वा ककुभः क्वचित् ॥ १९ ॥

यमकश्लेषचित्रेषु बवयोर्डलयोर्न भित्।
नानुस्वारविसर्गौ च चित्रभङ्गाय सम्मतौ ॥ २० ॥

(यथा), प्रद्भमानैर्मंहीपाल कारागारविडम्बनम्।
त्वद्वैरिभिः सपत्नीकैः श्रितं बङ्कविलं वनम् ॥ २१ ॥

त्वया दयार्द्रेण विभो रिपूणां न केवलं संयमिता न वालाः।
तत्कामिनीभिश्च वियोगिनीभिर्मुक्तस्तं चौपातविधूसराङ्गाः ॥ २२ ॥

देव युष्मद्यशोराशिं स्तोतुमेनं जड़ात्मकम् ।
उत्कण्ठयति मां भक्तिरिन्दुलेखेव सागरम् ॥ २३ ॥
चन्द्रेड़ितं चटुलितस्वरधौतसार-
रत्नासनं रभसकल्पितशोकजातम् ।
पश्यामि पापतिमिरक्षयकारकाय-
मल्पेतरामलतपःकचलोपलोचम् ॥ २४ ॥
प्रचण्डबल निःकाम प्रकाशितमहागम ।
भावतत्त्वनिधे देव भालमत्राङ्कितं तव ॥ २५ ॥
अधीत्य शास्त्राण्यभियोगयोगादभ्यासवश्यार्थपदप्रपञ्चः ।
तं तं विदित्वा समयं कवीनां मनःप्रसत्तौ कवितां विदध्यात् २६ ॥
इतिवाग्भटालङ्कारे प्रथमः परिच्छेदः ॥

---

संस्कृतं प्राकृतं तस्यापभ्रंशो भूतभाषितम् ।
इतिभाषाश्चतस्रोऽपि यान्ति काव्यस्य कायताम् ॥ १ ॥
संस्कृतं स्वर्गिणां भाषा शब्दशास्त्रेषु निश्चिता ।
प्राकृतं तज्जतत्तुल्यदेश्यादिकमनेकधा ॥ २ ॥
अपभ्रंशस्तु यच्छुद्धं तत्तद्देशेषु भाषितम् ।
यद्भूतैरुच्यते किञ्चित्तद्भौतिकमिति स्मृतं ॥ ३ ॥
छन्दोनिबद्धमच्छन्द इति तद्वाङ्मयं द्विधा ।
पद्यमाद्यं तदन्यच्च गद्यं मिश्रं च तद्द्वयम् ॥ ४ ॥
अदुष्टमेव तत्कीर्त्त्यै स्वर्गसोपानसंततये ।
परिहार्यानतो दोषांस्तानेवादौ प्रचक्ष्महे ॥ ५ ॥
अनर्थकं श्रुतिकटु व्याहतार्थमलक्षणम् ।
स्वसङ्केतप्रकॢप्तार्थमप्रसिद्धमसम्मतम् ॥ ६ ॥
ग्राम्यं यच्च प्रजायेत पदं तन्न प्रयुज्यते ।
क्वचिद्दिष्टा च विद्वद्भिरेषामप्यपदोषता ॥ ७ ॥

प्रस्तुतेऽनुपयुक्तं यत्तदनर्थकमुच्यते ।
यथा विनायकं वन्दे लम्बोदरमहं हि तु ॥ ८ ॥
निष्ठुराक्षरमत्यन्तं बुधैः श्रुतिकटु स्मृतम् ।
एकाग्रमनसा मन्ये स्रष्ट्रेयं निर्मिता यथा ॥ ९ ॥
व्याहतार्थं यदिष्टार्थबाधकार्थान्तराश्रयम् ।
रतस्त्वमेव भूपाल भूतलोपकृतौ यथा ॥ १० ॥
शब्दशास्त्रविरुद्धं यत्तदलक्षणमुच्यते ।
मानिनीमानदलनो यथेन्दुर्विजयत्यसौ ॥ ११ ॥
स्वसङ्केतप्रक्लृप्तार्थं नेयार्थान्तरवाचकं ॥
यथा विभाति शैलोऽयं पुष्पितैर्वानरध्वजैः ॥ १२ ॥
यस्य नास्ति प्रसिद्धिस्तदप्रसिद्धं विदुर्बुधाः ।
राजेन्द्र भवतः कीर्त्तिश्चतुरो हन्ति वारिधीन् ॥ १३ ॥
उक्तमप्यर्थमाख्यातुं यन्न सर्वत्र संमतम् ।
असंमतं, तमोऽम्भोजं घातयन्त्यत्र गावो रवेः ॥ १४ ॥
यद्यत्रानुचितं तद्धि तत्र ग्राम्यं स्मृतं यथा ।
छादयित्वा सुरान् पुष्पैः पुरो धानत्र चिपाम्यहम् ॥ १५ ॥
पदात्मकत्वाद्वाक्यस्य तद्दोषाः सन्ति तत्र हि ।
अपदस्थास्तु ये वाक्यदोषास्तान् ब्रूमहेऽधुना ॥ १६ ॥
खण्डितं व्यस्तसम्बन्धमसंमितमपक्रमम् ।
छन्दोरीतियतिभ्रष्टं दुष्टं वाक्यमसत्क्रियम् ॥ १७ ॥
वाक्यान्तरप्रवेशेन विच्छिन्नं खण्डितं मतम् ।
यथा पातु सदा स्वामी यमिन्द्रः स्तौति वो जिनः ॥ १८ ॥
सम्बन्धिपददूरत्वे व्यस्तसम्बन्धमुच्यते ।
यथाद्य सम्पदं प्राप्त्वा देयात्तत्वानि वोऽर्हताम् । १९ ॥
शब्दार्थौ यत्र न तुलाविधृताविव संमितौ ।
तदसंमितमित्याहुर्वाक्यं वाक्यविदो यथा ॥ २० ॥

मानसौकःपतद्यानदेवासनविलोचनः।
तमोरिपुविपद्घारिप्रियां दिशतु वो जिनः॥ २१॥
अपक्रमं भवेद् यत्र प्रसिद्धक्रमलङ्घनम्।
यथा भुक्त्वा कृतस्नानो गुरून् देवांश्च वन्दते॥ २२॥
छन्दःशास्त्रविरुद्धं यच्छन्दोभ्रष्टं हि तद् यथा।
स जयति जिनपतिः परब्रह्ममहानिधिः॥ २३॥
रीतिभ्रष्टमनिर्वाहो यत्र रीतेर्भवेद् यथा।
जिनो जयति स श्रीमानिन्द्राद्यमरवन्दितः॥ २४॥
पदान्तर्विरति प्रोक्तं यतिभ्रष्टमिदं यथा।
नमस्तस्मै जगत्स्वामिने सदा नेमयेऽर्हते॥ २५॥
क्रियापदविहीनं यत्तदसत्क्रियमुच्यते।
यथा सरस्वतीं पुष्पैः श्रीखण्डैर्घुसृणैः स्तवैः॥ २६॥
देशकालागमावस्थाद्रव्यादिषु विरोधिनम्।
वाक्येष्वर्थं न बध्नीयाद् विशिष्टं कारणं विना॥ २७॥
प्रवेशे चैत्रस्य स्फुटकुटजराजीखचितदिशि
प्रचण्डे मार्त्तण्डे हिमकणसमानोष्ममहसि।
जलक्रीडायातं मरुसरसि बालद्विपकुलं
मदेनान्धं विध्वस्तप्रसमशरपातैः प्रशमिनः॥ २८॥
इति दोषविषनिषेकैरकलङ्कितमुज्ज्वलं सदा विबुधैः।
कविहृदयसागरोत्थितममृतमिवास्वाद्यते काव्यम्॥ २९॥
इतिश्रीवाग्भटालङ्कारे द्वितीयः परिच्छेदः॥

---

अदोषावपि शब्दार्थौ प्रशस्येते न यैर्विना।
इतीदानीं यथाशक्ति ब्रूमोऽभिव्यक्तये गुणान्॥ १॥
औदार्यं समता कान्तिरर्थव्यक्तिः प्रसन्नता।
समाधिः श्लेष ओजोऽथ माधुर्यं सुकुमारता॥ २॥

पदानामर्थचारुत्वप्रत्यायकपदान्तरैः।
मिलितानां यदाधानं तदौदार्यं स्मृतं यथा ॥ ३ ॥
गन्धेभविभ्राजितधामलक्ष्मीलीलाम्बुजच्छत्रमपास्य राज्यं।
क्रीडागिरौ रैवतके तपांसि श्रीनेमिनाथोऽत्र चिरं चकार ॥ ४ ॥
बन्धस्य यदवैषम्यं समता सोच्यते बुधैः।
यदुज्ज्वलत्वं तस्यैव सा कान्तिरुदिता यथा ॥ ५ ॥
कुचकलशविसारिस्फारलावण्यधारा-
मनुवदति यदङ्गासङ्गिनी हारवल्ली।
असदृशमहिमानं तामनन्योपमेयां
कथय कथमहन्ते चेतसि व्यञ्जयामि ॥ ६ ॥
फलैः कुम्भाहारः प्रथममपि निर्गत्य सदनात्
अनासक्तः सौख्ये क्वचिदपि पुराजन्मनि कृती।
तपस्यन्नश्रान्तं ननु वनभुवि श्रीफलदलै-
रखण्डैः खण्डेन्दोश्चिरमकृत पादार्चनमसौ ॥ ७ ॥
यदनेयत्वमर्थस्य सार्थव्यक्तिः स्मृता यथा।
त्वत्सैन्यरजसा लुप्ते सूर्येऽत्र रात्रिरभूद्दिवा ॥ ८ ॥
भटित्यर्थार्पकत्वं यत् प्रसक्तिः सोच्यते बुधैः।
कल्पद्रुम इवाभाति वाञ्छितार्थप्रदो जिनः ॥ ९ ॥
स समाधिर्यदन्यस्य गुणोऽन्यत्र निवेश्यते।
यथाश्रुभिररिस्त्रीणां राज्ञः पल्लवितं यशः ॥ १० ॥
श्लेषो यत्र पदानि स्युः स्यूतानीव परस्परम्।
ओजः समासभूयस्त्वं तद्गद्यष्वतिसुन्दरम् ॥ ११ ॥
मुदा यस्योद्गीतं सह सहचरीभिर्वनचरै-
र्मुहुः श्रुत्वा हेलोद्धृतधरणिभारं भुजवलम्।
दरोद्गच्छद्भोङ्कुरनिकरदम्भात् पुलकिता-
श्चमत्कारोद्रेकं कुलशिखरिणोऽपि दधिरे ॥ १२ ॥

समराजिरस्फुरदरिनरेशकरिनिकरशिरःसरससिन्दूरपूरपरिचयेनेवारुणितकरतलो देवः॥ १३॥ इति गद्यम्।

सरसार्थपदत्वं यत्तन्माधुर्यमुदाहृतम्।
अनिष्ठुराक्षरत्वं यत् सौकुमार्यमिदं यथा॥ १४॥

फणिमणिकिरणालीस्यूतचञ्चन्निचोलः
कुचकलशनिधानस्येव रक्षाधिकारी।
उरसि विशदहारस्फारतामुज्झिहानः
किमिति करसरोजे कुण्डली कुण्डलिन्याः॥ १५॥

प्रतापदीपाञ्जनराजिरेव देव त्वदीयः करवाल एषः।
नो चेदनेन द्विषतां मुखानि श्यामायमानानि कथं कृतानि॥ १६॥

गुणैरमीभिः परितोऽनुविद्धं मुक्ताफलानामिव दाम रम्यम्।
देवी सरस्वत्यपि कण्ठपीठे करोत्यलङ्कारतया कवित्वम्॥ १७॥

इति श्रीवाग्भटालङ्कारे तृतीयः परिच्छेदः॥

---

दोषैर्मुक्तं गुणैर्युक्तमपि येनोज्झितं वचः।
स्त्रीरूपमिव नो भाति तं ब्रुवेऽलंक्रियोच्चयं॥ १॥

चित्रं वक्रोक्त्यनुप्रासौ यमकं ध्वन्यलंक्रियाः।
अर्थालङ्कृतयो जातिरुपमा रूपकं तथा॥ २॥

प्रतिवस्तूपमा भ्रान्तिमानाक्षेपोऽथ संशयः।
दृष्टान्तव्यतिरेकौ चापह्नुतिस्तुल्ययोगिता॥ ३॥

उत्प्रेक्षार्थान्तरन्यासः समासोक्तिर्विभावना।
दीपकातिशयौ हेतुः पर्यायोक्तिः समाहितम्॥ ४॥

परिवृत्तिर्यथासंख्यं विषमः सहोक्तिकः।
विरोधोऽवसरः सारं संश्लेषश्च समुच्चयः॥ ५॥

अप्रस्तुतप्रशंसा स्यादेकावल्यनुमापि च।
परिसंख्या तथा प्रश्नोत्तरं सङ्कर एव च॥ ६॥

यत्राङ्गसन्धितद्रूपैरक्षरैर्वस्तुकल्पना ।
सत्यां प्रसक्तौ तच्चित्रं तच्चित्रं चित्रकृद् यथा ॥ ७ ॥
जनस्य नयनस्यानध्यान एनश्छिनत्त्विनः ।
पुनः पुनर्जिनः पीनज्ञानध्यानधनः स नः ॥ ८ ॥
नयनरगणवरकरतरचरण परमद भरणगजनपथकथक ।
अमदन गतमद गजकरयमल शमसमय जय भयधतवनदहन ॥ ९ ॥
मूलस्थितिमधः कुर्वन् पात्रैर्जुष्टो गताक्षरैः ।
विटः सेव्यः कुलीनश्च तिष्ठतः पथि कस्य सः ॥ १० ॥
धर्माधर्मविदः साधु पक्षपातसमुद्यताः ।
गुरूणां वञ्चने निष्ठा नरके यान्ति दुःखिताम् ॥ ११ ॥
ककाकुकङ्कैकाङ्कैकिकोकैककुः ककः ।
अकुकोकःकाककाक्षा कक्षाकुकुककाङ्कधुः ॥ १२ ॥
कुर्वन् दिवाकराश्लेषं दधच्चरणडम्बरम् ।
देव यौष्माकसेनायाः करेणुः प्रसरत्यसौ ॥ १३ ॥
प्रस्तुतादपरं वाक्यमुपादायोत्तरप्रदः ।
भङ्गश्लेषमुखेनाह यत्र वक्रोक्तिरेव सा ॥ १४ ॥
नाथ मयूरो नृत्यति, तुरगाननवक्षसः कुतो नृत्यम् ।
ननु कथयामि कलापिनमिह सुखलाभो प्रिये कोऽस्ति ॥ १५ ॥
भर्तुः पार्वति नाम कीर्त्तय नचेत् त्वां ताड़यिष्याम्यहं
क्रीड़ाब्जेन, शिवेति, सत्यमनघे किन्ते शृगालः पतिः ।
नो स्थाणुः, किमु कीलको, नहि पशुस्वामी तु, गोप्ता गवां,
दोलाखेलनकर्मणीति विजयागौर्योर्गिरः पान्तु वः ॥ १६ ॥
तुल्यश्रुत्यक्षरावृत्तिरनुप्रासः स्फुरद्गुणः
अतत्पदः स्याच्छेकानां लाटानां तत्पदश्च सः ॥ १७ ॥
अलं कलङ्कशृङ्गारकरप्रसरहेलया ।
चन्द्र चण्डीशनिर्माल्यमसि न स्पर्शमर्हसि ॥ १८ ॥

रणे रणविदो हत्वा दानवान् दानवद्विषा ।
नीतिनिष्ठेन भूपाल भूरियं भूस्त्वया कृता ॥ १९ ॥
त्वं प्रिया चेच्चकोराचि स्वर्गलोकसुखेन किम् ।
त्वं प्रिया यदि न स्या मे स्वर्गलोकसुखेन किम् ॥ २० ॥
एकत्र पात्रे स्वकलत्रवक्त्रम्
नेत्रामृतं विम्बितमीक्षमाणः ।
पश्चात् पपौ सीधुरसं पुरस्तात्
ममाद कश्चिद्यदुभूमिपालः ॥ २१ ॥
सत्यात्यादपदवर्णानामावृत्तिः संयुतायुता ।
यमकं भिन्नवाच्यानामादिमध्यान्तगोचरं ॥ २२ ॥
दयाश्रके दयांश्चक्रे सतां तस्माज्जवान् वित्तम् ॥ २३ ॥
यश्चस्तो ससुद्रान् सदारोरगारेः ।
सदा रोरगारेः समानाङ्गकान्तेः ॥२४॥
द्विपासुद्धतानां निहंसि त्वमिन्द्रः ।
मुदं भो धराणामुदम्भोधराणां ॥ २५ ॥
विभाति रामा परमा रणस्य विभाऽतिरामा परमारणस्य ।
सदैव तेऽजोर्जित राजमान सदैवतेजोऽर्जितराजमान ॥ २६ ॥
सारं गवयसान्निध्यराजि काननमग्रतः ।
सारङ्गवयसां निध्यदारुणं शिखरे गिरेः ॥ २७ ॥
आसन्नदेवा न रराज राजिरत्नैस्तटानामियमत्र नाद्रौ ।
क्रीड़ाकृतो यत्र दिगन्तनागाः
आसन् नदे वानरराजराजि ॥ २८ ॥
अमरनगरस्त्रे राचीणां प्रपञ्चयति स्फुरत्-
सुरतरुचये कुर्वाणानां वलघमरं रुसं ।
इह सह सुरैरायान्तीनां नरेश नगेऽनुहम्
सुरतरुचये कु र्वाणानां वलघमरं हसम् ॥ २९ ॥

रम्भारामा कुरवककमलाऽरं भारामाऽकुरवककमला ।
रम्भारामा कुरवककमलारम्भा रामाऽकुरवक कमला ॥ ३० ॥
हारीतहारी सततमेव यत्र शैवालशैवालसहंससम्भः ।
पम्पालजं वालिमलं दधानं मन्दारमन्दारववायुरद्रिः ॥ ३१ ॥
नेमिर्विशालनयनो नयनोदितश्री-
रभ्रान्तबुद्धिविभवो विभवोऽथ भूयः ।
प्राप्तसदाजनगराम्नगराजि तत्र
छत्रेन चारु जगदे जगदेकनाथः ॥ ३२ ॥
यदुपान्तिकेषु सरला सरला: यदनूत्प्लवन्ति हरिणा हरिणाः ।
तदिदं विभाति कमलं कमलं मुदमेत्य यत्र परमां रमा ॥ ३३ ॥
कान्तारभूमौ पिककामिनीनां का तारवाचं यमते या सोढुम् ।
कान्ता रतेशेऽध्वनि वर्तमाने कान्तारविन्दस्य मधोः प्रवेशे ॥ ३४ ॥
चकार साहसं युद्धे धृतोल्लासा हसं च या ।
दैन्यं त्वां साद्य संप्राप्ता द्विषां सोतुसांह सन्ततिः ॥ ३५ ॥
गिरा श्रूयते कोकिला कोविदाऽरम्
यतस्तदनं विस्फुरत्कोविदारम् ।
मुनीनां मनसत्रल लोको-विदारम्
न च व्याधचक्रम् छ्लोको विदारम् ॥ ३६ ॥
सिन्धुरोचितलताग्रपल्लवोसिन्धुरोचितमुपैत्य किन्नरैः ।
कन्दराजितमदस्तटं गिरेः कन्दराजितगृहश्रि गीयते ॥ ३७ ॥
यसन् सरोगोऽत्र जनो न कश्चित्
पर सरोगो यदि राजहंसः ।
गोतं कलं को न करोति सिद्धः
शैले कलङ्कोऽभितकामनेऽस्मिन् ॥ ३८ ॥
जडर्वसन्तो सरसीं न वारणा
वधुः पिकानां मधुरो नवा रवाः ।

रसं च का मोहनकोविदाऽरकम्
विलोकयन्तो बकुलान् विदारकम्॥ ३९॥
वरणाः प्रसूननिकरावरणा मलिनां वहन्ति पटलीमलिनाम्।
तरवः सदात्र शिखिजातरवः सरसश्च भाति निकटे सरसः॥४०॥
यथा यथा द्विजिह्वस्य विभवः स्यान्महत्तमः।
तथा तथास्य जायेत स्पर्द्धयेव महत्तमः॥ ४१॥
दास्यति दास्यतिकोपादास्यति सति कर्करान् ग्रामम्।
भवति भवति त्वनर्थो भव तिमिसत्त्वेन वटुक त्वम्॥ ४२॥
कुलं तिमिभयादत्र करेणूनां न दीव्यति।
नदीव्यतिकरेऽणूनां प्राणिनां गणनापि का॥ ४३॥
गङ्गाम्बुभवलाङ्गाभो मुमुक्षुध्यानगोचरः।
पापार्त्तिहरणायास्तु स संज्ञानो जिनः सताम्॥ ४४॥
जगदात्मकीर्त्तिशुभ्रं जनयन्नुद्दामदोःपरिघः।
जयति प्रतापपूषा जयसिंहक्ष्माभृदधिनाथः॥ ४५॥
मामाकारयते रामा सा सा मुदितमानसा।
या या मदारुणच्छाया नानाहेलामयानना॥ ४६॥

अथार्थालङ्काराः।

स्वभावोक्तिः पदार्थस्य सक्रियस्याक्रियस्य वा।
जातिविशेषतो रम्या हीमुग्धार्भकादिषु॥ ४७॥
बर्हावलीवल्कलकान्तिवचो विचित्र-
भूर्जत्वचा रचितचारुदुकूललीलाः।
गुञ्जाफलग्रथितहारलताः सहेलम्
खेलन्ति खेलगतयोऽत्र वने शबर्यः॥ ४८॥
आरत्तणिद्धधोरणिभीसणवअणुक्करो कुरङ्गच्छि।
उब्भसिअवीसभुयवणविणिविसो दसमुहो एसो॥ ४९

उपमानेन सादृश्यमुपमेयस्य यत्र सा।
प्रत्ययाव्ययतुल्यार्थसमासैरुपमा मता ॥ ५० ॥
गत्या विभ्रममन्दया प्रतिपदं या राजहंसायते
यस्याः पूर्णमृगाङ्कमण्डलमिव श्रीमत् सदैवाननम्।
यस्याश्चानुकरोति नेत्रयुगलं नीलोत्पलानि श्रिया
तां कुन्दाभ्रदतीं त्यजन् जिनपतीराजीमतीं पातु वः ॥ ५१ ॥
चन्द्रवद्वदनं यस्या नेत्रे नीलोत्पले इव।
पक्वबिम्बं च यस्योष्ठः पुष्पधन्वधनुर्भ्रुवौ ॥ ५२ ॥
मयभरियमाणसस्स वि पिच्चं दोसाअरस्स वसिणो व्व।
तुज्झ विरहे तीय मुहं संकुइयं सुहवा कुमुअंव ॥ ५३ ॥
तं णमह वीयरायं जिणइन्दं मुहलियदढयरकसायं।
जस्स मण व सरीरं मणं सरीरं व सुपसन्नम् ॥ ५४ ॥
ये देव भवतः पादौ भवत्पादाविवाश्रिताः।
ते लभन्तेऽङ्कतां भव्याः श्रियं मद्दव शाश्वतीम् ॥ ५५ ॥
आलोकनञ्च वचनञ्च निगूहनञ्च
यासां स्मरन्नमृतवत्सरसं क्षणस्त्वम्।
तासां किमङ्ग पिशिताशपुरीषपात्रम्
गात्रं विचिन्तय सुहृन्नं न निराकुलोऽसि ॥ ५६ ॥
कलेव चन्द्रस्य कलङ्कमुक्ता मुक्तावलीवोरुगुणप्रपन्ना।
जगत्त्रयस्याभिमतं ददाना जैनेश्वरी कल्पलतेव मूर्त्तिः ॥ ५७ ॥
विभिन्नलिङ्गवचना नातिहीनाधिकाश्च ताम्।
निबध्नन्ति बुधाः क्वापि लिङ्गभेदं तु मेनिरे ॥ ५८ ॥
हिमगिरिव कीर्त्तिधवला चन्द्रकलेवातिनिर्मला वाचः।
श्रीवत्सेव च दाक्ष्यं नभ इव वक्षश्च ते विपुलम् ॥ ५९ ॥
मुनीन्द्रं गृहदेवीव मत्यचा प्रतिभासते।
खद्योत इव सर्व्वं मे मतापश्च विराजते ॥ ६० ॥

सफेनपिण्डप्रौढोर्म्मिरब्धिः शार्ङ्गीव शङ्खभृत् ।
श्योतन्मदः करी वर्षन् विद्युत्वानिव वारिदः ॥ ६१ ॥
मुखं चन्द्रमिवालोक्य देवाह्लादकरं तव ।
कुमुदन्ति मुदाक्षीणि क्षीणमिथ्यात्वसम्पदाम् ॥ ६२ ॥
निजजीवितेशकरजाग्रक्षतचतपंक्तयः शुशुभिरे सुरते ।
कुपितस्मरप्रहितवाणगणव्रणजर्जरा इव सरोजदृशः ॥ ६३ ॥
हस्ताग्रविन्यस्तकपोलदेशा मिथोमिलत्कङ्कणकुण्डलश्रीः ।
सिषेच नेत्रस्रवदम्बुधारा दोःकन्दलीं काचिदवश्यनाथा ॥ ६४ ॥
बह्वीरेऽप्यसावेको यदुवंशेऽङ्कतोऽभवत् ।
किं केतक्या दलानि स्युः सुरभीण्यखिलान्यपि ॥ ६५ ॥
रूपकं यत्र साधर्म्यादर्थयोरभिदा भवेत् ।
समस्तं वासमस्तं वा खण्डं वाखण्डमेव वा ॥ ६६ ॥
कीर्णान्धकारालकशालमाना निवद्धतारास्थिमणिः कुतोऽपि ।
निशापिशाची व्यचरद्दधाना
महान्त्युलूकध्वनिफेत्कृतानि ॥ ६७ ॥
संसार एष कूपः सलिलानि विपत्तिजन्मदुःखानि ।
इह धर्म एव रज्जुस्तस्मादुद्धरति निर्मग्नान् ॥ ६८ ॥
अधरं सुखेन नयनेन रुचिं सुरभित्वमिव नासिकया ।
नववर्णिनीवदनचन्द्रमसंस्तरुणा रसेन युगपन्निपपुः ॥ ६९ ॥
जगतीसुधा धवलीकुर्वन्नुर्वीं सकुलपर्वताम् ।
निशाविलासकमलमुदेति स्म निशाकरः ॥ ७० ॥
अनूपात्ताविवादीनां वस्तुनः प्रतिवस्तुना ।
यत्र प्रतीयते साम्यं प्रतिवस्तूपमा तु सा ॥ ७१ ॥
बह्वीरेऽप्यसावेको यदुवंशेऽङ्कतोऽभवत् ॥ ७२ ॥ इत्यादि ।
वस्तुन्यतत्र कुत्रापि तत्तुल्यस्यान्यवस्तुनः ।
निश्चयो यत्र जायेत भ्रान्तिमान् स स्मृतो यथा ॥ ७३ ॥

हेमकमलं ति भयणे णयणे णीलुप्पलं ति पसुयच्छि।
कुसुमं ति तुम्ह हसिए णिवडइ भमराण रिंच्छोली॥ ७४॥

उक्तिर्यत्र प्रतीतिर्वा प्रतिषेधाय जायते।
आचक्षते समाक्षेपमलङ्कारं बुधा यथा॥ ७५॥

इन्द्रेण किं स यदि कर्णनरेन्द्रसूनु-
रैरावतेन किमहो यदि तद्द्विपेन्द्रः।
दम्भोलिनाप्यलमलं यदि तत्प्रतापः
स्वर्गोऽप्ययं ननु मुधा यदि तत्पुरी सा॥ ७६॥

यस्यास्ति नरकक्रोडनिवासरसिकं मनः।
सोऽस्तु हिंसाकृतक्लेशतत्परः सुतरां जनः॥ ७७॥

कृत्यन्ति जेण किन्तिं कुणन्ति करुणा खणं पि जे णे।
ते धणजक्खा णरा दिन्ति णयं मरणसमये वि॥ ७८॥

इदं मे सदिदं वेति साम्यादुक्तेर्हि संशयः।
हेतुभिर्निश्चयः सोऽपि निश्चयान्तः स्मृतो यथा॥ ७९॥

किं केशपाशः प्रतिपक्षलक्ष्म्याः किं वा प्रतापानलधूम एषः।
दृष्ट्वा भवत्पाणिगतं कृपाणमेवं कवीनां मतयः स्फुरन्ति॥ ८०॥

इन्द्रः स एष यदि किं न सहस्रमक्ष्णां
लक्ष्मीपतिर्यदि कथं न चतुर्भुजोऽसौ।
त्वाः सत्रन्दनध्वजशतोद्धृतताम्रचूडः
श्रीकर्णदेवनृपसूनुरयं रणाग्रे॥ ८१॥

अनुयस्थापनं यत्र क्रियया स्वतदर्थयोः।
तं दृष्टान्तमिति प्राहुरलङ्कारं मनीषिणः॥ ८२॥

पतितानां संसर्गं त्यजन्ति दूरेण निर्मला गुणिनः।
इति कथयन् जरतीनां हारः परिहरसि कुचयुगलम्॥ ८३॥

केनचिद्यत्र धर्मेण द्वयोः संसिद्धसाम्ययोः।
भवत्येकतराधिक्यं व्यतिरेकः स उ[illegible] ते॥ [illegible]॥

श्रास्तस्तु पौरुषगुणाज्जयसिंहदेव-
पृथ्वीपतेर्मृगपतेश्च समानभावः।
किन्त्वेकतः प्रतिभटाः समरं विहाय
सद्यो विशन्ति वनमन्यमशङ्कमानाः॥ ८५॥

नैतदेतदिदं त्वेतदित्यपह्नवपूर्वकम्।
उच्यते यत्र सादृश्यादपह्नुतिरियं यथा॥ ८६॥

नैतन्निशायां सितसूत्रभेद्यमन्धीकृतालोकनमन्धकारम्।
निशागमे प्रस्थितपञ्चबाणसेनासमुत्थापित एष रेणुः॥ ८७॥

उपमेयं समीकर्त्तुमुपमानेन योज्यते।
तुल्यैककालक्रियया यत्र सा तुल्ययोगता॥ ८८॥

तमसा लुप्यमानानां लोकेऽस्मिन् साधुवर्त्मनाम्।
प्रकाशनाय प्रभुता भानोस्तव च दृश्यते॥ ८९॥

कल्पना काचिदौचित्याद्यत्रार्थस्य सतोऽन्यथा।
द्योतितेवादिभिः शब्दैरुत्प्रेक्षा सा स्मृता यथा॥ ९०॥

नभस्तले किञ्चिदिव प्रविष्टाश्चकासिरे चन्द्रमरीचिरोहाः।
जगद्विलित्वा हसतः प्रमोदाद्दन्ता इव ध्वान्तनिशाचरस्य॥ ९१॥

उक्तसिद्ध्यैमन्यार्थन्यासो व्याप्तिपुरःसरः।
कथ्यतेऽर्थान्तरन्यासः श्लिष्टोऽश्लिष्टश्च स द्विधा। ९२॥

शोणत्वमक्ष्णामसिताब्जभासां गिरां प्रचारस्खलनप्रकारः।
बभूव पानान्मधुनो वधूनामचिन्तनीयो हि सुरानुभावः॥ ९३॥

शुण्डादण्डैः कम्पिताः कुञ्जराणां
पुष्पोत्सर्गं पादपाश्चारु चक्रुः।
स्तब्धाकाराः किं प्रयच्छन्ति किञ्चित्
कान्तायावन्नोद्धृते वीतशङ्कम्॥ ९४॥

उच्यते वक्तुमिष्टस्य प्रतीतिजननक्षमम्।
सधर्म्म यत वस्त्वन्यत् समासोक्तिरियं यथा॥ ९५॥

मधुकर मा कुरु शोकं विचर करीरद्रुमस्य कुसुमेषु।
घनतुहिनपातदलिता कथं नु सा मालती मिलति ॥ ९६ ॥
विना कारणसद्भावं यत्र कार्यस्य दर्शनम्।
नैसर्गिकगुणोत्कर्षभावनात् सा विभावना ॥ ९७ ॥
अनध्ययनविद्वांसो निर्द्रव्यपरमेश्वराः।
अनलङ्कारसुभगाः पान्तु युष्मान् जिनेश्वराः ॥ ९८ ॥
आदिमध्यान्तवर्त्त्येकपदार्थेनार्थसङ्गतिः।
वाक्यस्य यत्र जायेत तदुक्तं दीपकं यथा ॥ ९९ ॥
जयन्ति दिवि स्वामिन् गन्धर्वाः पावनं यशः।
किन्नराश्च कुलाद्रीणां कन्दरेषु मुहुर्मुदा ॥ १०० ॥
विराजन्ते तमिस्रापि द्योतन्ते दिवि तारकाः।
विभान्ति कुमुदश्रेण्यः शोभन्ते निशि दीपकाः ॥ १०१ ॥
वस्तुनो वक्तुमुत्कर्षमसम्भाव्यं यदुच्यते।
वदन्त्यतिशयाख्यं तमलङ्कारं बुधा यथा ॥ १०२ ॥
त्वद्वारितारितरुणीश्वसितानिलेन
संमूर्च्छितोर्मिषु महोदधिषु क्षितीश।
अन्तर्लुठद्गिरिशिखरस्खलनस्फुटङ्ग-
घोरारवे मुररिपोरपयाति निद्रा ॥ १०३ ॥
एकदण्डानि सप्त स्युर्यदि च्छत्राणि पर्वते।
तदोपमीयते पार्श्वमूर्ध्नि सप्तफणः फणी ॥ १०४ ॥
यत्रोत्पादयतः कश्चिदर्थं कर्तुः प्रकाश्यते।
तद्योग्यतायुक्तिरसौ हेतुरुक्तो बुधैर्यथा ॥ १०५ ॥
कुवलयसमये मक्ता कस्स विरहेण कुणइ पाणहरं।
कणवभन्तरसोलं मञ्जरसरं वालिया गोयं ॥ १०६ ॥
विससोयरो मयंको कयंतआसाइ आगतो पवणो।
जाइपलासो विहरो पडिए मारिन्ति ते इण्हिं ॥ १०७ ॥

अतत्परतया यत्र कल्प्यमानेन वस्तुना।
विवक्षितं प्रतीयेत पर्यायोक्तिरियं यथा ॥ १०८ ॥
त्वत्सैन्यवाहनिवहस्य महाहवेषु
द्वेषः प्रभो रिपुपुरन्ध्रिजनस्य चासीत्।
एकः खुरैर्बहुलरेणुततिं चकार
तां सञ्जहार पुनरम्बुजलैर्यदन्यः ॥ १०९ ॥
कारणान्तरसंपत्तिर्दैवादारम्भ एव हि।
यत्र कार्यस्य जायेत तज्ज्ञायेत समाहितम् ॥ ११० ॥
मनस्विनी वल्लभवेश्म गन्तुमुत्कण्ठिता यावदभून्निशायाम्।
तावन्नवाम्भोधरधीरनादप्रबोधितः सौधशिखी चुकूज ॥ १११ ॥
परिवर्त्तनमर्थेन सदृशा ऽसदृशेन वा।
जायतेऽर्थस्य यत्रासौ परिवृत्तिर्मता यथा ॥ ११२ ॥
अन्तर्गतव्यालफणामणीनां प्रभाभिरुद्भासितभूषु भर्त्तः।
स्फुरत्प्रदीपाणि गृहाणि मुक्त्वा गुहासु शेते त्वदरातिवर्गः ॥११३॥
दत्त्वा प्रहारं रिपुपार्थिवानां जग्राह यः संयति जीवितव्यम्।
शृङ्गारभङ्गीश्च तदङ्गनानामादाय दुःखानि ददौ सदैव ॥ ११४ ॥
प्रत्येकानां पदानामर्थाः सम्बन्धिनः पुनः।
क्रमेण तेन बध्यन्ते तद्यथासङ्ख्यमुच्यते ॥ ११५ ॥
मृदुभुजलतिकाभ्यां शोणिमानं दधत्या
चरणकमलभासा चारुणा चाननेन।
विसकिसलयपद्मान्यात्तलक्ष्मीणि मन्ये
विरहविपदि वैरात्तन्वते तापमङ्गे ॥ ११६ ॥
वस्तुनो यत्र सम्बन्धमनौचित्येन केनचित्।
असम्भाव्यं वदेद्वक्ता तमाहुर्विषमं यथा ॥ ११७ ॥
क्वेदं तव वपुर्वत्से कदलीगर्भकोमलम्।
क्वायं राजीमति क्लेशदायी व्रतपरिग्रहः ॥ ११८ ॥

सहोक्तिः सा भवेद्यत्र कार्यकारणयोः सह।
समुत्पत्तिः कथाहेतोर्वक्तुं तज्जन्मशक्तिताम्॥ ११९॥
आदत्ते सह यशसा नमयति शार्ङ्गं मदेन संग्रामे।
सह विद्विषां श्रियासौ कोदण्डं कर्षति श्रीमान्॥ १२०॥
आपाते हि विरुद्धत्वं यत्र वाक्ये न तत्त्वतः।
शब्दार्थकृतमाभाति स विरोधः स्मृतो यथा॥ १२१॥
कुर्वाणवाणनिवहेन सुवर्मणापि
लोकोत्तरानुबभुवापि च धीवरेण।
मत्स्यार्थिषु प्रसिरणं स्खलितेषु तेन
संग्रामवाप्य युयुधे पुनरेव जिष्णुः॥ १२२॥
येनाक्रान्तं सिंहासनमरिभूभृच्छिरांसि विनतानि।
चित्रा भुवि भरभक्तिः कीर्त्तिर्याता दिगन्तेषु॥ १२३॥
यत्रार्थान्तरमुत्कृष्टं सम्भवत्युपलक्षयन्।
प्रस्तुतार्थस्य स प्रोक्तो बुधैरवसरो यथा॥ १२४॥
स एष नियमानन्दः स्वच्छन्दंतमविक्रमः।
येन नक्तञ्चरः सोऽपि युद्धे वर्वरको जितः॥ १२५॥
यत्र निर्द्धारितात् सारात् सारं सारं ततस्ततः।
निर्द्धार्यते यथाशक्ति तत् सारमिति कथ्यते॥ १२६॥
संसारे मानुष्यं सारं मानुष्यकेऽन्द्र कौलीन्यम्।
कौलीन्ये धर्मित्वं धर्मित्वे चापि सदयत्वम्॥ १२७॥
पदैस्तैरेव भिन्नैर्वा वाक्यं वक्त्रे क्रमेव हि।
अनेकमर्थं यत्रासौ श्लेष इत्युच्यते यथा॥ १२८॥॥
आनन्दसुधासदनः समन्तात् करैरसन्तापकरैः प्रजानाम्।
यस्योदये क्षोभमवाप राज्ञो अगाद वेलां किल सिन्धुनाथः॥१२९॥
कुर्वन् कुवलयोल्लासं रम्याम्भोजश्रियं हरन्।
रेजे राजापि यश्चित्रं निशान्ते कान्तिमत्तया॥ १३०॥

एकत्र यत्र वस्तूनामनेकेषां निबन्धनम्।
अत्युत्कृष्टापकृष्टानां तं वदन्ति समुच्चयम् ॥ १३१ ॥
अणहिल्लपाटकं पुरमवनिपतिः कर्णदेवनृपसूनुः।
श्रीः कलशनामधेयकरी च रत्नानि जगतीह ॥ १३२ ॥
ग्रामे वासो नायको निर्विवेकः
कौटिल्यानामेकपात्रं कलत्रम्।
नित्यं रोगः पारवश्यं च पुंसा-
मेतत्सर्वं जीवतामेव मृत्युः ॥ १३३ ॥
प्रशंसा क्रियते यत्राप्रस्तुतस्यापि वस्तुनः।
अप्रस्तुतप्रशंसां तामाहुः कृतधियो यथा ॥ १३४ ॥
स्वैरं विहरति स्वैरं शेते स्वैरं च जल्पति।
भिक्षुरेकः सुखी लोके राजचौरभयोज्झितः ॥ १३५ ॥
पूर्वपूर्वार्थवैशिष्ट्यनिष्ठानामुत्तरोत्तरम्।
अर्थानां या विरचना बुधैरेकावली मता ॥ १३६ ॥
देशः समृद्धनगरो नगराणि च सप्तभूमिनिलयानि।
निलयाः सलीलललना ललनाश्चात्यन्तकमनीयाः ॥ १३७ ॥
प्रत्यक्षाल्लिङ्गतो यत्र कालत्रितयवर्त्तिनः।
लिङ्गिनो भवति ज्ञानमनुमानं तदुच्यते ॥ १३८ ॥
नूनं नद्यस्तदाभूवन्नभिषेकाम्भसा विभोः।
अन्यथा कथमेतासु जनः स्नानेन शुध्यति ॥ १३९ ॥
जम्भजित्ककुभि ज्योतिर्यथा शुभ्रं विजृम्भते।
उदेष्यति तथा मन्ये खलु सखि निशाकरः ॥ १४० ॥
मुखप्रभावाधितकान्तिरस्या दोषाकरः किङ्करतां बिभर्त्ति।
तल्लोचनश्रीहृतसापराधान्यब्जानि नो चेत् किमयं घृणोति ॥ १४१॥
यत्र साधारणं किञ्चिदेकत्र प्रतिपाद्यते।
अन्यत्र तन्निवृत्त्यै सा परिसङ्ख्योच्यते बुधैः ॥ १४२ ॥

यत्र वायुः परं चौरः पौरसौरभसम्पदाम् ।
युवानश्च क्षतक्रोधा इव बिभ्युः वधूजनात् ॥ १४३ ॥

प्रश्ने यत्रोत्तरं व्यक्तं गूढं वाप्यथवोभयम् ।
प्रश्नोत्तरं तयोक्तानां संसर्गं सङ्करं विदुः ॥ १४४ ॥

अस्मिन्नपारसंसारसागरे मज्जतां सताम् ।
किं समालम्बनं साधो रागद्वेषपरिक्षयः ॥ १४५ ॥

क्व वसन्ति श्रियो नित्यं भूभृतां वद कोविद ।
असावतिशयः कोऽपि यदुक्तमपि नोह्यते ॥ १४६ ॥

किमैभं श्लाघ्यमाख्याति पक्षिणां का कुतो यशः ।
गरुडः कीदृशो नित्यं दानवारिविराजितः ॥ १४७ ॥

वंभण्डसुत्तिसम्पुडमुत्तियमणिणो पहासमूहव्व ।
सिरिवाहडत्ति तणअ आसि बुहो तस्स सोमस्स ॥ १४८ ॥

अचमत्कारिता वा स्यादुक्तान्तर्भाव एव च ।
अलङ्क्रियाणामन्यासामनिबन्धे निबन्धनम् ॥ १४९ ॥

द्वित्रिपदा पाञ्चाली लाटीया सप्त वा पञ्च वा यावत् ।
शब्दाः समासवन्तो भवति यथासङ्ख्यं गौडीया ॥ १५० ॥

द्वे एव रीती गौडीया वैदर्भी चेति सान्तरे ।
एका भूरिसमासा स्यादसमस्तपदापरा ॥ १५१ ॥

दर्पोत्पाटिततुङ्गपर्वतशतप्रावप्रपाताहति-
क्रूराक्रन्ददतुच्छकच्छपकुलकेङ्कारघोरीकृतः ।
विश्वं वर्वरबधमानपयसः शिप्रापगायाः स्फुर-
न्नाक्रामत्ययमक्रमेण बहुलः कल्लोलकोलाहलः ॥ १५२ ॥

विप्राः प्रकृत्यैव भवन्ति लोला लोकोक्तिरेषा न मृषा कदाचित् ।
यच्चुम्ब्यमानां मधुपैर्द्विजेशः क्षिप्यत्ययं कैरविणीं कराग्रैः ॥ १५३ ॥

अर्थेन येनातिचमत्करोति प्रायः कवित्वं कृतिनां मनःसु ।
अलङ्क्रियात्वेन स एव तस्मिन्नभूश्चुतां हन्त दिगानयैव ॥१५४॥
इति श्रीवाग्भटालङ्कारे चतुर्थः परिच्छेदः ॥ ४ ॥

---

साधुपाकेऽप्यनास्वाद्यं भोज्यं निर्लवणं यथा ।
तथैव नीरसं काव्यमिति ब्रूमो रसानिह ॥ १ ॥
विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आरोप्यमाण उत्कर्षं स्थायी भावो रसः स्मृतः ॥ २ ॥
शृङ्गारवीरकरुणाहास्याद्भुतभयानकाः ।
रौद्रबीभत्सशान्ताश्च नवैते निश्चिता बुधैः ॥ ३ ॥
जायापत्योर्मिथो रत्यां वृत्तिः शृङ्गार उच्यते ।
संयोगो विप्रयोगश्च तेऽप्यर्य द्विविधो मतः ॥ ४ ॥
तौ तयोर्भवतो वाच्यौ बुधैर्युक्तवियुक्तयोः ।
प्रच्छन्नश्च प्रकाशश्च पुनरेष द्विधा मतः ॥ ५ ॥
रूपसौभाग्यसम्पन्नः कुलीनः कुशलो युवा ।
अनुद्धतः सूनृतगीः ख्यातो नेतात्र सद्गुणः ॥ ६ ॥
अयं च विबुधैरुक्तोऽनुकूलो दक्षिणः शठः ।
धृष्टश्चेति चतुर्धा स्यान्नायिका स्याच्चतुर्विधा ॥ ७ ॥
नीलीरागोऽनुकूलः स्यादनन्यरमणीरतः ।
दक्षिणश्चान्यचित्तोऽपि यः स्यादविकृतः स्त्रियाम् ॥ ८ ॥
प्रियं वक्त्यप्रियं तस्याः कुर्वन् यो विकृतः शठः ।
धृष्टो ज्ञातापराधोऽपि न विलक्षोऽवमानितः ॥ ९ ॥
अनूढा च स्वकीया च परकीया पणाङ्गना ।
त्रिवर्गिणः स्वकीया स्यादन्याः केवलकामिनः ॥ १० ॥
अनुरक्तानुरक्तेन स्वयं या स्वीकृता भवेत् ।

सानूढेति यथा राज्ञो दुष्यन्तस्य शकुन्तला ॥ ११ ॥
देवतागुरुसाक्ष्येण स्वीकृता स्वीयनायिका ।
क्षमावत्यतिगम्भीरप्रकृतिः सच्चरित्रवत् ॥ १२ ॥
परकीयाऽप्यनूढैव वाच्यभेदो ऽस्ति चानयोः ।
स्वयमप्यतिकामैका सख्यैवैका प्रियं वदेत् ॥ १३ ॥
सामान्यवनिता वेश्या भवेत् कपटपण्डिता ।
न हि कश्चित् प्रियस्तस्या दातारं नायकं विना ॥ १४ ॥
सर्वप्रकारप्रेमैषा याति नायकसुहृता ।
वाच्यः प्रच्छन्न एवान्यस्त्रीणां प्रियसमागमः ॥ १५ ॥
पूर्वानुरागमानात्मप्रवासकरुणात्मकः ।
विप्रलम्भश्चतुर्धा स्यात् पूर्वपूर्वो ह्ययं गुरुः ॥ १६ ॥
स्त्रीपुंसयोर्नवालोकादेवोल्लसितरागयोः ।
ज्ञेयः पूर्वानुरागोऽयमपूर्णस्पृहयोर्दशा ॥ १७ ॥
मानोऽन्यवनितासङ्गादीर्ष्याविसमितिचयते ।
प्रवासः परदेशस्थे प्रिये विरहसम्भवः ॥ १८ ॥
स्यादेकतरपञ्चत्वे दम्पत्योरनुरक्तयोः ।
शृङ्गारः करुणाख्योऽयं दृत्तवर्णन एव सः ॥ १९ ॥
उत्साहात्मा भवेद्वीरस्त्रेधा धर्माजिदानतः ।
नायकोऽत्र भवेत् सर्वैः श्लाघ्यैरधिगतो गुणैः ॥ २० ॥
शोकोत्थः करुणो ज्ञेयस्तत्र भूपातरोदने ।
वैवर्ण्यमोहनिर्वेदप्रलापाश्रूणि कीर्तयेत् ॥ २१ ॥
हासमूलः समाख्यातो हास्यनामा रसो बुधैः ।
चेष्टाङ्गवेषवैकृत्याद्वाच्यो हासस्य चोद्भवः ॥ २२ ॥
कपोलाञ्चितसोल्लासो भिन्नौष्ठः स महात्मनाम् ।
विदीर्णास्यश्च मध्यानामधमानां सशब्दकः ॥ २३ ॥
विस्मयात्माद्भुतो ज्ञेयः स चासम्भाव्यवस्तुनः ।

दर्शनाच्छ्रवणाद्वापि प्राणिनामुपजायते ॥ २४ ॥
तत्र नेत्रविकासःस्यात् पुलकः स्वेद एव च ।
निष्पन्दनेत्रता साधु साधु वाग्गद्गदा च गीः ॥ २५ ॥
भयानको भवेद्भीतिप्रकृति र्घोरवस्तुनः ।
स च प्रायेण वनितानीचबालेषु शस्यते ॥ २६ ॥
दिगालोकास्यशोषाङ्गकम्पगद्गदसंभ्रमाः ।
त्रासवैवर्ण्यमोहाश्च वर्ण्यन्ते विबुधैरिह ॥ २७ ॥
क्रोधात्मको भवेद्रौद्रः क्रोधश्चारिपराभवात् ।
भीष्मवृत्ति र्भवेदुग्रः सामर्षस्तत्र नायकः ॥ २८ ॥
स्कन्धास्फालनमौष्ठदष्टत्वाक्षेपभ्रुकुटयस्तथा ।
आत्मावदाननिजनाक्षेपो दलनं चोपवर्ण्यते ॥ २९ ॥
बीभत्सः स्याज्जुगुप्सातोऽसौम्यश्रवणेक्षणात् ।
निष्ठीवनास्यभङ्गादि स्यादत्र महतां न च ॥ ३० ॥
सम्यग्ज्ञानसमुत्थानः शान्तो निस्पृहनायकः ।
रागद्वेषपरित्यागात् सम्यग्ज्ञानस्य चोद्भवः ॥ ३१ ॥
दोषैरुज्झितमाश्रितं गुणगणैश्चेतश्चमत्कारिणाम्
नानालङ्कृतिभिः परीतमभितो रीत्या स्फुरन्त्या सताम् ।
तैस्तैः सन्मयतां गतं नवरसैराकल्पकालं कवि-
स्रष्टारो रचयन्ति काव्यपुरुषं सारस्वताध्यायिनः ॥३२॥
इति श्रीवाग्भटालङ्कारे पञ्चमः परिच्छेदः ॥

---

अपूर्वः शब्दकोशोऽयं विद्यते तव भारति ।
व्ययतो वृद्धिमायाति क्षयमायाति सञ्चयात् ।
लाटी हास्यरसे प्रयोगनिपुणे रीतिः प्रबन्धे स्तुता
पाञ्चाली करुणाभयानकरसे शान्ते रसे मागधी ।

गौडी वीररसे च रौद्ररसे वच्छोमदेशोद्भवा
बीभत्सादद्भुतयोर्विदर्भविषया श्रृङ्गारभूते रसे ॥ १ ॥
द्वित्रिपदा पाञ्चाली लाटीयाः पञ्च सप्त च यावत्।
शब्दाः समासवन्तो भवन्ति यथाशक्ति गौडीयाः ॥
प्रथमपदा वच्छोमी त्रिपदा समाद्या च मागधी।
भवति उभयोरपि वैदर्भी सुक्ष्मभाषणा कुरुते ॥ अत्र बन्धः॥
प्रबुद्धमतिरादीनां प्रधानं धाम भूरिशः।
कामधारणनीरागकान्तिमद् देहि मेऽनुगम् ॥
सत्वाधिकं सदधिपं जनपापतान-
विच्छेदकं विमदनं क्षतदानजातम्।
ध्येयं विभुं हृदि बिभर्मि सदा भवन्तम्
दत्तं सदादयसमृद्धिकरं मृगाङ्कं ॥ इति हारबन्धः ॥
एवमन्येऽपिज्ञातव्याः ॥

इति श्रीवाग्भटालङ्काले षष्ठः परिच्छेदः॥

वाग्भटालङ्कारः समाप्तः ॥

परिच्छेदानुक्रमः ।


| | | पृष्ठा |
|---|---|---|
| १. | दोषगुणविवेचनम् | १ |
| २. | शब्दालङ्कारनिर्णयः | ५६ |
| ३. | अर्थालङ्कारनिर्णयः | १४१ |
| ४. | उभयालङ्कारविवेचनम् | १८२ |
| ५. | रसविवेचनम् | २६३ |

# सरस्वतीकण्ठाभरणम्।

---

श्रीगणेशाय नमः॥

ध्वनिर्वर्णाः पदं वाक्य-मित्यास्पदचतुष्टयम्।
यस्याः सूक्ष्मादिभेदेन वाग्देवीं तामुपास्महे॥ १॥
निर्दोषं गुणवत् काव्य मलङ्कारैरलंकृतम्।
रसान्वितं कविः कुर्वन् कीर्त्तिं प्रीतिं च विन्दति॥ २॥
दोषाः पदानां वाक्यानां वाक्यार्थानां च षोड़श।
हेयाः काव्ये कवीन्द्रैर्ये तानेवादौ प्रचक्ष्महे॥ ३॥
असाधु चाप्रयुक्तञ्च कष्टञ्चानर्थकञ्च यत्।
अन्यार्थकमपुष्टार्थ मसमर्थं तथैवच॥ ४॥
अप्रतीत मथ क्लिष्ट गूढं नेयार्थमेवच।
सन्दिग्धञ्च विरुद्धञ्च प्रोक्तं यच्चाप्रयोजकम्॥ ५॥
देश्यग्राम्यमिति स्पष्टा दोषाः स्युः पदसंश्रयाः।
तेषां लक्षणं सम्यक् सोदाहरणमुच्यते॥ ६॥
शब्दशास्त्रविरुद्धं यत् तदसाधु प्रचक्षते।

यथा,—भूरिभारभराक्रान्त बाधति स्कन्ध एष ते।
तथा न बाधते स्कन्धो यथा बाधति बाधते॥
अत्र बाधतेरात्मनेपदित्वाद्बाधते इतिस्थाने पुनर्बाधतीति।

कविभि र्न प्रयुक्तं यद् अप्रयुक्तं तदुच्यते॥ ७॥

यथा,—कामचीकमधाः केऽमी त्वामजिह्मायकीयिपन्।

स यस्ति किं वयन्तीमे यं वः कम्यं यरिपत्रति ॥

अत्राचीकमथाः अजिह्नाकोयियन् स्यति वचन्ति यरिपत्रति शम्यःकम्य-मिति शब्दानुशासनसिद्धान्यपि कविभि र्न प्रयुज्यन्ते।

पदं श्रुतेरसुखदं कष्टमित्यभिशब्दितम्।

यथा,—वर्वष्टि जलदो यत्र तत्र दद्रष्टि चातकः।
पोफुल्लिनीपः कालोऽयं चर्कर्ति हृदयं मम॥

अत्र वर्वष्ट्यादीनि क्रियापदानि श्रुत्यसुखदानि श्रूयन्ते।

पादपूरण मात्रार्थ मनर्थकमुदाहृतम्॥ ८॥

यथा,—बिभर्त्ति यश्च देहार्द्धं प्रियामिन्दुं हि मूर्द्धनि।
स वै देवः खलु त्वान्तु पुनातु मदनान्तकः॥

अत्र च हि वै खलु तु इत्येतानि पादानेव पूरयन्ति।

रूढिचुत्रतं पदं यत्तु तदन्यार्थमिति श्रुतं।

यथा, विभजन्ते न ये भूपमालभन्ते न ते श्रियम्।
आवहन्ति न ते दुःखं प्रस्मरन्ति न ये प्रियाम्॥

अत्र विभजतेर्वण्टने आलभतेर्मारणे आवहतेः करणे प्रस्मरते र्विस्मरणे रूढिः। न तु विशेषसेवायामभितोलाभे समन्ताद्वहने प्रकृष्टस्मरणे चेति।

यत्तु तुच्छाभिधेयं स्या दपुष्टार्थं तदुच्यते॥ ८॥

यथा,—शतार्द्ध पञ्चाशभुजो द्वादशार्द्धार्द्ध लोचनः।
विंशत्यर्द्धार्द्ध मूर्द्धा वः पुनातु मदनान्तकः॥

अत्र दशबाहु स्त्रिलोचनः पञ्चवक्त्र इति तुच्छमेवाभिधेयम् अतुच्छशब्दे रुक्तमिति अपुष्टार्थम्॥

असङ्गतं पदं यत्तदसमर्थं तदुच्यते।

यथा,—जलं जलधरे क्षारमयं वर्षति वारिधिः।

इदं दृंहित मश्वानां ककुद्मानेष हेषते ॥

अत्र जलधरो मेघः,वारिधिः समुद्रः,दृंहितं गजानां, हेषितमश्वानामिति लोकप्रसिद्धं तदिह समुद्रमेघाश्वष्टषभविषयतया प्रयुज्यमान मसक्कार्थत्वादवाचकमित्यसमर्थम्।

अप्रतीतं तदुद्दिष्टं प्रसिद्धं शास्त्र एव यत् ॥१०॥

यथा,—किं भाषितेन बहुना रूपस्कन्धस्य सन्ति मे न गुणाः।
गुणनान्तरीयकं च प्रेमेति न तेऽस्त्वयपालम्भः॥

अत्र रूपस्कन्धनान्तरीयकशब्दयोः शास्त्र एव प्रसिद्धत्वादन्यत्राप्रतीयमानयोः प्रयोगादिदमप्रतीतम्॥

दूरे यस्यार्थसंवित्तिः क्लिष्टं नेष्टं हि तत् सताम्।

यथा,—विजितात्मभवद्वेषि·गुरुपादहतो जनः।
हिमापहामित्रधरैः व्याप्तं व्योमाऽभिनन्दति ॥

अत्र विना गरुत्मता जित इन्द्रस्तस्यात्मभवोऽर्जुनस्तस्य द्वेषी कर्णस्तस्य गुरुः सूर्यस्तस्य पादैः रश्मिहतो लोकः आकाश मभिनन्दति। कीदृशं, हिमापहो वह्निः तस्यामित्रो जलं तद्धारयन्ति ये मेघास्तै र्व्याप्त मिति व्यवहितार्थप्रत्ययं क्लिष्ट मेतत्॥.

गूढार्थ मप्रसिद्धार्थप्रयोगं ब्रुवते बुधाः ॥ ११ ॥

यथा,—सहस्रगोरिवानीकं भवतो दुःसहं परैः।
हरेरिव तवाभान्ति नान्यतेजांसि तेजसि ॥

अत्र सहस्रगुशब्देन सहस्राच उक्तः। न च गोशब्दस्याक्षिणि भूयसी प्रसिद्धिः। हरिशब्देन च सहस्रांशुः। सोऽपि तेन न नाम्ना बहुभिरुच्यते इति गूढत्वम्॥

स्वसङ्केतप्रक्लृप्तार्थं नेयार्थमिति कथ्यते।

यथा,—मुखांशवन्तमास्थाय विमुक्तपशुपङ्क्तिना ।
पङ्क्त्यानेकजनामभृत्सुका जित उलूकजित् ॥

अत्र पङ्क्तिशब्देन दशसंख्या। अनेकजनामेत्यनेन चक्रं भृदित्यनेन रथः तामभ्रां दशरथः । तस्य सुक् बालको, लक्ष्मणः तेन जितः उलूकजित् इन्द्रजित् । किं कृत्वा मुखांशवन्तमास्थाय हनूमन्तं किम्भूतेन विमुक्तपशुपङ्क्तिना विमुक्तपुपङ्क्तिना । अत्र पशुशब्देन गोशब्दोलचयते तेन इषवः । तदिदं स्वसङ्केतकल्पितार्थं नेयार्थमुच्यते ॥

न यत् पदं निश्चयकृत् सन्दिग्धमिति तद्विदुः ॥ १२ ॥

यथा,—नीलो लोहितमूर्त्तिर्यो दहत्यन्ते जगत्त्रयम् ।
स एष हि महादेवस्त्रिषु लोकेषु पूज्यते ॥

अत्र वह्निरर्कः शिवो वेति न निश्चीयते ॥

विरुद्धं विपरीतार्थप्रकल्पनमिहोच्यते ।

यथा,—अनुत्तमानुभावस्य परैरपि हितौजसः ॥
अकार्यसुहृदोऽस्माकमपूर्व्वाः स्तव कीर्त्तयः ॥

अत्रानुत्तमइत्यनेन यथोत्कृष्टस्तथापकृष्टोऽपि । अपिहितमित्यनेन यथाना च्छादितं तथाच्छादितमपि । अकार्यसुहृदित्यनेन यथा कार्यमन्तरेण यः सुहृदेवमकार्ये यः सुहृत् सोप्युच्यते । अपूर्व्वाः कीर्त्तय इत्यनेन यथाद्भुताः कीर्त्तय एवमकीर्त्तयोऽप्युच्यन्ते ॥

अप्रयोजकमित्याहुरविशेषविधायकम् ॥ १३ ॥

यथा,—तमालश्यामलचारं मत्यच्छमतिफेनिलम् ।
भालेन लङ्घयामास हनूमानेष सागरम् ॥

अत्र तमालश्यामलमित्यादीनि सागरविशेषणानि लङ्घनेन हनुमतोऽतिशयं सूचयन्ति ॥

सहेश्यमिति निर्दिष्टं यदुत्पत्तिमत्पदम्

यथा,—गल्लौ लावण्यतल्लौ ते ललल्लौ लडल्लौ भुजौ।
नेत्रे वोसट्टकन्दोट्टमोट्टायितसखे सखि॥
अत्र गल्लतल्लादयः शब्दा अव्युत्पत्तिमन्तो देश्या दृश्यन्ते॥

अश्लीलामङ्गलघृणावदर्थं ग्राम्यमुच्यते॥ १४॥
अत्राश्लीलमसभ्यार्थ मसभ्यार्थान्तरञ्च यत्।
असभ्यस्मृतिहेतुश्च त्रिविधं परिपठ्यते॥ १५॥

तेष्वसभ्यार्थं यथा,
छत्राकारशिराः शिरालसरलस्थूल प्रकाण्डो महान्
मध्ये भानुसुताम्बसिन्धुविपुलाभोगो वटः पातु वः।
कायैकत्र्ये विकटप्रसारितमहाजङ्घमहीसुभ्रयोः
यः खण्डेन्दुकिरीटकैटभजितोः काटश्रियं कर्षति॥
तदेतच्छत्राकारशिराः काटइत्यादेरसभ्यार्थत्वादसभ्यार्थम्॥
असभ्यार्थान्तरं॥ यथा,
विद्यामभ्यसतो रात्राविति या भवतः प्रिया।
वनिता गुह्यकेशानां कथं ते पेलवं धनम्।
तदेतद् यो भवतः प्रिया वनितागुह्यकेशानां पेलवंधन शब्दानाम-
सभ्यार्थान्तरत्वादसभ्यार्थान्तरम्॥ असभ्यस्मृतिहेतुर्यथा,
उत्कम्पयसि मां चूत पिकवाक्काटवेन किम्।
कुतः कृकाटिकापान्ते पादः प्राणेन यास्यता॥
तदिदं काटवकृकाटिकापदयो रसभ्यस्मृतिहेतुत्वादसभ्यस्मृतिहेतुः।

लोकेषु यदशस्तार्थं मशस्तार्थान्तरञ्च यत्।
अशस्तास्मृतिहेतुश्चामङ्गलार्थं त्रिधेव तत्॥ १६॥

तेष्वशस्तार्थं यथा।

खेटके भक्तस्तस्य वलभ्याः पतनसत्र च ।
अद्यप्रोऽहं मरिष्यामि हे चले भाषितस्य च ॥

अत्र मरिष्यामीति पदमश्लार्थं ।

अश्लीलार्थान्तरं यथा ।

प्रवासयति या कान्तं वसन्ते गृहसंस्थितम् ।
विना प्रपयदानेन पिशाची सा न चाङ्गना ॥

अत्र प्रवासयति संस्थितं विनाप्रपयदानेन पिशाचीपदानामश्लीलार्थान्तरत्वम् ।

अश्लीलस्मृतिहेतु यथा,

मारीचोऽयं मुनिर्यस्त्र कृत्याः कालान्तकालये ।
यत्या संक्रन्दनादीनां सुतानामाश्रयेऽभवन् ॥

अत्र मारीच कृत्या कालान्तक संक्रन्दन पदानामश्लीलार्थस्मृतिहेतुत्वं ।

पदमर्थं घृणावन्तं यदाद्यार्थान्तरञ्च यत् ।
घृणावत् स्मृतिहेतुर्यत् तद् घृणावदिह त्रिधा ॥ १७ ॥

तेषु घृणावदर्थं यथा,

पर्द्दते रुदते स्तन्यं वमत्येष स्तनन्धयः ।
मुञ्चत्यकौति निष्ठीवत्याप्तगर्भा पुनर्वधूः ॥

अत्र पर्द्दते रुदते वमति निष्ठीवति इति शब्दानां घृणावदर्थत्वम् ।

घृणावदर्थान्तरं यथा ।

वाष्पक्लिन्नाविमौ गण्डौ विपूयापाण्डुरौ तव ।
मियोऽग्रे विष्ठितः पुंसि स्खलवर्चोभि रचेति ।

अत्र क्लिन्न गण्ड विपूय विष्ठित वर्चः पदानां घृणावदर्थान्तरकम् ॥

घृणावत्स्मृतिहेतु यथा ।

मत्यार्द्रयन्तो रूढानि मदनेषु व्रणानि नः ।
हृदयं क्लेदयन्त्वेते पुरीषण्डमशङ्कमाः ॥

अत्र रूढव्रणपुरीषगण्डपदानां रुण्डावत्त्वस्य तिरोहितत्वं।

शब्दहीनं क्रमभ्रष्टं विसन्धि पुनरुक्तिमत्।
व्याकीर्णं वाक्यसङ्कीर्णं सपदं वाक्यगर्भितं॥ १८॥
द्वे भिन्नलिङ्गवचने द्वे च न्यूनाधिकोपमे।
भग्नच्छन्दोयती च द्वे अशरीरमरीतिमत्॥ १९॥
वाक्यस्यैते महादोषाः षोड़शैव प्रकीर्त्तिताः।
अथैषां लक्ष्म संक्षेपात् सनिदर्शनमुच्यते॥ २०॥
उच्यते शब्दहीनं तद्वाक्यं यदपशब्दवत्।

यथा,—नीरन्ध्रं गमितवति क्षयं पृषत्कैः
भूतानामधिपतिना शिलावितानें।
गाण्डीवी कनकशिलानिभं भुजाभ्याम्
आजघ्ने विषमविलोचनस्य वक्षः॥

अत्र गमितवतीति क्तवतोः कर्मणि, आजघ्न इति आत्मनेपदस्य अस्वाङ्गकर्मणि प्रयोगादपशब्दौ। तौ च शिलावितानतत्पच्चवक्षःसम्बन्धाद्वाक्यदोषौ जायमानौ असाधुनाम्नः पददोषाद्भिद्येते।

क्रमभ्रष्टं भवेदर्थो शाब्दो वा यत्र न क्रमः॥ २१॥

यथा,—तुरङ्गमथ मातङ्गं प्रयच्छास्मै मदालसं।
कान्तिप्रतापौ भवतःसूर्य्याचन्द्रमसोः समौ॥

अत्र मातङ्गमथ तुरङ्गमिति वक्तव्ये तुरङ्गमथ मातङ्गमित्यार्थः, कान्तिप्रतापौ चोक्ता सूर्य्याचन्द्रमसोः समाविति शाब्दः क्रमभ्रंशो लक्ष्यते।

विसंहितो विरूपो वा यस्य सन्धि विंसन्धि तत्॥

यथा,—मेघानिलेन अमुना एतस्मिन्नद्रिकानने।
मञ्जर्य्युद्गमगर्भासौ तर्वाल्युर्वी विधूयते॥

इत्यादौ तु विरूपसन्धानं विसन्धिः।

पदं पदार्थश्चाभिन्नौ यत्र तत् पुनरुक्तिमत् ॥ २२ ॥

यथा,—उत्कामुन्मनयन्त्येते बालां तदलकत्विषः ।
अम्भोधराः सतडित्वन्तो गम्भीराः स्तनयित्नवः ॥
अत्र उत्काम् उन्मनयन्ति इत्यर्थपुनरुक्तम् । गम्भीराः स्तनयित्नव इति शब्दपुनरुक्तम् ।

व्याकीर्णं तन्मिथो यस्मिन् विभक्तीनामसङ्गतिः ।

यथा,—दण्डे चुम्बति पद्मिन्या हंसः कर्कशकण्टके ।
मुखं वल्गुरवं कुर्व्वन् तुण्डेनाङ्गानि घट्टयन् ॥
अत्र कर्कशकण्टके दण्डेऽङ्गानि घट्टयन् हंसः पद्मिन्या मुखं चुम्बतीति वक्तव्ये यथानिर्दिष्टरूपे विघटितविभक्तिकत्वाद् व्याकीर्णं ।

वाक्यान्तरपदैर्मिश्रं सङ्कीर्णमिति तद्विदुः ॥ २३ ॥

यथा,—काअं खाअइ खुहिओ कूरं फेल्लेइ णिब्भरं रुट्ठो ।
सुणअं गेण्हइ कण्ठे हक्केइ अ णत्तिअं ठेरो ॥
अत्र काकं क्षिपति कूरं खादति कण्ठे नप्तारं गृह्णाति श्वानं भीषयते इत्यादौ वक्तव्ये यथोक्तपदविन्यासः सङ्कीर्य्यते ।

विभिन्न प्रकृतिस्थादि पदयुक्तमपदं विदुः ॥

यथा,—आउच्छच पिट्ठिअए जह कुक्कुलिणा ममज्ज भत्तालें ।
पेक्खन्तह लाउलकलणिच्चा ह हा कस्स कन्देमि ॥
तदेतत् प्रकृतिस्थकोमलकठोराणां नागरोपनागराणां ग्राम्याणां वा पदानामयुक्तरपदं ॥

वाक्यान्तरसगर्भं यत्तदाहुः वाक्यगर्भितं ॥ २४ ॥

यथा,—योगत्रो यस्ते पुत्र सोऽयं दशवदन लक्ष्मणेन मया ।
रक्ष्यैनं यदि शक्ति मृत्युवशं नीयते विवशः ॥

अत्र योगत्रो य स्ते पुत्रो लक्ष्मणेन मया मृतुत्रवर्गं नीयते इति वाक्यस्य रचैनं यदि शक्तिरिति वाक्यान्तरेण सगर्भत्वाद्गर्भितं।

यत्रोपमा भिन्नलिङ्गा भिन्नलिङ्गं तदुच्यते।
भवेत्तद्भिन्नवचनं यद्भिन्नवचनोपमं॥ २५॥

यथा,—अविगाह्योऽसि नारीणामनन्यवचसामपि।
विषमोपलभिन्नोर्मिरापगेवोत्तितीर्षत:॥

अत्रापगेव त्वमविगाह्योऽसीति लिङ्गभेद:। नारीणामुत्तितीर्षत इति लिङ्गभेदो वचनभेदश्च॥ तदिदं द्वयोरेकमेवोदाहरणं।

अथ भिन्नलिङ्गस्यैव यथा,

वापीव विमलं व्योम हंसीव धवल: शशी।
शशिलेखेव हंसोऽयं हंसालिरिव ते यश:॥

भिन्नवचनस्यैव यथा,

सरांसीवामलं व्योम काशा इव सित: शशी।
शशीव धवला हंसा हंसीव धवला दिश:॥

न्यूनोपममिह न्यूनमुपमानविशेषणै:।

यथा,—संहअचक्कवाअजुआ विअसिअकमला मुणालसंच्छणा।
वावी वहुव्व रोअणविलित्तथणआ सुहावेइ॥

अत्र नेत्रवाद्युपमापदानां वधूविशेषणत्वेनानुक्तत्वादिदं न्यूनोपमं।

अधिकं यत् पुनस्तै: स्यात्तदाहुरधिकोपमम्॥ २६॥

यथा,—अहिणवमणहरविरइअवलअविहूसा विहाइ णववहुआ।
कुन्दलएव्व समुप्फुल्लगुच्छपरिणित्तभमरगणा॥

इदं भ्रमरगणस्योपमानविशेषणस्याधिक्यादधिकोपमं।

भग्नच्छन्द इति प्राहु र्यच्छन्दोभङ्गवद्वच:।

यथा, यस्मिन् पञ्च पञ्च जना आकाशश्च प्रतिष्ठित:।

तमेव धीरो विज्ञाय प्रज्ञां कुर्व्वीत ब्राह्मणः ॥
अत्र पञ्चमवर्णस्य लघोः स्थाने गुरोः करणाच्छन्दोभङ्गः ।

अस्थाने विरतिर्यस्य तत्तु भग्नयतीष्यते ॥ २७ ॥

यथा,—ब्रह्मेन्द्रोपेन्द्रादिगीर्व्वाणवन्द्यो भक्तानां भूयाच्छ्रिये चन्द्रचूडः ।
स्त्रीणां संगीतं समाकर्णयन् केतदस्ताम्भोदं सदोऽध्यास्त देवः ॥
अत्र चतुर्थस्थाने यतौ कर्त्तव्यायां तदन्यत्र यतिकरणाद् भग्नयतीदं ॥

क्रियापदविहीनं यदशरीरं तदुच्यते ।

यथा,—खेलसुआरुहञ्च सुहाण बहुसुद्दसलिलेहम् ।
सीसपरिट्ठिअगङ्गं संजापणअं पमहणाहं ॥
क्रियापदाभावादशरीरमिदं ।

गुणानां दृश्यते यत्र श्लेषादीनां विपर्ययः ॥ २८ ॥
अरीतिमदिति प्राहुस्तत्त्रिधैव प्रचक्षते ।
शब्दार्थोभययोगस्य प्राधान्यात् प्रथमं त्रिधा ॥ २९ ॥
भूत्वा श्लेषादियोगेन पुनस्त्रेधोपजायते ।
अत्र यः श्लेषसमता सौकुमार्य्यविपर्ययः ॥ ३० ॥
शब्दप्रधानमाहुस्तमरीतिमतिदूषणं ॥
तत्र । विपर्ययेण श्लेषस्य संदर्भः शिथिलो भवेत् ॥ ३१ ॥
यथा,—आलीयं मालतीमाला लोलालिकलिला मनः ।
निर्म्मूलयति मे मूलात्तमालमलिने वने ॥
अत्र भिन्नानामपि पदानां एकपदताप्रतिभासहेतुरनतिकोमलो बन्धविशेषः श्लेषः ॥ तद्विपर्ययेण शब्दप्रधानोऽयं श्लेषविपर्ययः ॥

भवेत् स एव विषमः समताया विपर्ययात् ।

यथा,—कोकिलालापवाचालो मामेति मलयानिलः ।
उच्छलच्छीकराच्छाच्छनिर्भराम्भःकणोक्षितः ॥

अत्र पूर्वार्द्धस्य मृदुबन्धत्वादुत्तरार्द्धस्य च गाढबन्धत्वात् समबन्धेषु विषममिति विषमो नाम शब्दप्रधानः समताविपर्ययो दोषः ॥

सौकुमार्य्यविपर्यासात् कठोर उपजायते ॥ ३२ ॥

यथा,—अशितर्त्तितुगद्रिच्छित् स्वःश्चितां पतिरद्दिदृक्।
अमिद्धिः मुभ्रद्दगृद्दष्टे ह्निं मो जेघ्नीयिषीष्ट वः ॥
अत्रातिकठोरत्वादसौकुमार्य्यं सुप्रतीतमेव।

या तु कान्तिप्रसादार्थव्यक्तीनामन्यथा स्थितिः।
अर्थप्रधानः प्रोक्तः स वाक्यस्य गुणविपर्ययः ॥ ३३ ॥
अप्रसन्नं भवेद्वाक्यं प्रसादस्य विपर्ययात् ॥

यथा,—अनङ्गकमलंचक्रे मयमाना मरालिका।
यस्या नत्यर्जुनाब्जन्मसदृक्षांको वलक्षगुः ॥
अत्र शब्दानामनतिप्रसिद्धार्थत्वादप्रसन्नत्वमिति सोऽयमर्थप्रधानः प्रसादविपर्ययो दोषः ॥

वाक्यं भवति नेयार्थ मर्थव्यक्तेर्विपर्ययात् ॥ ३४ ॥

यथा,—मही महावराहेण लोहिताद्दुद्धृतोदधेः ॥
इतीयत्येव निर्द्दिष्टे नेया लौहित्यहेतवः ॥
तदिदं निगदेनैव व्याख्यातमित्यर्थप्रधानोऽयमर्थव्यक्तिविपर्ययः ॥

कान्तेर्विपर्ययाद्वाक्यं ग्राम्यमित्यपदिश्यते।

यथा,—विरहे ते विषीदन्तं निषीदन्तं तवान्तिके।
कन्ये कामयमानं मां त्वं न कामयसे कथं ॥
इदमुक्तग्राम्यतया कान्तिहीनमित्यर्थप्रधानोऽयं कान्तिविपर्ययोदोषः ॥

ओजोमाधुर्य्यप्रौदार्य्यं न प्रकर्षाय जायते ॥ ३५ ॥
यस्मिंस्तमाङ्गरुभयप्रधानं तद् विपर्ययात्।

वाक्येन यः खण्डयन् रीतिं भवत्योजोविपर्ययः ॥
असमस्तमिति प्राहुः दोषं तमिह तद्विदः ॥ ३६ ॥

यथा,—स्मरः खरः खलः कान्तः कायः कोपधनः कृशः ।
च्युतो मानोऽधिको रागो मोहो जातोऽसवो गताः ॥

अत्र सत्यसमस्तपदाभिधाने सत्यपिचार्थस्य सौकुमार्ये श्लेषादिगुणसामग्र्यभावान्न वैदर्भी रीतिः । नापि यथोक्तलक्षणा भावाद्गौडीयादय इति । खण्डितरीतित्वादयमोजोविपर्ययःशब्दार्थप्रधानो गुणविपर्ययो दोषो भवति ॥ यदाह ॥

इत्यादिबन्धपारुष्यं शैथिल्यञ्च नियच्छति ।
अतोनैनमनुप्रासं दाक्षिणात्याः प्रयुञ्जते ॥ ३७ ॥
माधुर्यव्यत्ययो यस्तु जायते रीतिखण्डनात् ।
तदनिर्व्यूढमित्युक्तं काव्यसर्वस्ववेदिभिः ॥ ३८ ॥

यथा,—नखिनाञ्च नदीनाञ्च शृङ्गिणां शस्त्रपाणिनाम् ।
विश्वासो नैव कर्त्तव्यः स्त्रीषु राजकुलेषु च ॥

अत्र नखिनां नदीनाञ्चेति षष्ठ्यन्ताच्चकारेण रीतेरुपक्रमे शृङ्गिणां शस्त्रपाणिनामिति चकारानिर्वाहात् स्त्रीषु राजकुलेषु चेति षष्ठीपरित्यागादमधुरार्थत्वाच्च माधुर्यविपर्ययनामायं शब्दार्थप्रधानो गुणविपर्ययो दोषः ॥ यदाहुः ।

मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः ।
येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः ॥ ३९ ॥
यया कयाचिच्छ्रुत्या यत् समानमनुभूयते ।
तद्रूपा हि पदासत्तिः सानुप्रासा रसावहा ॥ ४० ॥
यस्तु रीतेरनिर्वाहादौदार्यस्य विपर्ययः ।
वाक्ये तदनलङ्कारमलङ्कारविदो विदुः ॥ ४१ ॥

यथा,—दीर्घपुच्छश्चतुष्पादः ककुद्मान् लम्बकम्बलः।
गोरपत्यं बलीवर्द्दस्तृणमत्ति मुखेन सः॥
तदिदमपुष्टार्थत्वादनुत्कृष्टविशेषणमनुदारं निरलङ्कारमाचक्षते सोऽय-मौदार्यविपर्ययो नाम शब्दार्थप्रधानो गुणविपर्ययो दोषः॥ यदाह।

श्लाघ्यै र्विशेषणै र्युक्तमुदारं वाक्यमिष्यते।
यथा लीलाम्बुजक्रीडासरोहेमाङ्गदादयः॥ ४२॥
उत्कर्षवान् गुणः कश्चिदुक्ते यस्मिन् प्रतीयते।
तदुदाराह्वयं तेन सनाथा काव्यपद्धतिः॥ ४३॥
अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम्।
खिन्नं चैवातिमात्रञ्च परुषं विरसं तथा॥४४॥
हीनोपमं भवेच्चान्यदधिकोपममेव च।
असदृशोपमं चान्यदप्रसिद्धोपमं तथा॥ ४५॥
निरलङ्कारमश्लीलं विरुद्धमिति षोड़श।
उक्ता वाक्यार्थजा दोषास्तेषां वक्ष्यामि लक्षणम्॥ ४६॥
समुदायार्थशून्यं यत्तदपार्थं वचः स्मृतम्।

यथा,—जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मङ्गलानि।
तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्घः॥
अत्र समुदायार्थः कोऽपि नास्तीत्यपार्थमिदं॥

व्यर्थमाक्षर्गतार्थं यद् यच्च स्यान्निष्प्रयोजनं॥ ४७॥

यथा,—आंह्रिपातां रघुव्याघ्रौ शरभङ्गाश्रमं ततः।
स्वामश्चौघीत्तनुं वह्नौ दृष्ट्वा तौ रामलक्ष्मणौ॥
अत्रांह्रिपातां दृष्ट्वेत्यनेनैव ताविति, रघुव्याघ्रावित्यनेनैव राम-लक्ष्मणाविति, तनुमित्यनेनैव स्वामिति, अह्रौषीदित्यनेनैव वह्ना-विति गम्यत इति गतार्थत्वं। नच शरभङ्गाश्रमगमनं तनुहोमो वाग्रतः

कथाशरीरोपयोगीति निष्प्रयोजकत्वं । अतोऽयं व्यर्थनामा वाक्यस्य महावाक्यस्य च दोषो भवति । आयत्याँ च दृत्त्या लब्धस्य शास्त्रे तिङा-दौ शब्दवृत्त्या भणनमपौनरुक्त्यायेत्यर्थपुनरुक्तं भिद्यते ॥

उक्तार्थभिन्नार्थमेकार्थं

यथा,—प्रसाधितस्याथ मुरद्विषोऽभूदन्यैव लक्ष्मीरिति युक्तमेतत् ।
वपुष्यशेषेऽखिललोककान्ता सानन्यकान्ता ह्युरसीतरा तु ॥

इतुयक्तं कार्थमेवाह ।

कपाटविस्तीर्णमनोरमोरःस्थलस्थितश्रीललनस्य तस्य ।
आलिङ्गिताशेषजना बभूव सर्वाङ्गसङ्गिन्यपरैव लक्ष्मीः ॥

अनयोः श्लोकयोरभिन्नार्थमेकं वाक्यं महावाक्ये दृश्यते ।

सन्दिग्धार्थं ससंशयं ।

यथा,—मनोरथप्रियालोकरसलोलेक्षणे सखि ।
आराद्वृत्तिरियं माता न क्षमा द्रष्टुमीदृशीं ॥

अत्रारात्प्रभृतिशब्दानामुभयार्थत्वान्माता द्रक्ष्यति नवेति सन्दिग्धं ।

वाक्यं यत्तु क्रमभ्रष्टं तदपक्रममुच्यते ॥ ४८ ॥

यथा,—काराविऊण खउरं गामउडो मज्जिओ अ जिमिओ अ ।
णक्खत्तं तिहिवारे जोइसिअं पुच्छिउं चलिओ ॥

अत्र क्षुरकर्मणोऽनन्तरं नक्षत्रादिप्रश्नादिदमपक्रमं ।

जात्याद्युक्तावनिर्व्यूढं खिन्नमाहुर्महाधियः ।

यथा,—विवाहिऊ णववहुआ सासुरयं दोलिआ दूणिज्जन्ती ।
रोअइ दिग्वारेलं जंभेइ, पासेअ पञ्जन्ते ॥

अत्र प्रक्रान्तस्य नवपरिणयवतीस्वरूपभणनस्यानिर्व्यूढत्वात् खिन्नत्वं ।

यत् सर्वलोकातीतार्थमतिमात्रं तदुच्यते ॥ ४९ ॥

यथा,—भङ्गेण कलिकाकोपस्तया भ्रमयोदरत।
यवर्षे विपिनोत्सङ्गे गोष्पदप्रं यथा मधु॥
अत्र कलिकाकोपे गोष्पदप्रमधुवर्षस्यासम्भवादतिमात्रत्वं।

यत्तु क्रूरार्थं मत्यर्थं परुषन्तु तदुच्यते।

यथा,—खाहि विसं पिअ मुत्तं णिज्झसु मारीअ पडउ दे वज्जं।
दन्तखण्डिअअपाआ खिविज्जण सुआं सवह माआ॥
अत्र खाद विष मित्यादीनां क्रूरार्थानामभिधानात् पारुष्यं।

अप्रस्तुतरसं यत् स्यात्तद्विरसं तन्निगद्यते॥ ५०॥

यथा,—तव वनवासोऽनुचितः पितृमरणशुचं जहीहि किं तपसा।
सफलं ययौ वनमेतत् सममनुरक्तेन सुतनु मया॥
अत्र पितृमरणसन्तप्तायाः सम्भोगप्रवर्त्तनमप्रकृतरसत्वाद्विरसं॥

हीनं यत्रोपमानं स्यात्तत्तु हीनोपमं स्मृतं।

यथा,—क्वचिदग्रे प्रसरता क्वचिदायत्यनिघ्नता।
शुनेव सारङ्गकुलं त्वया भिन्नं द्विषत्कुलं॥
अत्र शौर्यशालिनः शुनोपमितत्वाद्धीनोपममिदम्।

तदेव यस्मिन्नधिकं तद्भवेदधिकोपमं॥ ५१॥

यथा,—अयं पद्मासनासीनश्चक्रवाको विराजते।
युगादौ भगवान् ब्रह्मा विनिर्मित्सुरिव प्रजाः॥
अत्र चक्रवाकस्य जगत्स्रष्ट्रा ब्रह्मणा उपमितत्वादधिकोपममिदं।

यत्तु तुल्योपमानं तद्वदन्त्यसदृशोपमं।

यथा,—णमह हरं रोसाणलणिद्दड्ढमुद्धमम्महसरीरं।
विलअणिअम्बणिग्गअगङ्गासोत्तं व हिमवन्तं॥
अत्र कोपानलनिर्दग्धमुग्धमन्मथशरीरस्य हरस्य नितम्बनिर्गतस्रोतसा

हिमवद्गिरिणा सहासादृश्यादिदमसदृशोपमं ।

अप्रसिद्धोपमानं यदप्रसिद्धोपमं हि तत् ॥ ५२ ॥

यथा,—कुमुदमिव मुखं तस्या गौरिव महिषः शशीव वाक्यमिदं ।
शरदिव भाति तरुणी विकसितपुलकोत्करा ज्ञेयमिति ॥

अत्र कुमुदमुखयो र्गोमहिषयो र्वाक्यशशिनोश्च प्रतीयमाने शरत्तरुण्यो श्चाभिधीयमाने सादृश्ये उपमानोपमेयभावस्याप्रसिद्धत्वादप्रसिद्धोपममिदं ।

यदलङ्कारहीनं तन्निरलङ्कारमुच्यते ।

यथा,—कोला खणन्ति मोत्थं गिद्धा खाअन्ति मच्छअं साइं ।
उलुचा हणन्ति काए काआ उलुए वि वाअन्ति ॥

अत्र कोलादेः स्वरूपायनभिधानाज्जात्याद्यलङ्कारासम्भवे निरलङ्कारनामायं वाक्यार्थदोषः । सविशेषणाद् गोरपत्यमित्यादेर्वाक्यदोषाद् भिद्यते ।

अश्लीलमिति निर्दिष्टमश्लीलार्थप्रतीतिकृत् ॥ ५३ ॥

यथा,—उद्यतस्य परं हन्तुं स्तब्धस्य विवरैषिणः ।
पतनं जायतेऽवश्यं कृच्छ्रेण पुनरुन्नतिः ॥

अत्रोद्यतस्य परं हन्तुमिति सम्भोगारम्भविषया, स्तब्धस्य विवरैषिण इति वराङ्गविषया, पतनं जायतेऽवश्यमिति रेतोविसर्गविषया, कृच्छ्रेण पुनरुन्नतिरिति नष्टरागप्रत्यानयनविषया अश्लीला वाक्यार्थविषया प्रतीति र्भवति ।

विरुद्धं नाम तद् यत्र विरोधस्त्रिविधो भवेत् ।
प्रत्यक्षेणानुमानेन तद्वदागमवर्त्मना ॥ ५४ ॥
यो देशकाललोकादिप्रतीपः कोऽपिदृश्यते ।
तमामनन्ति प्रत्यक्षविरोधं शुद्धबुद्धयः ॥ ५५ ॥

तत्र देशविरोधो यथा,—

सुराष्ट्रेष्वस्ति नगरी मथुरा नाम विश्रुता।
अचोटनारिकेराढ्या यदुपान्ताद्रिभमयः॥

अत्र सुराष्ट्रेषु मथुरा नाम नास्ति तत्पर्यन्ताद्रिभूमिषु चाचोटनारिकेराणामभावात्। देशोऽद्रिवनराष्ट्रादिरित्ययं देशकृतः प्रत्यक्षविरोधः। कालविरोधो यथा,—

पद्मिनी नक्तमुन्निद्रा स्फुटत्यह्नि कुमुद्वती।
मधुरुत्फुल्लनिचुलो निदाघो मेघनिस्वनः॥

अत्र पद्मिन्या नक्तं, कुमुद्वत्या अह्नि, मधौ निचुलानामुन्निद्रत्वाद्यभावात् निदाघस्य चामेघदुर्दिनत्वात् कालो नक्तं दिनत्तं वे इति कालकृतोऽयं प्रत्यक्षविरोधः। लोकविरोधो यथा,—

आधूतकेशरो हस्ती तीक्ष्णशृङ्गस्तुरङ्गमः।
गुरुसारोऽयमेरण्डो निःसारः खदिरद्रुमः॥

अत्र हस्तिहयैरण्डखदिराणां केशरादिसद्भावस्य प्रत्यक्षेणानुपलम्भात् जङ्गमः स्थावरो लोक इति लोककृतोऽयं प्रत्यक्षविरोधः॥

युक्त्यौचित्यप्रतिज्ञादिकृतो यस्त्विह कश्चन।
अनुमानविरोधः स कविमुख्यैर्निगद्यते॥ ५६॥

तत्र युक्तिविरुद्धं यथा।

सुरहिमङ्गपाणलम्पडभमरगणावद्धमण्डलीवन्धं।
कस्स मणं णाणन्दइ कुम्मीपुट्ठठिअं कमलं॥

अत्र कूर्मपृष्ठकमलोद्गतेरयुक्तत्वाद् युक्तिविरुद्धमिदं॥

औचित्यविरुद्धं यथा।

पट्टंसुउत्तरिज्जेण पामरो पामरीए परिपुसइ।
अइगरुअकूरकुम्भीभरेण सेउल्लिअं वअणं॥

अत्र पामरस्य पट्टांशुकोत्तरीयभणनानौचित्याद् औचित्यविरुद्धमिदं॥

प्रतिज्ञाविरुद्धं यथा,—

यावज्जीवमहं मौनी ब्रह्मचारी च मे पिता ।
माता च मम वन्ध्यासीत् स्मराभोऽनुपमो भवान् ॥

अत्र स्वयं वक्तुरेव यावज्जीवमहं मौनीत्यादिपदानामुक्त्या प्रतिविरोधात् प्रतिज्ञाविरुद्धमिदं ॥

धर्मार्थकामशास्त्रादिविरोधः कोऽपि यो भवेत् ।
समागमविरोधाख्यं दोषमाचक्षते बुधाः ॥ ५७ ॥

तेषु धर्मशास्त्रविरोधो यथा,—

असावनुपनीतोऽपि वेदानधिजगे गुरोः ।
स्वभावशुद्धस्फटिको न संस्कारमपेक्षते ॥

अत्रानुपनीतस्य वेदाध्ययनानधिकाराद्धर्मशास्त्रविरोधः ॥

अर्थशास्त्रविरोधो यथा ।

कामोपभोगसाकल्यफलो राज्ञां महीजयः ।
अहङ्कारेण जीयन्ते द्विषन्तः किं नयश्रिया ॥

अत्र महीजयस्य फलत्वेन कामोपभोगानामर्थशास्त्रकारैरननुमतत्वात् विजये चाहङ्कारस्याहेतुत्वादर्थशास्त्रविरोधः ॥

कामशास्त्रविरोधो यथा,—

तवोत्तरोष्ठे बिम्बोष्ठि दशनाङ्को विराजते ।
पूर्णसप्तस्वरः सोऽयं भिन्नग्रामः प्रवर्त्तते ॥

अत्रोत्तरोष्ठे दशनाङ्कस्य कामशास्त्रकारैरननुज्ञानात् कामशास्त्रविरोधः ॥ भिन्नग्रामाणां च पूर्णसप्तस्वरत्वानुपपत्तेः कलाविरोधोऽपि तदङ्गत्वात् कामशास्त्रविरोध एव ॥

एवं पदानां वाक्यानां वाक्यार्थानाञ्च यः कविः ।
दोषान् हेयतया वेत्ति स काव्यं कर्त्तुमर्हति ॥ ५८ ॥
अलङ्कृतमपि श्रव्यं न काव्यं गुणवर्जितं ।

गुणयोगस्तयोर्मुख्यो गुणालङ्कारयोगयोः ॥ ५९ ॥
त्रिविधाश्च गुणाः काव्ये भवन्ति कविसम्मताः ।
बाह्याश्चाभ्यन्तराश्चैव ये च वैशेषिका इति ॥ ६० ॥
बाह्याः शब्दगुणास्तेषु चान्तरास्त्वर्थसंश्रयाः ।
वैशेषिकास्तु ते नूनं दोषत्वेऽपि हि ये गुणाः ॥ ६१ ॥
चतुर्विंशतिराख्यातास्तेषु ये शब्दसंश्रयाः ।
ते तावदभिधीयन्ते नामलक्षणयोगतः ॥ ६२ ॥
श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिस्तथा कान्तिरुदारत्वमुदात्तता ॥ ६३ ॥
ओजस्तथान्यदौर्जित्यं प्रेयानथ सुशब्दता ।
तद्वत् समाधिः सौक्ष्म्यञ्च गाम्भीर्यमथ विस्तरः ॥ ६४ ॥
संक्षेपः संमितत्वञ्च भाविकत्वं गतिस्तथा ।
रीतिरुक्तिस्तथा प्रौढिरथैषां लक्ष्यलक्षणे ॥ ६५ ॥

तत्र, गुणः सुश्लिष्टपदता श्लेष इत्यभिधीयते ।

यथा,—उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेतां ।
तदोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥

अत्र भिन्नानामपि पदानामेकपदताप्रतिभासहेतुत्वेन सन्दर्भस्य सुश्लिष्टत्वादयं श्लेषो नाम शब्दगुणः ॥

प्रसिद्धार्थपदत्वं यत् स प्रसादो निगद्यते ॥ ६६ ॥

यथा,—गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले ।
विश्राम लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुः ॥

अत्र गाहन्तां महिषा निपानसलिलमित्यादिप्रसिद्धार्थपदोपादानात् प्रसादः ॥

यन्मृदुमस्फुटोन्मिश्रवर्णबन्धविधिं प्रति ।
अवैषम्येण भणनं समता साभिधीयते ॥ ६७ ॥

यथा, यश्चन्द्रकोटिकरकोरकभारभाजि बभ्राम बभ्रुणि जटापटले हरस्य ।
तद्वः पुनातु हिमशैलशिलानिकुञ्जझात्कारडम्बरविरावि सुरापगाम्भः ॥

अत्रोपक्रमादासमाप्तिस्फुटबन्धसत्त्वनिर्वाहात् समत्वं ।

या पृथक्पदता वाक्ये तन्माधुर्यमिति स्मृतं ।

यथा, स्थिताः क्षणं पक्ष्मसु ताड़िताधराः पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥

अत्र पदेषु संहिताभावात् पृथक्पदत्वे माधुर्यं ।

अनिष्ठुराक्षरप्रायं सुकुमारमिति स्मृतं ॥ ६८ ॥

यथा,—मण्डलीकृत्य बर्हाणि कण्ठैर्मधुरगीतिभिः ।
कलापिनः प्रनृत्यन्ति काले जीमूतमालिनि ॥

अत्र सर्व्वकोमलत्वे सति श्रुतिविपर्ययदोषशैथिल्याभावाद् बाहुल्येन वर्णानामनैष्ठुर्य्यात् सौकुमार्यं ।

यत्र संपूर्णवाक्यत्वमर्थव्यक्तिं वदन्ति तां ।

यथा,—वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ॥
जगतः पितरौ वन्दे पार्व्वतीपरमेश्वरौ।

अत्र वाक्यपरिपूर्णतयार्थसमर्थकत्वादर्थव्यक्तिः ।

यदुज्ज्वलत्वं बन्धस्य काव्ये सा कान्तिरुच्यते ॥ ६९ ॥

यथा,—निरानन्दः कौन्दे मधुनि विधुरो बालबकुले
न साले सालम्बो लवमपि लवङ्गे न रमते ।
प्रियङ्गौ नासङ्गं रचयति न चूते विचरति

स्मरलक्ष्मीलीलाकमलमधुपानं मधुकरः॥

अत्र बन्धस्य छायावत्त्वेन औज्ज्वल्यं तदेव च कान्तिरुच्यते॥

विकटाचरबन्धत्वमार्यैरौदार्यमुच्यते।

यथा,—आरोहत्यवनीरुहः प्रविशति श्वभ्रं नगैः स्पर्द्धते
खं व्यालेढि विचेष्टते चितितले कुञ्जोदरे लीयते।
अन्तर्भ्राम्यति कोटरस्य विरसत्यालम्बते वीरुधः
किं तद्यन्न करोति मारुतवशं यातः कृशानुर्वने॥

अत्र विकटाचरबन्धत्वेन नृत्यद्भिरिव पदैर्येयाकरचना सा उदारता।

श्लाघ्यैर्विशेषणैर्योगो यस्तु सा सत्रादुदात्तता॥ ७०॥

यथा,—श्रुत्वायं सहसागतं निजपुरात् त्रासेन निर्गच्छतां
शत्रूणामवरोधने जलवमस्यन्दतिस्यत्पुटाः।
शुभ्रे सद्मनि मल्लविन्ध्यपवने वाप्यां नवाम्भोरुहि
क्रीड़ाद्रौ च सखाहले विवलितग्रीवैर्विमुक्ता दृशः॥

अत्र शुभ्रे मल्लविनि नवाम्भोरुहि इत्यादिश्लाघ्यविशेषणोपादाना-दुदात्तता।

ओजः समासभूयस्त्वं

यथा,जयतिभुजगरज्जुग्रन्थिनिष्पीड़ितेन्दुस्त्रवदमृतनिषिक्तप्रेतभावैःकपालैः।
विरचितनुतिवन्धो मूर्ध्नि सद्यः पुरारेः परिणतवङ्कल्पवृक्षाणां वृक्षघोषः॥

अत्र भुजगरज्जुग्रन्थीत्यादिना समासभूयस्त्वादोजः॥

और्जित्यं गाढबन्धता।

यथा,—अस्मिन्नीपदलितवितस्तोकविच्छिन्नभुग्नः
किञ्चिन्नीलोपचितवितः पुञ्जितश्चोच्छ्रितश्च।
धूमोत्पीड़स्तरुणमहिषस्कन्धनीलो दवाग्नेः
स्वैरं सर्पन् सृजति गगने गत्वरानभ्रभङ्गान्॥

यथा,—केचिद्वस्तुनि नो वाचि केचिद्वाचि न वस्तुनि।
वाचि वस्तुनि चाप्यन्ये नान्ये वाचि न वस्तुनि ॥
अत्रार्थस्य पदानां च तुलाविधृतवत्तुल्यत्वेन संमितत्वं ॥

भावतो वाक्यवृत्तिर्या भाविकं तदुदाहृतं ।

यथा,—
एह्येहि वत्स रघुनन्दन पूर्णचन्द्र चुम्बामि मूर्द्धनि चिरस्य परिष्वजे त्वां।
आरोप्य वा हृदि दिवानिशमुद्वहामि वन्देऽथवा चरणपुष्करकद्वयं ते ॥
अत्र हर्षवशादनौचित्येनापि वन्देऽथवा चरणपुष्करकद्वयमित्यादीना-मुक्तत्वाद् भाविकत्वं ॥

गतिर्नाम क्रमो यः स्याद्विहारोहावरोहयोः ॥ ७५ ॥

यथा,—वराहः कल्याणं वितरतु स वो यस्य शशभृत्
कलाकोटीकान्तं क्रमविगलदभ्युद्गतिभिया।
मिथः संमूर्च्छद्भिश्चतुरुदधिकल्लोलपटलै-
रनामृष्टं दंष्ट्राशिखरमधिशेते वसुमती ॥
अत्र पूर्वार्द्धे स्वरस्यारोहादुत्तरार्द्धे चावरोहाद् गतिः।

उपक्रमस्य निर्व्वाहो रीतिरित्यभिधीयते।

यथा,—ग्राव्णा नासि गिरेः हृता, न, पयसा नाक्तासि, न, म्लापिता
न श्वासैः फणिनोऽसि, न, त्वदनुगा नायासिता क्वापि, न।
स्वं येश्म मतिगच्छतोरिति मुहुः श्रीशार्ङ्गिणोः स्मेरयोर्
सा भग्नोत्तरमुग्धमर्मभिरुभयोरत्यायता पातु वः ॥
अत्र प्रतेरकपदानन्तरं नञो विनिवेशात् क्रमभेदो रीतिः ॥

विशिष्टा भणितिर्या स्यादुक्तिं तां कवयो विदुः ॥ ७६ ॥

यथा,—कुशलं तस्याः, जीवति, कुशलं पृच्छामि, जीवतीत्युक्तं।
पुनरपि तदेव कथयसि, मृतां नु कथयामि या श्वसिति ॥

अत्र कुशलं तस्या इति पृष्टे कुशलमकुशलञ्चेति व्यक्तव्ये योऽयं जीवतीत्याद्युक्तिभङ्ग्या जीवितमात्रप्रतिपादनप्रकारः स कावेत्र शब्दगुणे पूक्तिसंज्ञां लभते ॥

उक्तेः प्रौढः परीपाकः प्रोच्यते प्रौढिसंज्ञया

यथा,—अभ्युद्धृता वसुमती दलितं रिपूरः
क्षिप्तक्रमं कवलिता बलिराजलक्ष्मीः ।
अत्रैकजन्मनि कृतं यदनेन यूना
जन्मत्रये तदकरोत् पुरुषः पुराणः ॥

अत्र प्रकृतिस्थकोमलकठोरेभ्यो नागरोपनागरग्राम्येभ्यो वा पदेभ्योऽभ्युद्धृतादीनां ग्राम्यादीनामुभयेषां वा पदानामावापोद्वापाभ्यां सन्निवेशचारुत्वेन योऽयमाभ्यासिको नालिकेरीपाको मृद्वीकापाक इत्यादिर्वाक्यपरिपाकः सा प्रौढिरित्युच्यते। तथा चैतद्वाक्यं नालिकेरीपाक इत्युच्यते । एवं सहकारपाकमृद्वीकापाके अप्युदाहरणीये इति ॥

उक्ताः शब्दगुणा वाक्ये चतुर्विंशतिरित्यमी ॥ ७७ ॥
अथैतानेव वाक्यार्थगुणत्वेन प्रचक्ष्महे ।
तेषां श्लेष इति प्रोक्तः संविधाने सुसूत्रता ॥ ७८ ॥

यथा,—दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादराद्
एकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्त्तोऽपरां चुम्बति ॥

अत्रैकासनसंस्थितयोः प्रियतमयोर्विलासिना त्वेका नयनमीलनकेलिकर्मणा वञ्चिता, अन्या तु वदनचुम्बनेन रञ्जितेति। सेयं संविधाने सुसूत्रता श्लेषो नाम वाक्यार्थगुणः ॥

यत्तु प्राकट्यमर्थस्य प्रसादः सोऽभिधीयते ॥

यथा,—अयमुदयति मुद्राभञ्जनः पद्मिनीना-
मुदयगिरिवनालीबालमन्दारपुष्पं।
विरहविधुरकोकद्वन्द्वबन्धु र्विभिन्दन्
कुपितकपिकपोलक्रोड़ताम्रस्तमांसि॥

अत्र पद्मिनीविकाशकरणे उदयशैलावसरणे कोकशोकहरणे तमोविदारणे चानुक्तोऽपि सूर्य्यलक्षणोऽर्थः प्रकटमुपलभ्यते॥

अवैषम्यं क्रमवतां समत्वमिति कीर्त्तितं॥ ७९॥

यथा,—अग्रे स्त्रीनखपाटलं कुरवकं श्यामं द्वयोर्भागयो-
र्बालाशोकमुपोढरागसुभगं भेदोन्मुखं तिष्ठति।
ईषद्बद्धरजःकणाग्रकपिशा चूते नवा मञ्जरी
मुग्धत्वस्य च यौवनस्य च सखे मध्ये मधुश्रीः स्थिता॥

अत्र मधुश्रियो मौग्ध्यत्यागयौवनारम्भकृतानां विशेषणानामवैषम्यात् समता॥

माधुर्य्यमुक्तमाचार्य्यैः क्रोधाद्यावप्यतीव्रता॥

यथा,—भ्रूभेदे सहसोद्गतेऽपि वदनं नीतं परां नम्रता-
मीषन्मां प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरं।
अन्तर्वाष्पजड़ीकृतं प्रभुतया चक्षुर्न विस्फारितं
कोपश्च प्रकटीकृतो दयितया मुक्तश्च नो प्रश्रयः॥

अत्र वासवदत्तालक्षणस्यार्थस्य कोपेऽपि योऽयं विनयालम्बनेन कोपचिह्ननिह्नवस्तन्माधुर्य्यं॥

अनिष्ठुरत्वं यत् प्राज्ञः सौकुमार्य्यं तदुच्यते॥ ८०॥

यथा,—सद्यः पुरीपरिसरेऽपि शिरीषमृद्वी
सीता जवात्त्रिचतुराणि पदानि गत्वा।
गन्तव्यमस्ति कियदित्यसकृद्ब्रुवाणा

रामाश्रुणः कृतवती प्रथमावतारं ॥

अत्र सीतायाः पुरोपरिसरेऽपि कियदस्ति गन्तव्यमिति वचनं शृण्वतो रामस्य शिरोधमृदुतदङ्गावलोकनेनाश्रुणोऽवतारः सौकुमार्यप्रसाद ॥

अर्थव्यक्तिः स्वरूपस्य साक्षात् कथनमुच्यते ।

यथा,—पृष्ठेषु शंखशकलच्छविषु च्छदानां
रेखाभिरङ्कितमलक्तकलोहिताभिः ।
गोरोचनाहरितवभ्रु बहिःपलाश-
मामोदते कुमुदमम्भसि पल्वलस्य ।

अत्र कुमुदस्वरूपस्य साक्षादिव प्रतीयमानत्वेन यत् स्पष्टरूपाभिधानमसावर्थव्यक्तिः ॥

कान्तिर्दीप्तिरसत्वं स्यात्

यथा,—मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति ।
अन्यापि किं न सखि भाजनमीदृशीनां
वैरी न चेद् भवति वेपथुरन्तरायः ॥

अत्र नायिकायाः सपत्नीसामीप्यानुबन्धेन प्रतिपादितस्य प्रियतमानुरागलक्षणस्य शृङ्गारस्य दीप्तिरसत्वं कान्तिः ॥

भूत्युत्कर्ष उदारता ॥ ८१ ॥

यथा,—प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया ।
ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसन्निधौ संयमो
यद्वाञ्छन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥

अत्र मारीचाश्रमस्य सत्कल्पवृक्षादिपदैर्वैभवोत्कर्षस्य प्रतिपादनमुदारता ॥

आश्रयस्य च उत्कर्षस्तदुदात्तत्व मीयते ॥

यथा,—पात्रे पुरोपर्ज्जिनि विश्वनाथे घोदीयसि क्ष्मावलये च देये ।
क्रीडास्मितं तस्य तदा तदासीच्चमत्कृतो येन स एव देवः ॥

अत्र सकलक्ष्मावलयप्रदानेऽपि जातव्रीडतया बलेराश्रयोत्कर्षप्रतिपादनादुदात्तत्वं ॥

ओजः स्वाध्यवसायस्य विषयोऽर्थेषु यो भवेत् ॥ ८२ ॥

यथा,—तान्येव यदि भूतानि ता एव यदि प्रकृतयः ।
ततः परशुरामस्य न प्रतीमः पराभवं ॥

परशुरामो विजयत एव इत्यस्मिन्नर्थे स्वाध्यवसायप्रतिपादनमोजः ।

रूढाहङ्कारमौर्जित्यम्

यथा,—उमा वधूर्भवान् दाता याचितार इमे वयं ।
वरः शम्भुरलं ह्येष तत्कुलोद्भूतये विधिः ॥

अत्र इमे वयमित्यात्मानिनवतचर्यादिसमुत्थमौढाहङ्कारप्रतिपादनादौर्जित्यं ॥

प्रेयस्त्वर्थेष्वभीष्टता ।

यथा,—रसवदमृतं कः सन्देहो मधून्यपि नान्यथा
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलं ।
सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो
वदतु यदिहान्यत् स्वादु स्यात् प्रियादशनच्छदात् ॥

अत्रामृतप्रभृतिभ्यः प्रियादशनच्छदस्याभीष्टताप्रतिपादनं प्रेयः ।

अदारुणार्थवर्णत्वाो दारुणेषु सुशब्दता ॥ ८३ ॥

यथा,—देवव्रते वाञ्छति दीर्घनिद्रां द्रोणे च कर्णे च यशोऽवशेषे ।
लक्ष्मीसहायस्य तवाद्य यतस्व वात्सल्यवान् द्रौणिरयं सहायः ॥९

अत्र मुमूर्षामरणादीनां दारुणार्थानां दीर्घनिद्रां वाञ्छति यशोऽवशेष इत्यादिभिः सुशब्दैः पर्यायेण भणनं सुशब्दता। सा च मुख्यार्थव्यतिक्रमस्त्र वाक्यार्थत्वान्न शब्दगुणः॥

व्याजावलम्बनं यत्तु स समाधिरिति स्मृतः।

यथा,—
दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे तन्वी स्थिता कतिचिदेव पदानि गत्वा।
आसीद्विवृत्तवदना च विमोचयन्ती शाखासु वल्कलमसक्तमपि द्रुमाणां॥
अत्र गमने सति प्रियजनावलोकनाभिलाषिण्याः शकुन्तलाया दर्भाङ्कुरचरणक्षतिवल्कलव्यासङ्गादिव्याजावलम्बनं समाधिः॥

सौक्ष्म्यमित्युच्यते तत्तु यत् सूक्ष्मार्थाभिदर्शनं॥ ८४॥

यथा,—अन्योन्यसम्वलितमांसलदन्तकान्ति
सोल्लासमाविरलसं वलिताङ्गतारं।
लीलागृहे प्रतिकलं किलकिञ्चितेषु
व्यावर्त्तमानविनयं मिथुनं चकास्ति॥
अत्रान्योन्यसंवलितमांसलदन्तकान्तीत्यादिवाक्ये दम्पत्योरनुरागलक्षणस्य सूक्ष्मार्थस्य दर्शनात् सौक्ष्म्यं॥

शास्त्रार्थसव्यपेक्षत्वं गाम्भीर्यमभिधीयते।

यथा, मैत्र्यादिचित्तपरिकर्मविदो विधाय
क्लेशप्रहाणमिह लब्धसवीजयोगाः।
ख्यातिञ्च सत्वपुरुषान्यतयाधिगम्य
वाञ्छन्ति तामपि समाधिभृतो निरोद्धुं।
अत्र मैत्र्यादिपदानां शास्त्रार्थसव्यपेक्षत्वाद् गाम्भीर्यं॥

विसरोऽर्थविकाशः स्यात्

यथा,—संग्रामाङ्गनमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद् यत् समासादितं ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्त्तिरनघा कीर्त्त्या च सर्व्वं जगत् ॥

अत्र विपक्षवधात् सर्व्वाभिव्यापिनी कीर्त्तिरर्ज्जितेतेयतावतोऽर्थस्य बहुधा विकाशितत्वाद्विस्तरः ।

संक्षेपस्तस्य संहृतिः ॥ ८५ ॥

यथा,—श्रूयतां धर्म्मसर्व्वस्वं श्रुत्वा चैवावधार्य्यतां ।
आत्मनः प्रतिकूलानि न परेषां समाचरेत् ॥

अत्र शास्त्रे विस्तरप्रतिपादितस्य धर्म्मस्य श्लोकार्द्धेनोक्तत्वादयमर्थसङ्कोचः संक्षेपः ।

शब्दार्थौ यत्र तुल्यौ स्तः सम्मितत्वं तदुच्यते ।

यथा,—इन्दुर्मूर्द्ध्नि शिवस्य शैलदुहितुर्वक्रो नखाङ्कः स्तने
देयाद्वोऽभ्युदयं द्वयं तदुपमामालम्ब्यमानं मिथः ।
संवादः प्रणयेन यस्य दलता कायैकतायां तयो-
रूढ्हारविचिन्तितेन च हृदि ध्यातः स्वरूपेण च ॥

अत्र प्रणयलक्षणस्यार्थस्य तुल्यत्वेन यथावद्विभज्य विनिवेशनं संमितत्वं ।

साभिप्रायोक्तिविन्यासो भाविकत्वं निगद्यते ॥ ८६ ॥

यथा,—दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद् गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति ।
एकाकिन्यपि यामि तद्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः ॥

अत्र तमालमालावलयितसरित्तीरकृतसङ्केतायाः कुलटायाः स्तनौ भाविनां परपुरुषनखक्षतानां नलग्रन्थ्यालेखव्याजगोपनेन साभिप्रायभणनं

भाविकं॥

गतिः सा यत्रादवगमो योऽर्थादर्थान्तरस्य तु।

यथा,—शुभे कोऽयं वृद्धो गृहपरिवृढः, किं तव पिता,
न, मे भर्त्ता रात्रौ व्यपगतदृगन्धश्च वधिरः।
ऊ ऊं ऊं श्रान्तोऽहं श्रिश्रयिषुरिहैवापवरके
क्व यामिन्यां यासि स्वपिहि ननु निर्दंशमशके॥

अत्र प्रश्नादर्थमवगम्य उत्तरार्थान्तरावगमो गतिः॥

रीतिः सा यत्त्विहार्थानामुत्पत्त्यादिक्रियाक्रमः॥ ८७॥

यथा,—प्रथममरुणच्छायस्तावत्ततः कनकप्रभ-
स्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः।
प्रभवति पुनर्ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः॥

अत्रोदयादारभ्य चन्द्रस्योत्पत्त्यादिक्रियाक्रमो रीतिः।

उक्तिर्नाम यदि स्यार्थो भङ्ग्या भव्योऽभिधीयते।

यथा,—त्वमेवं सौन्दर्य्या स च रुचिरतायाः परिचितः
कलानां सीमानं परमिह युवामेव भजथः।
अपि द्वन्द्वं दिष्ट्या तदिति सुभगे संवदति वा-
मतः शेषं चेत् स्याज्जितमिह तदानीं गुणितया॥

अत्राभीष्टस्य नायकनायिकासङ्गमस्य भङ्ग्या भणनमुक्तिः।

विवक्षितार्थनिर्वाहः काव्ये प्रौढिरिति स्मृता॥ ८८॥

यथा,—त्वद्वक्त्रेन्दुविलोकनाकुलधिया धात्रा त्वदीयां श्रियं
निःक्षिप्य प्रतिराजकेषु विदुषां लक्ष्म्या त्वमापूरितः।
तेनैते नियतं दरिद्रति गृहेष्वेषामियं दृश्यते

नैमामाद्रियसे त्वमिच्छसि नु तां त्वामेव सा धावति ॥
अत्र त्वद्दर्शनविलोकनाकुलेन धात्रा त्वदीया लक्ष्मीः शत्रुषु निःक्षिप्ता विदुषां च लक्ष्मीस्त्वय्यारोपिता । अतस्त्वं विपक्षलक्ष्मीमाद्रियसे सा च त्वामनु धावति । या च विदुषां लक्ष्मीस्तया त्वमापूरितत्वेन ते दरिद्राः अत एव त्वमेनां नाद्रियसे इयञ्च विद्वद्गेहेष्वेव दृश्यते इत्यं तावत् प्रभूतसन्दर्भसन्दर्भानेकवाक्येन प्रतिपादितत्वात् विवक्षितार्थं निर्वहणं प्रौढिः

पदाद्याश्रितदोषाणां ये चानुकरणादिषु ।
गुणत्वापत्तये नित्यं ते ऽत्र दोषगुणाः स्मृताः ॥ ८९ ॥
त्रिविधा अपि ते भूयश्चतुर्विंशतिधा बुधैः ।
प्रोक्ता यथा गुणत्वं न प्रविभज्य तथोच्यते ॥ ९० ॥
या म्लिष्टम्लेच्छितादीनां पददोषेष्वसाधुता ।
निरूपितानुकरणे गुणत्वं सा प्रपद्यते ॥ ९१ ॥

यथा,—उन्नमय्य सकचग्रहमास्यं चुम्बति प्रियतमे हठवृत्त्या ।
हुं हु मुञ्च मम मेति च मन्दजल्पितं जयति मानवतीनां ॥
अत्र हुं हु मम मेत्यसाधोरपि म्लिष्टम्लेच्छितयोरनुकरणत्वाद् गुणत्वं ।

गुणत्वमप्रयुक्तस्य तथानुकरणे भवेत् ॥

यथा,—दिवं पतकायिणो यान्ति येऽचीकमतभाषिणः ।
पतकायिणोऽपि नो यान्ति ये वचन्ति प्रयुञ्जते ॥
अत्राचीकमत वचन्तीत्यादिपदानां कविभिरप्रयुक्तानामप्यनुकरणत्वाद्गुणत्वं

यच्छ्रुतेर्विरसं कष्टं तस्य दुर्वचकादिषु ।
गुणत्वमनुमन्यन्ते सानुप्रासरताः सूरयः ॥ ९२ ॥

यथा,—नाष्ट्राष्ट्राष्ट्रारिराष्ट्रे न भ्राष्ट्रे नार्दंष्ट्रिनो जनाः ।
धार्तराष्ट्राः सुराष्ट्रे न महाराष्ट्रे च भोष्ट्रिणः ॥
अत्र श्रुतिविरसत्वात् कष्टत्वेऽपि दुर्वचकत्वाद्गुणत्वं ।

यत्पादपूरणाद्यर्थमनर्थकमुदाहृतम् ।
गुणत्वमनुमन्यन्ते तस्यापि यमकादिषु ॥ ९३ ॥

यथा,—योषितामतितरां नखलूनं गात्रमुज्ज्वलतया न खलूनम्॥
बभौ मुखेनाप्रतिमेन काचन श्रियाधिकानां प्रति मेनका च न ॥
अत्र खलुशब्दस्य चशब्दस्य च पादपूरणमात्रेऽपि प्रयोजने यमकत्वाद् गुणत्वम् ॥

यत्तु रूढिच्युतत्वेन प्रोक्तमन्यार्थसंश्रितम् ।
प्रहेलिकादिषु प्रायो गुणत्वं तस्य युज्यते ॥ ९४ ॥

यथा,—खादयः कनि काले ते स्फातयः स्फाईवल्गवः ।
चन्द्रे साचाद् भवन्त्यत्र वायवो मम धारिणः ॥
अत्र खादय इत्यादीनां घर्घरिकादौ धृक्ष्यानवस्थाने न रूढिः, गूढार्थे तु प्रहेलिकादौ तन्न दुष्यतीति तेषां दोषगुणत्वम् ॥

तुच्छवाच्यमपुष्टार्थमिति यत् प्राक् प्रकाशितम् ।
तस्य च्छन्दोऽनुरोधादौ गुणत्वमवधार्यते ॥ ९५ ॥

यथा,—हिरण्यवर्णाकृति मेनमर्थिनामुशन्ति कल्पोपपदं महीरुहम्॥
यमिन्द्रशब्दार्थनिषूदनं हरेर्हिरण्यपूर्वं कशिपुं प्रचक्षते ॥
अत्र हिरण्यवर्णाकृतिमिति कल्पोपपदं महीरुहमिति हिरण्यपूर्वं कशिपुमित्यस्य तुच्छार्थत्वेऽपि छन्दोऽनुरोधाद्गुणत्वम् ॥

प्रतिपादितमादौ यदसमर्थमवाचकम् ।
तस्यापि खलु मन्यन्ते गुणत्वं सीत्कृतादिषु ॥ ९६ ॥

यथा,—आशु लङ्घितवतीष्टकराग्रे नीविमर्द्धमुकुलीकृतदृष्ट्या ।
रक्तवैणिककराहततन्त्रीमण्डलक्वणितचारु चुकूजे ॥
अत्र कूजितस्य पक्षिणो ऽन्यत्रावाचकत्वेऽपि कामशास्त्रेऽनुमतत्वाद् गुणत्वम् ॥

शास्त्रमात्रप्रतीतत्वादप्रतीतं तदुच्यते ।
गुणत्वं तस्य तद्विदसम्भाषादौ विदु र्बुधाः ॥ ९७ ॥

यथा,—सर्वकार्यशरीरेषु मुक्ताङ्गस्कन्धपञ्चकम् ।
सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम् ॥

अत्राङ्गस्कन्धपञ्चकमित्यस्य शास्त्रमात्रप्रसिद्धस्यापि तद्विदसम्भाषायां गुणत्वम् ॥

अर्थप्रतीतिकृद्दूरे क्लिष्टं नाम तदुच्यते ।
झटित्यर्थप्रतीतौ तद् गुणत्वमनुगच्छति ॥ ९८ ॥

यथा,—अथात्मनः शब्दगुणं गुणज्ञः पदं विमानेन विगाहमानः ॥
पितुः पदं मध्यमसुत्पतन्ती ॥ काञ्चीगुणस्थानमनिन्दितायाः ॥

अत्रात्मनः पदं शब्दगुणमिति पितुः पदं मध्यममिति चाकाशविषयां काञ्चीगुणस्थानमिति नितम्बविषयामिति प्रसिद्धे झटित्येव प्रतीतिं करोतीति क्लिष्टस्यास्य गुणत्वम् ॥

अप्रसिद्धार्थसम्बन्धं यद् गूढार्थमिति स्मृतम् ।
तद्व्याख्यानादिषु प्रायो गुणत्वेन तदिष्यते ॥ ९९ ॥

यथा,—अम्हारिसावि कइणो हरिअंदहालपमुहाविं ।
मण्डुक्कमक्कडावि हवन्ति हरिसप्पसिंहावि ॥

अत्र मण्डूकमर्कटसर्पसिंहेष्वप्रसिद्धप्रयोगत्वाद्गूढस्यापि हरिशब्दस्य स्वयं व्याख्यातत्वाद् गुणत्वम् ॥

नेयार्थं यत् स्वसङ्केतक्लृप्तवाच्यं तदीरितम् ।
प्रहेलिकादिषु प्राज्ञैस्तद् गुणत्वेन गण्यते ॥ १०० ॥

यथा,—मोह कलावे जं वढइ तह धागढ दरिसणाउ ।
पक्षीसा पाश्रंसिगउण्ण णु पाविहिं जाणु णाउ ॥

अत्र मयूरबर्हचन्द्रकसंकेतेन कल्पितस्य चन्द्रनाम्नो नेयार्थत्वेऽपि प्रहेलिः

कात्वाद् गुणत्वम् ।

यदनिश्चयकृत् प्रोक्तं सन्दिग्धं तद् गुणीभवेत् ।
भवेद्विशेषावगमो यदि प्रकरणादिभिः ॥ १०१ ॥

यथा,—मद्दौख्यतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ॥
स शाङ्गचक्रासिगदाजपाणि र्मेघच्छविः पातु जगन्ति शौरिः ॥

अत्र तस्मिन्नपत्ये इत्यनिश्चतस्त्राप्यपत्यविशेषस्त्र सन्दिग्धत्वेऽपि गौर्यत्रामिति प्रकरणेन गम्यते ॥ मेघच्छविरित्यत्र च नवश्यामादिपदानुपादानेऽपि शौरिसम्बन्धन्नान्नवमेघच्छवि र्मेघश्यामच्छविरिति वा विशेषो निश्चीयते इति तत्रापि गुणत्वम् ॥

यत्तद्विरुद्धमित्युक्तं विपरीतप्रकल्पनम् ।
तथाभूताभिधानेन गुणत्वं प्रतिपद्यते ॥ १०२ ॥

यथा,—अभिधाय तदा तदप्रियं शिशुपालोऽनुशयं परं गतः ।
भवतोऽभिमनाः समीहते सरुषः कर्त्तुमुपेत्य माननाम् ॥

अत्र विपरीतार्थकल्पनं विरुद्धत्वेऽपि सन्धत्रर्थविग्रहार्थयोः स्फुटभिन्नार्थत्वेनाभिधानाद् गुणत्वम् ॥

अप्रयोजकमित्युक्तमविशेषविधायकम् ।
स्वरूपमात्रे व्यक्तव्ये तत्रापि गुणतेष्यते ॥ १०३ ॥

यथा,—तेऽप्याकाशमसिश्यामसुत्पुत्य परमर्षयः ॥
साग्रं वर्षसहस्रं स तपस्तेपे महामनाः ॥

अत्रासिश्याममित्याकाशं प्रति साग्रमित्यनेन वर्षसहस्रं प्रति विशेषानभिधानेऽपि दूरोत्पतनचिरतरतपश्चरणयोरुपयोगविवक्षायां गुणत्वम् ॥

यद्वत्रत्पत्तिमद्दे श्यमिति पूर्वं निरूपितम् ।
महाकविनिबद्धं सत्तदप्यत्र गुणीभवेत् ॥ १०४ ॥

यथा, पाण्डेपूद्दण्डपिण्डीतगरतरलनाः माषिरे येन वेला-

मालम्बप्रोत्तालतम्रस्फुटितपुटकिनीबन्धवो गन्धवाहाः ॥
पातालप्रतिमल्लगल्लविवरप्रक्षिप्तसप्तार्णवम् ॥
किरन्तः कावेरीलहलहरीशीकरकणान् ॥

अत्र तल्लगल्लहलहलहरीप्रभृतीनामव्युत्पत्तिमत्त्वेन देश्यत्वेऽपि महाकविभिरङ्गीकृतत्वाद् गुणत्वम् ॥

ग्राम्यं घृणावदश्लीलामङ्गलार्थं यदीरितम् ।
तत् संवीतेषु गुप्तेषु लक्षितेषु न दुष्यति ॥ १०५ ॥

तत्र संवीतं यथा,

तस्मै हिमाद्रेः प्रयतां तनूजां यतात्मने योजयितुं यतस्व ।
योषित्सु तद्वीर्यनिषेकभूमिः सैव क्षमेत्यात्मभुवोपदिष्टम् ॥

अत्र तद्वीर्यनिषेकभूमिरित्यश्लीलस्यापि संवीतत्वाद् गुणत्वम् ।

यदाह,—संवीतस्य हि लोकेषु न दोषानुषणं घसं ।
शिवलिङ्गस्य संस्थाने कस्यासभ्यत्ववासना ॥

गुप्तं यथा, सुदुःसहजा यद्यपि जन्मभूमिः ॥ गजैरसंबाधमयांबभूवे ॥
स तेऽनुनेयः सुभगोऽभिमानी ॥ भगिन्ययं नः प्रथमाभिसन्धिः ॥

अत्र जन्मभूमिसंबाधसुभगभगिनीशब्दानामश्लीलार्थान्तरेऽपि० प्रथमार्थप्रभावभावनागुप्तत्वाद् गुणत्वम् ।

यदाह,—वस्तुमाहात्म्यगुप्तस्य पदार्थस्य विभावनात् ।
भगिनीभगवत्यादि नासभ्यत्वेन भाष्यते ॥

लक्षितं यथा,—ब्रह्माण्डकारणं योऽप्सु निदधे बीजमात्मनः ।
उपस्थानं करोमेष्य तस्मै प्रेमाद्विधायिने ॥

अत्र ब्रह्माण्डोपस्थानशब्दयोरसभ्यस्मृतिहेतुत्वेऽपि अन्यत्र लक्षितत्वाद् गुणत्वम् ॥ एवममङ्गलादीनामपि गुणत्वम् ॥

यथा,—भद्रे मारि प्रसन्नं वद सदसि, मुदा नृत्य कृत्ये मुहूर्तं,
मृत्यो रत्नैश्चतुष्कं विरचय, रचयारात्रिकं कालरात्रि ।

चामुण्डे मुण्डमालामुपनय, विनयस्वायतां भैरवीयम्,
एवं देवे भवानीं वदति परिजनव्याहृतिस्त्रायतां वः॥

अत्र मारीत्यादीनामपि पदानां समस्तमङ्गलायतनस्य भगवतो विश्वेश्वरस्य सम्बन्धेनोक्तत्वाद् गुणत्वम्॥

यथा वा, सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः।
निपतन्ति धार्त्तराष्ट्राः कालवशान्मेदिनीपृष्ठे॥

अत्र धार्त्तराष्ट्राः कालवशान् मेदिनीपृष्ठे निपतन्तीत्यस्यामङ्गलार्थान्तरत्वेऽपि हंसानहं धार्त्तराष्ट्रानिति व्यपदिशामि इति वक्ष्यमाणवाक्यगुप्तत्वाद् गुणत्वम्॥ यथा च,—

कोऽभिप्रेतः सुसंस्थानस्तस्या इति न निश्चयः।
आशापिशाचिकैषा तु कुमारी मां वरिष्यति॥

अत्राभिप्रेतसुसंस्थानाशापिशाचिकाकुमारीतिपदानमसस्मृतिहेतूनामपि लोकैरन्यत्र लक्षितत्वाद्गुणत्वं॥ एवं घृणावदर्थादीनामपि गुणत्वम्॥

तत्र घृणावतो यथा,

पद्मान्यर्कांशुनिष्ठ्यूताः पीत्वा पावकविप्रुषः।
भूयो वमन्तीव मुखैरुद्गीर्णारुणरेणुभिः॥

अत्र,—निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम्।
अतिसुन्दरमन्यत्तु ग्राम्यकक्षां विगाहते॥

घृणावदर्थान्तरस्य यथा,

कामिनीगण्डनिस्यन्दविन्दुरिन्दुर्मतो मम।
अन्यथा कथमेतस्य जगदुद्योतिनी द्युतिः॥

अत्र रागातिशयहेतुभूतयोः कामिनीकपोलचन्द्रमसोः स्वरूपभावनामात्रालम्बनार्थान्तरभावना गुप्तेति गण्डनिस्यन्दविन्दुरित्यस्य घृणावदर्थान्तरस्यापि न दोषः॥

घृणावत्स्मृतिहेतु यथा,

विधूयरसनावन्तः पलाशापाढधारिणः ।
ब्रह्मवर्चस्विनो यान्ति द्विजपोगण्डका इमे ॥

अत्र विधूयपलाशब्रह्मवर्चसपोगण्डशब्दानां घृणावत्त्वमृतिहेतुत्वेऽप्यत्र लक्षितत्वाददोषत्वम् ॥ एवमन्यत्र द्रष्टव्यं ।

अत्र च, किञ्चिदाश्रयसम्बन्धाद्धत्ते शोभामसाध्वपि ।
कान्ताविलोकने न्यस्तं मलीमसमिवाञ्जनं ॥ १०६ ॥

तद्, यथा, अन्त्रप्रोतबृहत्कपालनलककूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरं ।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्-
व्यालोलस्तनभारभैरववपु र्दर्पोद्धतं धावति ॥

अत्राश्रयस्य बीभत्सरसोचितत्वाददोषः ।

सन्निवेशवशात् किञ्चिद्विरूपमपि शोभते ।
नीलं पलाशमाबद्धमन्तराले स्रजामिव ॥ १०७ ॥

तद्, यथा, अन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-
व्यक्तोत्तंसभृतः पिनह्य सहसा हृत्पुण्डरीकस्रजः ।
एताः शोणितपङ्ककुङ्कुमजुषः संभूय कान्तैः पिब-
न्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥

अत्र शृङ्गारिणो हि जगदपि शृङ्गारमयं पश्यन्तीति बीभत्सरसेऽपि माधुर्येणान्त्रादिपदानामन्तरालेषु निवेशितानां मङ्गलप्रतिसरादिपदानामदोषः ।

अश्लीलादेरमी भेदा भिद्यन्ते यत्त्रिधा त्रिधा ।
भवन्ति नव तेनैते पूर्वोक्ता दश पञ्च च ॥ १०८ ॥
चतुर्विंशतिरित्येषा प्रोक्ता पदसमाश्रया ।
समासात् पूर्वनिर्दिष्टदोषाणां गुणकल्पने ॥ १०९ ॥

इत्येतत् पददोषाणामदोषत्वमुदीरितम्।
इदानीं वाक्यदोषाणां गुणत्वमभिधीयते ॥ ११० ॥
तत्र शब्दविहीनस्य विवक्षावशतः क्वचित्।
निसर्गसुन्दरत्वेन गुणत्वं परिकल्प्यते ॥ १११ ॥

यथा,—आक्षिपन्त्यरविन्दानि मुग्धे तव मुखच्छविम्।
कोशदण्डसमग्राणां किमेषां खलु दुष्करम्॥

अत्र न लोकाव्ययनिष्ठाखलर्थतृनामिति कर्तृकर्मणोः षष्ठीप्रतिषेधे किमेषां दुष्करमित्यपभाषणेऽपि सम्बन्धमात्रविवक्षातो गुणत्वं॥

यदाह,—इदं हि शास्त्रमाहात्म्यदर्शनालसचेतसां।
अपभाषणवद्भाति नच सौभाग्यमुज्झति ॥ ११२ ॥
यत्नः सम्बन्धनिर्ज्ञानहेतुः कोऽपि कृतो यदि।
क्रमलङ्घनमप्यङ्ग न दोषं सूरयो यथा। ११३ ॥

बन्धुत्यागस्तनुत्यागो देशत्याग इति त्रिषु।
आद्यन्तावायतक्लेशौ मध्यमः क्षणिकज्वरः॥

आद्यन्तौ मध्यम इति सम्बन्धनिर्ज्ञानहेतोर्विधानान्न शाब्दक्रमलङ्घनं दोषः। वस्तुत्र बन्धुत्यागदेशत्यागयोस्तनुत्यागात् गरीयस्त्वेनाभिमतत्वादित्यर्थक्रमलङ्घनस्यापि गुणत्वम्।

विरूपसन्धि यत्पूर्वं विसन्धि च निरूपितम्।
न च दुर्वचके प्रायः प्रगृह्यादौ च दुष्यति ॥ ११४ ॥

तत्र दुर्वचके विरूपसन्धिः॥ यथा,—
जयन्ति वर्पास्थिति भर्गदुर्गयोः सुदुर्वचा दुर्वचकप्रयुक्तयः।
अभेङ्गेङ्जे खमघोग्रभोग्रग्रग्घ्ङवह्वम्मृङ्मुखि सभ्रयगेषि नः॥

अत्रोत्तरार्द्धस्य विरूपसन्धित्वेऽपि दुर्वचकत्वेन कलाविद्भिराहृतत्वाद् गुणत्वं॥

यदाह: ॥

स्त्रीबालमूर्खाणां सुखसंस्कारसिद्धये ।
प्रहासाय च गोष्ठीषु वाचश्च दुर्वाचकादय: ॥

प्रगृह्यादौ विगतसन्धि यथा,—

कमले इव लोचने इमे अनुबध्नाति विलासपद्धति: ॥
स इतोऽह्नचहताहतप्रियो न वचस्तु न यजूंषि जल्पसे ॥

अत्र विसन्धे: प्रगृह्यादिहेतुकत्वाद् गुणत्वं ॥

यदाह,—न संहितां विवचामीत्यसन्धानं पदेषु यत् ।
तद्विसन्धीति निर्द्दिष्टं न प्रगृह्यादिहेतुकं ॥

अनुकम्पाद्यतिशयो यदि कश्चिद्विवच्यते ।
न दोष: पुनरुक्तेऽपि प्रत्युतेयमलंक्रिया ॥ ११५ ॥

यथा,—हन्यते सा वरारोहा स्मरेणाकाण्डवैरिणा ।
हन्यते चारुसर्वाङ्गी हन्यते मञ्जुभाषिणी ।

अत्र हन्यते हन्यत इति शब्दपुनरुक्तं चारुसर्वाङ्गी वरारोहेत्यर्थ-पुनरुक्तम् ॥ तदुभयं अनुकम्पातिशयविवचयामदोष इति गुणत्वम् ॥

पदानां व्युत्क्रमो यत्र क्रमेण व्युत्क्रमेण वा ।
तदव्याकीर्णं विदुस्तत्र न दोष: क्वापि तद् यथा ॥ ११६ ॥

जुगुप्सत स्मैनमदुष्टभावं मैवं भवानचतसाधुवृत्त: ।
इतीव वाचो निगृहीतकण्ठै: प्राणैरुदस्थन्त महर्षिसूनो: ॥

अत्र मास्म जुगुप्सतेति वक्तव्ये जुगुप्सत स्मैनमदुष्टभावं मैवमिति पद-व्यतिक्रमस्तत्र व्यस्तेयोक्तन्ति केचिदिति लुङ्लङो विशेषलक्षणत्वाद् गुणत्वम् ॥

पर्य्यायेण द्वयो यत्र वाक्यं प्रश्नोत्तरादिषु ।
संकीर्णं तत्र दोषाय वाक्यं वाक्यविदो विदु: ॥ ११७ ॥

यथा,—बाले नाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतं

खेदोऽस्मासु न मेऽपराध्यति भवान् सर्वेऽपराधा मयि।
तत् किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ॥

अत्र सङ्कीर्णत्वेऽपि वाकोवाक्यत्वान्न दोषः ॥

प्रकृतिस्थादिभेदेन ग्राम्यादिभिदयापि वा।
अपदं तस्य चानुज्ञा भाषाचित्ते विधीयते ॥ ११८ ॥

यथा,—छातो जो ज्जलदेउ नैव मदनः साक्षादयं भूतले
तत् किं दीसइ सम्भमाहतवपुः कामः किल श्रूयते।
एटूए किअलेउ भूतपतिना गौरीविवाहोत्सवे
एसे सच्चुजिवोसु हस्तकटकः किं दर्पणेनेक्ष्यते ॥

अत्र ग्राम्यः प्रटा नगरमागतः राजानं दृष्ट्वा ग्रामेयः प्रकृतिस्थैरेव वा पदैः प्राकृतेन पृच्छति। छातो जो ज्जलदेउ इति। नागरश्च तमनुजिघृक्षुरुपनागरैः कोमलैर्वा पदैः सवक्रोक्ति प्रत्याचष्टे, नैव मदनः साक्षादयं भूतले इति। अथ ग्राम्य आहितप्रतिभः पूर्वपदानुरोधादर्द्धप्राकृतेनैव ग्राम्योपनागरैः प्रकृतिस्थकोमलैर्वा पदैस्तमुपालभते। तत् किं दीसइ सम्भमाहतवपुः कामः किल श्रूयत इति। अथ नागरो ज्ञाततत्प्रावीण्यस्तत्पदानुरोधादेव अर्द्धप्राकृतेन ग्राम्योपनागरनागरैः प्रकृतिस्थकोमलकठोरैर्वा पदैः समाधत्ते। एटूए किअलेउ भूतपतिना गौरीविवाहोत्सवे इति ॥ अथ ग्राम्यः श्लोकसमाप्तेः पादस्य तदुत्तरस्य चानुरोधात् ग्राम्याणि प्रकृतिस्थानि वा त्रिचतुराणि पदानि प्राकृतेनोक्त्वा पादार्द्ध एव तिष्ठति। एसे सच्चुजिवोसु इति। अथ नागरो जितकाशी ग्राम्योपनागरनागरैः प्रकृतिस्थकोमलकठोरैर्वा पदैः श्लोकमुत्तरञ्च पूरयति, हस्तकटकः किं दर्पणेनेक्ष्यत इति। तत्र च प्राकृतानां सर्व्वेषामपि ग्राम्यत्वं। मदः संस्कृतपदेषु वपुरित्युपनागरं शेषाणि ग्राम्याणि, प्रतिवक्तुश्च हस्तविवाहगौरीपदानि ग्राम्याणि, भूत-

पतिनेति नागरं, शेषाण्युपनागराणि। तदिदमीदृशि मार्गे तथैवोपक्रमादेतन्न दुष्यति।

वाक्यान्तरसगर्भं यद्वाक्यं तद्वाक्यगर्भितम्।
रसान्तरतिरस्कारे तदिष्टं नेष्टमन्यथा ॥ ११९ ॥

यथा,— दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सा च वदन्त एव हि वयं रोमाञ्चिताः पश्यत।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत् कथाद्भुतमिदं यत्रैव चास्तं गतम् ॥

अत्र यथोक्ता मही साध्यते सिद्धा सा च विप्राय प्रतिपाद्यते इति वक्तवेत्र, येयं धीरोद्धतरसवशप्रवृत्तेन वदन्त एव हि वयं रोमाञ्चिताः पश्यत इति वाक्येन प्रस्तुतवाक्योक्तरसमात्रावेव विप्रायेत्यादिपदविच्छित्तिः सा रसान्तरतिरस्कृतिरित्युच्यते। तथा चेदं वाक्यान्तरसगर्भमपि वाक्यं न दोषाय भवति।

यद्भिन्नलिङ्गमित्युक्तं विभिन्नवचनं च यत्।
उपमादूषणं तत्र यत्रोद्वेगो न धीमताम् ॥ १२० ॥

यथा,—अन्यदा भूषणं पुंसः क्षमो लज्जेव योषितः।
पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥

अत्र पुंसो योषित इव क्षमो लज्जेव पराक्रमो वैयात्यमिवेति लिङ्गभेदः। परिभवे सुरतेष्विवेति तु लिङ्गभेदो वचनभेदश्च दृश्यते॥ स चैषामेव परस्परं उपमानोपमेयभावविवक्षायां पर्यायान्तराभावादन्यथा कर्तुं न शक्यत इति सहृदयहृदयानुद्वेजकत्वान्न दुष्यतीति दोषत्वापि गुणत्वम्। तदिदं द्वयोरप्येकमुदाहरणम्।

अथ भिन्नलिङ्गस्यैव यथा,—

यस्य त्रिवर्गशून्यानि दिनान्यायान्ति यान्ति च।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥

अत्र प्राग्वदेव पर्यायान्तारभावात् स लोहकारभक्त्र्येवेति लिङ्गभेदस्त्र न दोषः।

भिन्नवचनस्यैव यथा,—

प्राज्यप्रभावः प्रभवो धर्मस्यास्तरजस्तमाः।
मुक्तात्मानः शिवं नेमिरनेत्रऽपि ददतां जिनाः॥

अत्र नेमिरनेत्रऽपीति वचनभेददोषोऽपि ददतामिति क्रियापदादेर्वचनश्लेषमाहात्म्याद् गुणत्वम्॥ न चेदं वाच्यमत्र वादि र्न विद्यत इति नोपमात्वम्॥ इवस्याप्यपिना समुच्चयार्थेन तुल्यधर्माणां तु धर्मस्य प्रभव इत्यादिभिर्वचनश्लेषे विषयापहारात्॥ यथा, अग्रतो द्योतकलोप उपमायां। कोमलापाटलौ तन्वि पल्लवश्चाधरश्च ते। नन्वेषोऽपि श्लेषः कस्मान्न भवति उच्यते। यत्र द्वयोः सदृशयोरभिधानं स श्लेषः। यत्र सदृशात् सदृशप्रतिपत्तिस्तदुपमानं। यत्र द्वयोः सादृश्यमभिधीयते प्रतीयते वा सोपमेति प्रबन्धे नाग्रतो वक्ष्यामः। उपलक्षणञ्चैतत्। यदुपमायामेव लिङ्गवचनभेदो न दूषणमिति तस्य सर्वालङ्कारसाधारणत्वात् केवलं सादृश्यमलङ्कार इति दर्शने उपमायामुदाह्रियते॥

यत्रोपमानधर्माः स्युर्नोपमेयेन सम्मिताः।
तद्धीनोपममित्याहुस्तत्प्रसिद्धौ न दुष्यति॥ १२१॥

यथा,—स मारुताकम्पितपीतवासा बिभ्रत् सलीलं शशिभासमब्जम्।
यदुप्रवीरः प्रगृहीतशार्ङ्गः सेन्द्रायुधो मेघ इवावभासे॥

अत्र सेन्द्रायुध इति कार्म्मुकमात्रस्योपादानं वासःशङ्खयोस्त्वनुपादानात् न्यूनोपमत्वम्। तत्त्वन्त्वविदुषोरतिप्रसिद्धत्वाददोषत्वम्॥

यदाह,—सर्व्वं सर्व्वेण सारूप्यं नास्ति भावस्य कस्यचित्।
यथोपपत्तिकृतिभिरुपमानं प्रयुज्यते॥
अखण्डमण्डलः क्वेन्दुः क्व कान्ताननमुद्युतिः।

यत्किञ्चित्कान्तिसाम्यात्तु शशिनैवोपमीयते ॥

क्रमेणानेन कृतिभिरेष्टव्यमधिकोपमम् ।
विम्बं वस्तूपमेयाङ्गमनुमानात् प्रतीयते ॥ १२२ ।

यथा,—स पीतवासाः प्रगृहीतशार्ङ्गो मनोज्ञभीमं वपुराप कृष्णः ।
शतक्रदेन्द्रायुधवान्निशायां संसृज्यमानः शशिनेव मेघः ॥
अत्र शशिनो ग्रहणादधिकोपमत्वेऽपि उपमानत्वेनाविवक्षितत्वाद्गुणत्वम् । यदि वा उपमाने धर्मोद्घाटनानुमानाच्छङ्खचक्रगदाधरो विष्णुरिति प्रसिद्धेः शङ्खोऽनुमेयः ॥

यदा तीव्रप्रयत्नेन संयोगादेरगौरवं ।
न च्छन्दोभङ्ग इत्याहुस्तदा दोषाय सूरयः ॥ १२३ ॥

यथा,—जह ण्हाउं ओइण्णे अवभत्तमुह्लासिअं सुअह्लन्ताम् ।
तह अणाह्ना ओसि तुमं सच्छे गोलाणईह्लहे ॥
अत्र द्वितीयैकादशयोर्विंशतिवर्णानां संयोगपरत्वाद् गुरुत्वेऽपि ण्हह्लादि-संयोगस्यातीव्रप्रयत्नोच्चारणेन पूर्वं लघुत्वेन छन्दोभङ्ग इति गुणत्वम् ॥

वाक्यस्यानविरतिं प्राग्भग्नयतिसंज्ञया ।
समुद्दिष्टं यदधुना गुणत्वं तस्य कल्प्यते ॥ १२४ ॥

यथा,—शोभां पुष्यत्ययमभिनवः सुन्दरीणां प्रबोधः ।
किञ्चिद्भावालसमसरलप्रेक्षितं कामिनीनाम् ।
कार्याकार्यव्यवस्थितिमविकलाप्यागमेनैव पश्यन् ।
वश्यामुर्व्वीं वहति भूप इत्यस्ति चायं प्रयोगः ॥
अत्र पादत्रये चतुर्थस्थाने यतौ कर्त्तव्यायां पञ्चमस्थाने कृतत्वादपरत्र च पादस्य मध्यभागे निविष्टकेवलस्वरत्वाद् यतिभ्रंशेऽपि स्वरसन्धिकृतत्वादविभिन्ननामधातुशरीरत्वाच्च न दोषत्वम् ॥
तदाह,—स्वरसन्धिकृते प्रायो धातुभेदे तदिष्यते ।

नामभेदे च श्लेषेषु न दोष इति सूरयः ॥
लुप्ते पदान्ते श्लेषस्य पदत्वं निश्चितं यथा।
तथा सन्धिविकारान्तं पदमेवेति वक्ष्यते ॥

अशरीरं क्रियाहीनं क्रियापेक्षा न यत्र तु।
यत्रास्त्रादेरपेक्षा वा न दोषस्तत्र तद् यथा ॥ १२५ ॥

कियन्मात्रं जलं विप्र जानुदघ्नं नराधिप।
तथापीयमवस्था ते नहि सर्व्वे भवादृशाः ॥

अत्र त्रिषु पादेषु पदानि क्रियापदं नापेक्षन्ते। सापेक्षत्वासमर्थं भवति। चतुर्थे तु नहीत्यादिभिः सन्तीत्यपेक्षते नचैतावतामीषामसामर्थ्यं भवति। यदाह, यत्रान्यत् क्रियापदं नास्ति तत्रास्ति भवतीति पदं प्रथमपुरुषे प्रयुज्यते इति ॥

श्लिष्टमस्पृष्टशैथिल्यं शिथिलं तद्विपर्य्ययः।
गौड़ैर्यैरिष्यते तत्तु बन्धप्राशस्त्यगौरवात् ॥ १२६ ॥

यथा,—लीलाविलोलललना ललितालकलासकाः।
विलुप्तमालतीमाला जलकालानिला ववुः ॥

अत्र शैथिल्यदोषेऽपि बन्धप्राशस्त्येन गौड़ैरादृतत्वाद्गुणत्वम्।

न दोषः क्वापि वैषम्येऽप्यर्थालङ्कारकारणात्।
पौरस्त्यैरादृतत्वाच्च शब्दाड़म्बरतोऽपि वा ॥ १२७ ॥

चन्दनप्रणयोद्गन्धिर्मन्दो मलयमारुतः।
स्पर्द्धते रुद्धमद्धैर्यो वररामामुखानिलैः ॥

अत्र सत्यपि शब्दवैषम्यदोषे शब्दाड़म्बरगुणादर्थालङ्कारगुणात् पौरस्त्यैरादृतत्वाच्च गुणत्वं ॥

कठोरमपि बध्नन्ति दीप्तमित्यपरे पुनः।
तेषां मतेन तस्यापि दूषणं नैव विद्यते ॥ १२८ ॥

यथा,—न्यवैष पत्रः चपितः चत्रियाणां चणादयम्॥
अत्र कठोरत्वेऽपि दीप्तत्वाद्गुणत्वं॥

अविद्वदङ्गनाबालप्रसिद्धार्थं प्रसादवत्।
विपर्ययोऽस्याप्रसन्नं चित्रादौ तन्न दुष्यति॥ १२९॥

यथा,—याश्रिता पावनतया यातनाच्छिदनी च या।
याचनीया धिया माया या माया संस्तुता श्रिया॥
अत्राप्रसाददोषेऽपि चित्रत्वाद्गुणत्वम्॥

अध्याहारादिगम्यार्थं नेयार्थं प्रागुदाहृतम्।
स गम्यते प्रसिद्धश्चेन्न तद्दोषवदिष्यते॥ १३०॥

यथा,—मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा।
वाहिनीजलभरः कुलिशं वा स्वस्ति तेऽस्तु लतया सह वृक्ष॥
अत्र दहत्वित्यादीनामध्याहर्त्तव्यतया नेयत्वेऽप्यतिप्रसिद्धया प्रतीयमानत्वाद्गुणत्वं।

असभ्यार्थं मतं ग्राम्यं तद्ग्राम्योक्त्यैव दुष्यति।
विदग्धोक्तौ तु तस्याङ्ग गुणत्वं मनीषिणः॥ १३१॥

यथा,—कामं कन्दर्पचाण्डालो मयि वामाचि निर्दयः।
त्वयि निर्मत्सरो दिष्ट्या सोऽयमस्मास्वनुग्रहः॥
अत्र ग्राम्यत्वेऽपि ग्राम्यार्थस्य विदग्धोक्त्या तिरस्कृतत्वाद्गुणत्वम्।

ओजः समासभूयस्त्वं तद्दीप्तार्थेषु बध्यते।
विपर्ययोऽस्यासमस्तं तद्दीप्तं चेन्न दोषभाक्॥ १३२॥

यथा,—यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।
यो यस्तत् कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम्॥
अत्रासमस्तत्वेऽपि औद्धत्यवत्त्वाद्गुणत्वम्।

समस्तमसमस्तं वा न निर्वहति यद्वचः ।
तदनिर्व्यूढमत्रापि न दोषः क्वापि तद्यथा ॥ १३३ ॥

प्रसीद चण्डि त्यज मन्युमञ्जसा जनस्तवायं पुरतः कृताञ्जलिः ।
किमर्थमुत्कम्पितपीवरस्तनद्वयं त्वया लुप्तविलासमास्यते ॥
अत्र समस्तरीत्यनिर्वाहादनिर्व्यूढत्वेऽपि रसान्तरपरिग्रहेण रीत्यन्तरपरिग्रहाद्गुणत्वं ।

अनलङ्कारमित्याहुरलङ्कारोज्झितं वचः ।
पूर्वोत्तरानुसन्धाने तस्य साधुत्वमिष्यते ॥ १३४ ॥

यथा,—निशम्य ताः शेषगवीरभिधातुमधोक्षजः ।
शिष्याय बृहतां पत्युः प्रस्तावमदिशद्दृशा ॥
अत्रानलङ्कारत्वेऽपि पूर्वापरानुसन्धानप्रयोजनभूतत्वाद्गुणत्वम् ॥

वाक्याश्रयाणां दोषाणां गुणीभावोऽयमीरितः ।
अथ वाक्यार्थदोषाणामदोषः कथ्यतेऽधुना ॥ १३५ ॥
समुदायार्थशून्यं यत् तदपार्थं प्रचक्षते ।
तन्मत्तोन्मत्तबालानामुक्तेरन्यत्र दुष्यति ॥ १३६ ॥
यथा,—क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणामुपशान्तये श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियो रेखैव सान्यादृशी
चेतः स्वास्थ्यमुपेहि कः खलु युवा धन्योऽधरं धास्यति ॥
अत्र समुदयार्थशून्यतया अपार्थत्वेऽप्युन्मत्तवचनत्वाद्गुणत्वम् ॥

पदप्रयोजनं यत्र गतार्थमर्थमेव तत् ।
तत्रापि क्वापि निर्दोषः प्रयोगो दृश्यते यथा ॥ १३७ ॥

गीता विदुरवाक्यानि धर्माः शान्तनवेरिताः ।
न श्रुता भारते येन तस्य जन्म निरर्थकम् ॥

अत्र गीताविदुरवाक्यादीनां कथायामप्रयोजकत्वेऽपि इतिहासव्याजेन चतुर्वर्गप्रतिपादनसंरम्भ एव प्रतिज्ञानाद् गुणत्वम्। तदिदमप्रयोजनम्, एवं गतार्थमपि। यथा,—

हृत्कण्ठवक्त्रश्रोत्रेषु कस्य नावस्थितं तव ।
श्रीकण्ठहारकर्पूरदन्तपत्रसमं यशः ॥

अत्रैकेनैवोपमानेन श्रीकुम्प्रतीतौ शेषोपमानपदानां व्यर्थत्वेऽपि यशसः सार्वप्रमाणत्वगीयमानत्वस्तूयमानत्वश्रूयमाणत्वे हृदयादिषु श्रीखण्डादिवदनस्थानस्य प्रतीयमानत्वाद् गुणत्वम् ॥

अविशेषेण पूर्वोक्तं यदि भूयोऽपि कीर्त्यते ।
तदेकार्थं रसाक्षिप्तचेतसां तन्न दुष्यति ॥ १३८ ॥

यथा,—असारं संसारं परिमुषितरत्नं त्रिभुवनं
निरालोकं लोकं मरणशरणं बान्धवजनम् ।
अदर्पं कन्दर्पं जननयननिर्माणमफलं
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः ॥

असारं संसारमित्युक्त्वा परिमुषितरत्नं त्रिभुवनं निरालोकं लोकं जगज्जीर्णारण्यमिति यदुक्तं, तस्य विशेषानभिधायकत्वेऽपि रसाक्षिप्तेन वक्त्राभिहितत्वाद् गुणत्वम् ॥

संशयायैव सन्दिग्धं यदि जातु प्रयुज्यते ।
स्यादलङ्कार एवासौ न दोषस्तत्र तद् यथा ॥ १३९ ॥

कुदो लब्भइ पन्थि अ सत्थरअं एत्थ गामणिघरम्मि ।
उण्णअपओहरे पेक्खिऊण जइ वससि ता वससु ॥

अत्र केनापि पथिकयूना प्रावृडारम्भे ग्रामणीवधूः पीनोन्नतस्तनी सस्तरमिति स्रस्तरकव्याजेन प्रस्तरं याचिता । तं प्रत्याचक्षाणैव यथोक्तं ब्रूते। कुतोऽत्र ग्रामणीगृहे स्रस्तरकः, कुतो वा प्रस्तरं रतं। उन्नतौ पयोधरौ मम हृदये नभसि वा पयोधरान् दृष्ट्वा यदि वससि तद् वसेति

सदेतस्य गोपनाय व्यर्थैरेव पदैः प्रयुक्तमिति सन्दिग्धस्याप्यस्य गुणत्वम् ॥

वाक्ये प्रबन्धे चार्थानां पौर्व्वापर्य्यविपर्य्ययः ॥
दोषः सोपक्रमो नाम चित्रहेतौ न दुष्यति ॥ १४० ॥

यथा,—पश्चात् पर्य्यस्य किरणानुदीर्णं चन्द्रमण्डलम् ।
प्रागेव हरिणाक्षीणामुदीर्णो रागसागरः ॥
अत्र पौर्व्वापर्य्यविपर्य्ययादपक्रमदोषस्य चन्द्रोदयं प्रति रागोद्दीपन-प्रकर्षप्रकाशनत्वाददोषः ॥

यस्मिन् रीतेरनिर्वाहः खिन्नं तदभिधीयते ।
न दोषस्तस्य तु क्वापि यत्र च्छाया न हीयते ॥ १४१ ॥

यथा,—अभिनववधूरोषस्वादुः करीषतनूनपा-
दसरलजनाश्लेषक्रूरस्तुषारसमीरणः ।
गलितविभवस्याज्ञेवाद्य द्युतिर्मसृणा रवे-
र्विरहिवनितावक्त्रौपम्यं बिभर्त्ति निशाकरः ॥
अत्र उपमानानि सामान्यवचनैः समस्यन्ते इति प्रक्रान्तरीतेरनिर्वाहेऽपि समासव्याख्यापरत्वेनैव इवशब्दतद्वितयोः प्रयोगे प्रत्युत च्छायोत्कर्ष इति गुणत्वम् ॥

लोकातीत इवार्थो यः सोऽतिमात्र इहेष्यते ।
वार्त्तादौ तेन दुष्यन्ति विदग्धा नेतरे जनाः ॥ १४२ ॥
तच्च वार्त्ताभिधानेषु वर्णनास्वपि विद्यते ।
कान्तं जगति तत् कान्तं लौकिकार्थानुयायि यत् ॥ १४३ ॥
लौकिकार्थमतिक्रम्य प्रस्थानं यत् प्रवर्त्तते ।
तदत्युक्तिरिति प्रोक्तं गौड़ानां मनसो मुदे ॥ १४४ ॥

यथा,—देव धिष्ण्यमिवाराध्यमद्यप्रभृति नो गृहम् ।

स्मृतपादरजःपातधौतनिःशेषकल्मषम् ॥
अत्रातिमात्राख्ये दोषेऽपि वार्त्ताभिधानेऽभिधेयस्य कान्तिगुणस्याभ्यनुज्ञानाद्गुणत्वम् ।

यथावा,—अल्पं निर्मितमाकाशमनालोच्यैव वेधसा ॥
इदमेवंविधं भावि भवत्याः स्तनजृम्भणम् ।

अत्रातिमात्रत्वेऽपि वर्णनार्थत्वाद्गुणत्वम् ॥ अथानतिमात्रं कीदृग् उच्यते वार्त्तं तावत् ।

यथा,—गृहाणि नाम तान्येव तपोराशिर्भवादृशः ।
संभावयति यान्येवं पावनैः पादपांशुभिः ॥

अथ वर्णनायाम् ।

अनयोरनवद्याङ्गि स्तनयोर्जृम्भमाणयोः ।
अवकाशो न पर्याप्तस्तव बाहुलतान्तरे ॥

यच्चार्थं निष्ठुरार्थं तु यदसीव विगर्हितम् ।
विरुद्धलक्षणाद्यासु तदुक्तिषु न दुष्यति ॥ १४५ ॥

यथा,—हालाहलं विषं भुङ्क्ष्व सखि मा तत्र विश्वसीः ।
यद्वा न दह्यसे कान्तैः स्वल्पैस्त्वमपि मे मतिः ॥

अत्र पारुष्येऽपि विरुद्धलक्षणया अर्थान्तरस्य लक्षितत्वाद्गुणत्वम् ।

अप्रस्तुतरसं प्राहुर्विरसं वस्तु सूरयः ॥
अप्राधान्येन तदिष्टं शिष्टैः स्यादृसवस्तुनोः ॥ १४६ ॥

यथा,—क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तम्
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण ।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥

अत्र करुणे शृङ्गारस्याप्रस्तुतत्वेऽपि शम्भुप्रभाववर्णनाङ्गभूतत्वेन द्वयोरप्यप्राधान्याद्वैरस्येन गुणत्वम् ॥

हीनं यत्रोपमानं स्यादुपमेयं गुणाधिकम् ।
हीनोपमं तदस्याहुः कवयः काव्यदुष्टताम् ॥ १४७ ॥

यथा,—ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ॥

अत्रोपमानस्य हीनतायामपि रागातिशयहेतुत्वाद्गुणत्वम् ।

यत्रोपमानमुत्कृष्टमुपमेयं निकृष्यते ।
ज्ञेयं तदधिकौपम्यमस्यापि काव्यदोषता ॥ १४८ ॥

यथा,—कान्त्या चन्द्रमसं धाम्ना सूर्यं धैर्येण चार्णवम् ।
राजन्ननुकरोषि त्वं सौभाग्येनापि मन्मथम् ॥

अस्याधिकौपम्येऽपि राज्ञो लोकपालांशत्वेन शिष्टैराहतत्वाद्गुणत्वम् ॥

उपमानस्य वैषम्याद्भवेदसदृशोपमम् ।
तस्यत्राप्यनुज्ञामिच्छन्ति व्यतिरेकोपमादिषु ॥ १४९ ॥

यथा,—प्रहितः प्रधनाय माधवानहमाकारयितुं महीभुजा ।
न परेषु महौजसश्छलादपकुर्वन्ति मलिम्लुचा इव ॥

अस्यासदृशोपमत्वेऽपि व्यतिरेकोपपादकत्वाद्गुणत्वम् ।

यस्योपमानं लोकेषु न प्रसिद्धं तदिष्यते ।
अप्रसिद्धोपमं नाम तत् क्वचिन्नैव दुष्यति ॥ १५० ॥

यथा,—उद्गर्भहूणरमणीरमणोपमर्द-
भुग्नोन्नतस्तननिवेशनिभं हिमांशोः ।
बिम्बं कठोरबिसकाण्डकडारगौरै-
र्विष्णोः पदं प्रथममग्रकरैर्व्यनक्ति ॥

अस्याप्रसिद्धोपमत्वदूषणत्वेऽपि द्वयोरपि शृङ्गारोद्दीपकत्वसाम्याद्गुणत्वम् ॥

निरलङ्कारमित्याहुरलङ्कारोज्झितं वचः ।

अर्थौचित्येषु तस्यापि क्वचिन्निर्दोषता मता ॥ १५१ ॥

यथा,—याच्ञां दैन्यपराभवप्रणयिनीं नेच्वाकवः शिचिताः
सेवासञ्चलितः कदा रघुकुले मौलौ निबद्धोऽञ्जलिः।
सर्वं तद्विहितं तथाप्युदधिना नैवोपरोधः कृतः
पाणिः संप्रति मे हठात् किमपरं स्प्रष्टुं धनुर्वाञ्छति ॥

अत्र निरलङ्कारत्वेऽपि अर्थौचित्याद्गुणत्वम् ॥

असभ्यार्थं यदश्लीलं तदर्थान्तरवाचि वा।
तत्रेत्र दृश्यते भूम्ना प्रयोगो नापि दुष्यति ॥ १५२ ॥

यथा,—अद्यापि तत् कनककुण्डलघृष्टगण्ड-
मास्यं स्मरामि विपरीतरताभियोगे।
आन्दोलनश्रमजलस्फुटघर्मबिन्दु-
मुक्ताफलप्रकरविच्छुरितं प्रियायाः ॥

अत्राश्लीलार्थेऽपि कविभिरविगीतत्वाद् गुणत्वम् ॥

देशोऽद्रिवनराष्ट्रादिः कालो रात्रिन्दिवर्त्तवः।
नृत्यगीतप्रभृतयः कलाः कामार्थसंश्रयाः ॥ १५३ ॥
चराचराणां भूतानां प्रवृत्तिर्लोकसंज्ञिता।
हेतुविद्यात्मको न्यायः सस्मृतिः श्रुतिरागमः ॥ १५४ ॥
तेषु तेष्वयथारूढं यदि किञ्चित् प्रवर्त्तते।
कवेः प्रमादाद्देशादिविरोधीत्युच्यते तु तत् ॥ १५५ ॥
विरोधः सकलोऽप्येव कदाचित् कविकौशलात्।
उत्क्रम्य दोषगणनां गुणवीथीं विगाहते ॥ १५६ ॥

तत्र देशविरुद्धस्य गुणीभावो यथा,—
तस्य राज्ञः प्रभावेण तदुद्यानानि जज्ञिरे।
आर्द्रांशुकप्रवालानामास्पदं सुरशाखिनाम् ॥

अत्र देशविरुद्धत्वेऽपि तस्य राज्ञः प्रभावेणेतिकारणोपन्यासाद्‌गुणत्वम्‌ ॥

कालविरुद्धस्य यथा,—

राज्ञां विनाशपिशुनश्चचार खरमारुतः ।
धुन्वन्‌ कदम्बकुसुमैः सह सप्तच्छदोद्गमान्‌ ॥

अत्र कालविरुद्धत्वेऽपि राज्ञां विनाशपिशुन इत्यनिष्टसूचकोत्पातरूपत्वाद्‌ गुणत्वम्‌ ॥

लोकविरुद्धस्य यथा,—

ऐन्दवादर्चिषः कामी शिशिरं हव्यवाहनम्‌ ।
अबलाविरहक्लेशविह्वलो गणयत्यलम्‌ ॥

अत्र लोकविरुद्धत्वेऽपि कामिभिस्तथा संवेद्यमानत्वाद्‌ गुणत्वम्‌ ॥

युक्तिविरुद्धस्य यथा,—

स सङ्कोचश्चन्द्रादिव कुमुदराशेरशरणः
स सूर्येणात्‌ कोकानां विरह इव लुप्तमतिविधिः ।
गुणे ऽभ्यस्ते खेदप्रशमनकरेभ्योऽपि अदयम्‌
खलानामुद्वेगस्तदिदममृतादेव मरणम्‌ ॥

अत्र युक्तिविरुद्धत्वेऽपि च्छेकोक्त्या संभाव्यमानोपमया तथाप्रतीतेर्गुणत्वम्‌ ॥

औचित्यविरुद्धस्य यथा,—

तेनाथ नाथ दुरुदाहरणातपेन
सौम्यापि नाम परुषत्वमभिप्रपन्ना ।
जज्वाल तीक्ष्णविशदाः सहसोद्गिरन्ती
वागर्चिषस्तपनकान्तशिलेव सीता ॥

अत्र स्त्रीत्वादौचित्यविरोधेऽपि तत्समयोचितत्वाद्‌ गुणत्वम्‌ ॥

वचनविरुद्धस्य यथा,—

परदाराभिलाषो मे कथमार्यस्य युज्यते ।

पिबामि तरलं तस्याः कदा नु दशनच्छदम्॥

अत्र वचनविरोधेऽपि वक्तुस्तथाविधावस्थत्वाद् गुणत्वम॥

धर्मविरोधस्तत्र यथा,—

पञ्चानां पाण्डुपुत्राणां पत्नी पाञ्चालकन्यका।
सतीनामग्रणीश्चासीद्दैवो हि विधिरीदृशः॥

अत्र धर्मविरोधेऽपि दैवो विधिरित्यनेनाभिहितत्वाददोषः॥

अर्थशास्त्रविरुद्धस्तत्र यथा,—

नीतिरापदि यद् गम्यः परस्तन्मानिनो ह्रिये।
विधुर्विधुन्तुदस्येव पूर्णस्तस्योत्सवाय सः॥

अत्रापन्नः शत्रुरभियातव्यइति नीतिशास्त्रं मानिनो ह्रियै भवतोऽतिविरुद्धमपि उद्धतपुरुषभाषितत्वान्न दुष्यतीति गुणत्वम्॥

कामशास्त्रविरुद्धस्तत्र यथा,—

दोलातिप्रेरणत्रस्तवधूजनसुखोद्गतम्।
कामिना लयवैषम्याद् गेयं रागमवर्द्धयत्॥

अत्र त्रासतो लयवैषम्येण गेयस्य रागहेतुत्वेऽपि कामिनीमुखोद्गीर्णत्वाद्रागविवर्द्धनत्वेन गुणत्वम्॥

इत्थं गुणाश्च दोषाश्च काव्ये दोषगुणाश्च ये।
आख्यातास्ते स्फुटं संप्रत्यलङ्कारान् प्रचक्ष्महे॥ १५७॥
युवतेरिव रूपमङ्ग काव्यं स्वदते शुद्धगुणं तदप्यतीव।
विहितप्रणयं निरन्तराभिः सदलङ्कारविकल्पनाभिः॥ १५८॥
यदि भवति वचश्च्युतं गुणेभ्यो
वपुरिव यौवनवन्ध्यमङ्गनायाः।
अपि जनदयितानि दुर्भगत्वं
नियतमलङ्करणानि संश्रयन्ते॥१५९॥
दीर्घापाङ्गं नयनयुगलं भूषयत्यञ्जनश्री-

सुङ्गाभोगौ प्रभवति कुचावर्चितुं हारयष्टिः।
मध्ये क्षामे वपुषि लभते श्यामकूर्पासलक्ष्मीः
श्रोणीविम्बे गुरुणि रशनादामशोभां विभर्त्ति॥ १६०॥

इति महाराजभोजदेवविरचिते सरस्वतीकण्ठाभरणालङ्कारे
गुणविवेचनं नाम प्रथमः परिच्छेदः॥

---

## द्वितीयपरिच्छेदः ॥

---

शब्दार्थोभयसंज्ञाभिरलङ्कारान् कवीश्वराः ।
बाह्यानाभ्यन्तरान् बाह्याभ्यन्तरांश्चानुशासति ॥ १ ॥
ये व्युत्पत्त्यादिना शब्दमलङ्कर्तुमिह क्षमाः ।
शब्दालङ्कारसंज्ञास्ते ज्ञेया जात्यादयो बुधैः ॥ २ ॥
जातिर्गती रीतिवृत्तिच्छायामुद्रोक्तियुक्तयः ।
भणिति र्गुम्फना शय्या पठिति र्यमकानि च ॥ ३ ॥
श्लेषानुप्रासचित्राणि वाकोवाक्यं प्रहेलिका ।
गूढप्रश्नोत्तराध्येयश्रव्यप्रेक्ष्याभिनीतयः ॥ ४ ॥
चतुर्विंशतिरित्युक्ताः शब्दालङ्कारजातयः ॥
अथासां लक्षणं सम्यक् सोदाहरणमुच्यते ॥ ५ ॥
तत्र संस्कृतमित्यादि भारती जातिरिष्यते ।
सा त्वौचित्यादिभि र्वाचामलङ्काराय जायते ॥ ६ ॥
संस्कृतेनैव केऽप्याहुः प्राकृतेनैव केचन ।
साधारण्यादिभिः केचित् केचन म्लेच्छभाषया ॥ ७ ॥
न म्लेच्छितव्यं यज्ञादौ स्त्रीषु नाप्राकृतं वदेत् ।
संकीर्णं नाभिजातेषु नाप्रबुद्धेषु संस्कृतम् ॥ ८ ॥
देवाद्याः संस्कृतं प्राहुः प्राकृतं किन्नरादयः ।
पैशाचाद्यं पिशाचाद्या मागधं हीनजातयः ॥ ९ ॥
संस्कृतेनैव कोऽप्यर्थः प्राकृतेनैव चापरः ।
शक्यो रचयितुं कश्चिदपभ्रंशेन जायते ॥ १० ॥
पैशाच्या शौरसेन्याद्यो मागध्यान्यो निबध्यते ।

द्विताभिः कोऽपि भाषाभिः सर्व्वाभिरपि कश्चन ॥ ११ ॥
नात्यन्तं संस्कृतेनैव नात्यन्तं देशभाषया ।
कथां गोष्ठीषु कथयंल्लोके बहुमतो भवेत् ॥ १२ ॥
शृण्वन्ति लटभं लाटाः प्राकृतं संस्कृतद्विषः ।
अपभ्रंशेन तुष्यन्ति स्वेन नान्येन गुर्जराः ॥ १३ ॥
ब्रह्मन् विज्ञापयामि त्वां स्वाधिकारजिहासया ।
गौड़स्त्यजतु वा गाथामन्या वास्तु सरस्वती ॥ १४ ॥
के ऽभूवन्नाढ्यराजस्य राज्ये प्राकृतभाषिणः ।
काले श्रीसाहसाङ्कस्य के न संस्कृतवादिनः ॥ १५ ॥
गिरः श्रव्या दिव्याः प्रकृतिमधुराः प्राकृतधुराः
सुभव्योऽपभ्रंशः सरसरचनं भूतवचनम् ।
विदग्धानामिष्टे मगधमधुरावासिभणिति-
र्निबद्धा यस्तेषां स इह कविराजो विजयते ॥ १६ ॥
शुद्धा साधारणी मिश्रा संकीर्णा नान्यगामिनी ।
अपभ्रष्टेति साचार्य्यैस्त्र जातिः षोढ़ा निगद्यते ॥ १७ ॥

तांस्वृत्तमपात्रप्रयोज्या संस्कृतजातिः शुद्धा यथा,—
उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
कण्टकितेन प्रथयति मय्यनुरागं कपोलेन ॥
मध्यमपात्रप्रयोज्या प्राकृतजातिः शुद्धा यथा,
तुज्भ ण आणे हिअअं मम उण मअणो दिआ अ रत्तिं अ
णिक्किव तवेइ वलिअं तुइ जुत्तमनोरहाइ अंगाइ।
हीनपात्रप्रयोज्या मागधिका शुद्धा यथा,—
शद माणुशमंशभालके कुंभशाहश्श वशाहि शंचिदे ॥
अणिशं च पिआमि शोणिदे वलिशशदं शमले हुवीअदि ॥
नातुरक्तमपात्रप्रयोज्या पैशाची शुद्धा यथा,—

मनमत पनअप्पकुपितगोलीचलनगालगापड़िविंबं ।
ससमु नहतप्पनेसु एआतसतनुधलं लुद्दं ॥

नातिमध्यमपात्रप्रयोज्या शौरसेनी शुद्धा यथा,—

तं सि मए पूअंकुर दिण्णो कामस्स गहिदधणुदस्स ।
जुवदूमणमोहणहसो पंचभहिओ सरो होहि ॥

नातिहीनपात्रप्रयोज्योऽपभ्रंशः शुद्धो यथा,—

लइ वण्पुल पिअ दुद्धं कत्तो अम्हाण छण्णासि ।
पुत्तहमत्थहत्थो जइ दहि जम्मेवि जत्र आसि ॥

प्रायिकश्चैतत् तेन कवेरभिप्रायशक्त्यादिभ्यः सर्व्वा अपि सर्वप्रयोज्या भवन्ति ।

ता इमाः शुद्धाः षड़ेव, साधारण्यादयः पुनरनन्ताः । तासु मध्यमपात्रभूमिकास्थोत्तमपात्रप्रयोज्या संस्कृतप्राकृतयोः साधारणी यथा,—

सरले साहसरागं परिहर रम्भोरु मुञ्च संरम्भम् ।
विरसं विरहायासं सोढुं तव चित्तमसहं मे ॥

नात्युत्तमभूमिकास्थोत्तमपात्रप्रयोज्या संस्कृतपैशाची साधारणी यथा,—

चम्पककलिकाकोमलकान्तिकलापाय दीपितानङ्गा ।
इच्छति गजपतिगमना चपलायतलोचना लपितुम् ॥

एवं संस्कृतापभ्रंशादिसाधारण्यः प्राकृतादिभाषान्तरसाधारण्यश्च द्रष्टव्याः ॥ वक्तृविषयौचित्यादिप्रयोज्या मिश्रा यथा,—

जयति जनताभिवाञ्छितफलप्रदः कल्पपादपो गिरिशः ।
जअइ अ तमस्लिअंगी गिरितनया पणइकप्पलआ ॥

एवं भाषान्तराणामपि मिश्रीभावो द्रष्टव्यः ॥

दुर्विदग्धादिपात्रप्रयोज्या संकीर्णा यथा,—

अकटगुमटी चन्दनप्रोतृप्ता कलं किल कोइलो
लयइ असुकूर्योप्यो वायुर्निवारय वाइ अ ।
अवि सखि अला रक्ताशोकसायामि मणो सुदे

न कज्ज न कज्जं मानेनाद्य प्रियं प्रति जाअदा।

सोऽयं संस्कृतमहाराष्ट्रापभ्रंशप्रयोगस्तिलतण्डुलवत् संकीर्णा जातिः। एवं प्राकृतापभ्रंशसङ्करोऽपि द्रष्टव्यः। क्रीड़ागोष्ठीविनोदाद्यर्थाऽनन्यगामिन्यसाधारणी यथा,—

भीष्ममोक्तानि वाक्यानि विद्वद्भ्यो गुरवे।

गोखे तिविच्छिरिच्छोलो तत्र व्रहे विचस्त्रिदा॥

अत्र पूर्व्वार्द्धपदानि संस्कृत एव, उत्तरार्द्धपदानि प्राकृत एव। सेयमसाधारण्यनन्यगामिनी च जातिरुच्यते। भाषान्तराणां पुनरसाधारण्यं नास्ति॥ अपभ्रष्टा यथा,—

मुद्धे गहणाअ गेण्हुउ तं धरि मुद्दं णिऐ हत्थे।

णिच्छउ सुन्दरि तुह उवरि मम सुरआणहा अत्थि॥

सेयमपशब्दप्रयोगतो ऽपभ्रष्टायत्रविद्भिः श्रोत्रियादैः प्रयुज्यत इत्यपभ्रष्टा जातिः॥ अस्या अपि चानुकरणे साधुत्वमिष्यते।

पद्यं गद्यञ्च मिश्रञ्च वाक्यं यत् सा गतिः स्मृता।

अर्थौचित्यादिभिः सापि वागलङ्कार इष्यते॥ १८॥

कश्चिद् गद्येन पद्येन कश्चिन्मिश्रेण शक्यते।

कवितुं कश्चन द्वाभ्यां कायेऽर्थः कश्चन त्रिभिः॥ १९॥

यादृग् गद्यविधौ वाणः पद्यबन्धेन तादृशः।

गत्यां गत्यामियं देवी विचित्रा हि सरस्वती॥ २०॥

यथामति यथाशक्ति यथौचित्यं यथारुचि।

कवेः पात्रस्य चैतस्याः प्रयोग उपपद्यते॥ २१॥

द्रुता विलम्बिता मध्या साथ द्रुतविलम्बिता।

द्रुतमध्या च विज्ञेया तथा मध्यविलम्बिता॥ २२॥

सा लघूनां गुरूणाञ्च बाहुल्याल्पत्वमिश्रणैः।

पद्ये गद्ये च मिश्रे च षट् प्रकारोपजायते॥ २३॥

तत्र द्रुताञ्च जातिञ्च पद्यमाहुरथो पृथक्।

समं चार्द्धसमं चैतत् विषमञ्च प्रचक्षते ॥ २४ ॥
गद्यमुत्कलिकाप्रायं गद्यगन्धीति च द्विधा ।
द्विधैव गद्यपद्यादिभेदान्मिश्रमपीष्यते ॥ २५ ॥
ललिता निष्ठुरं चूर्णमाविद्धञ्चेति यो ऽपरः ।
विशेषः स तु गद्यस्य रीतिवृत्त्यो भविष्यति ॥ २६ ॥

तत्र पद्यभेदेषु समवृत्ते द्रुता गतिर्यथा,—

अयि विजहीहि दृढोपगूहनं त्यज नवसङ्गमभीरु वल्लभम् ।
अरुणकरोद्गम एष वर्त्तते वरतनु सम्प्रवदन्ति कुक्कुटाः ॥

सेयं समवृत्ते लघुसंयुक्ताक्षरभूयस्त्वाद्द्रुता गतिः ॥ समवृत्ते विलम्बिता यथा,—

प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वतः ।
पदार्थधर्मसंग्रहः प्रवक्ष्यते महोदयः ॥

सेयं स्थाने स्थाने गुर्व्वक्षरयोगाद् विलम्बिता गतिः । तत्रैव मध्या यथा,—

आसीद्दैत्यो हयग्रीवः सुहृद्वेश्मसु यस्य ताः ।
प्रदन्ति स्म बलं बाह्वोः सितच्छत्रस्मिताः श्रियः ॥

सेयं नातिलघुक्षरत्वान्मध्या गतिः । द्रुतविलम्बिता यथा,—

अवतु वः सवितुस्तुरगावली स्फुरितमध्यगतारुणनायका ।
समभिलङ्घिततुङ्गपयोधरा मरकतैकलतेव नभःश्रियः ॥

सेयं द्रुतायाश्च विलम्बितायाश्च गतेरन्तरान्तरानुप्रवेशाद् द्रुतविलम्बिता गतिः । द्रुतमध्या यथा,—

अपि तुरगसमीपादुत्पतन्तं मयूरम्
न स रुचिरकलापं बाणलक्ष्यीचकार ।
सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे
रतिविगलितबन्धे केशपाशे प्रियायाः ॥

सेयं द्रुतायाश्च मध्यायाश्च गतेरन्तरानुप्रवेशाद् द्रुतमध्या गतिः।
अथ विलम्बिता यथा,—

दुन्दुभयो दिवि दध्वनुरुच्चैश्चञ्चकराः कपयश्च ववल्गुः।
सिद्धनिकायकराब्जविमुक्तं माल्यमथाङ्गदमूर्द्धि प्रपात॥

सेयं मध्याया विलम्बितायाश्च गते रन्तरानुप्रवेशान्मध्यविलम्बिता गतिः।
एवमर्द्धसमविषमयोर्मात्राच्छन्दःसु गद्यमिश्रयोर्लघुगुरुत्रिश्रवर्णविन्यासविशेषभूयस्त्वेन द्रुतादिगतयो गवेषणीयाः॥
तत्र विषमवृत्तच्छन्दसि द्रुता यथा,—

अथ वासवस्य वचनेन रुचिरवदनस्त्रिलोचनम्।
क्लान्तिरहितमभिराधयितुं विधिवत्तपांसि विदधे धनञ्जयः॥

अर्द्धसमच्छन्दसि विलम्बिता यथा,—

विहितां प्रियया मनःप्रियामथ निश्चित्य गिरं गरीयसीम्।
उपपत्तिमदूर्जिताश्रयं नृपमूचे वचनं वृकोदरः॥

उत्कलिकाप्रायगद्ये द्रुता मध्या च यथा,—

व्यपगतघनपटलममलजलनिधिसदृशमम्बरतलं विलोक्यते॥
अञ्जनचूर्णपुञ्जश्यामं शार्वरं तमः स्त्यायते॥

पैद्यगन्धिगद्ये वृत्तगन्धौ मध्या जातिगन्धौ द्रुता यथा,—

पातालतालुतलवासिषु दानवेषु॥
हरइव जितमन्मथो गुह इवाप्रतिहतशक्तिः॥ इति

गद्यादौ मिश्रे गद्यपद्ययोर्द्रुतमध्या यथा,—

हन्त पुण्यवानस्मि यदद्य मतर्कितोपनतदर्शनोल्लसितनयनयानया।
अविरलमिव दाम्ना पौण्डरीकेण नद्धः
स्नपित इव च दुग्धस्रोतसां निर्झरेण।
कवलित इव कृत्स्नश्चक्षुषा स्फारितेन
प्रसभममृतवर्षेणेव सान्द्रेण सिक्तः॥

पद्यादौ मिश्रे द्रुतविलम्बिता यथा,—

असौ विद्याधारः शिशुरपि विनिर्गत्य भवना-
द्दिहायातः संप्रत्यविकलशरच्चन्द्रमधुरः।
यदालोकस्थाने भवति पुरसुन्मादतरलैः
कटाक्षैर्नारीणां कुवलयितवातायनमिव॥

अत्र बालसुहृदा मकरन्देन सह विद्यामान्वीक्षिकीमधीते स एवं माधवो नाम इति।

वैदर्भादिकृतः पन्थाः काव्ये मार्ग इति स्मृतः।
रीङ् गताविति धातोः सा व्युत्पत्त्या रीतिरुच्यते॥ २७॥
वैदर्भी साथ पाञ्चाली गौडीयावन्तिका तथा।
लाटीया मागधी चेति षोढा रीतिर्निगद्यते॥ २८॥
तत्रासमासा निःशेषश्लेषादिगुणगुम्फिता।
विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते॥ २९॥
समस्तपञ्चषपदामोजःकान्तिविवर्जिताम्।
मधुरां सुकुमाराञ्च पाञ्चालीं कवयो विदुः॥ ३०॥
समस्तात्युद्भटपदामोजःकान्तिगुणान्विताम्।
गौडीयेति विजानन्ति रीतिं रीतिविचक्षणाः॥ ३१॥
अन्तराले तु पाञ्चालीवैदर्भ्यो र्याऽवतिष्ठते।
सावन्तिका समस्तैः स्याद्द्वित्रैस्त्रिचतुरैः पदैः॥ ३२॥
समस्तरीतिव्यामिश्रा लाटीया रीतिरिष्यते।
पूर्व्वरीतेरनिर्व्वाहे खण्डरीतिस्तु मागधी॥ ३३॥

तासु वैदर्भी यथा,—

मनीषिताः सन्ति गृहेषु देवतास्तपः क्व वत्से क्व च तावकं वपुः।
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः॥

सेयमसमस्तपदा समस्तश्लेषादिगुणवती वैदर्भी रीतिः।

पाञ्चाली यथा,—

गात्राविघातदलिताङ्गदजर्जराणाम्
गण्डस्थलीललितकुण्डलताडितानाम्।
घोभस्फुटन्मुकुटकोटिविघट्टितानाम्
नादोऽभवज् झणझणामुखरो मणीनाम्॥

सेयमोजःकान्तप्रभावादाश्लिष्टश्लथभावपुराणच्छायामाधुर्यप्रसौकुमार्यप्रवती समस्तपञ्चषपदा पाञ्चाली रीतिः॥

गौडीया यथा,—

यस्यावस्कन्दलीलावलितबलपरिस्पन्दखर्वीकृतोर्वी-
संरम्भोत्तम्भनायोन्नमितभरनमत्कन्धरासन्धिरासीत्।
शेषो विस्फारफुल्लस्फुटपृथुलफणाफुत्कृताग्निस्फुलिङ्ग-
स्फूर्जत्सन्दोहसन्देहितविकटशिरोमण्डलीरत्नखण्डः॥

सेयमोजःकान्तिमती समस्तोद्भटभूरिपदा च गौडीया रीतिः॥

आवन्तिका यथा,—

एतानि निःसहतनोरसमञ्जसानि
भूनंत्र मनः मिथुनयन्ति पदानि तस्याः।
एते च वर्त्म तरवः प्रथयन्ति ताप-
मालिङ्गितोज्झितपरिग्लपितैः प्रवालैः॥

सेयं समस्तद्वित्रिचतुरपदा वैदर्भीपाञ्चाल्योरन्तरालवर्त्तिन्यावन्तिका नाम रीतिः॥

लाटीया यथा,—

अयमुदयति मुद्राभञ्जनः पद्मिनीना-
मुदयगिरिवनालीबालमन्दारपुष्पम्।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्
कुपितकपिकपोलक्रोडताम्रस्तमांसि॥

सेयं समस्तरीतिमिश्रा लाटीया नाम रीतिः॥

मागधी यथा,—

करिकवलनशिष्टैः शाखिशाखाग्रपत्रै-
रुरणसरण्योऽमी सर्व्वतो भीषयन्ते।
चलितशबरसेनादत्तगोशृङ्गचण्ड-
ध्वनिचकितवराहव्याकुला विन्ध्यपादाः॥

सेयमारब्धरीतेरनिर्व्वाहात् खण्डरीतिर्मागधी॥

या विकाशेऽथ विक्षेपे सङ्कोचे विस्तरे तथा।
चेतसो वर्त्तयित्री स्यात् सा वृत्तिः सापि षड्विधा॥ ३४॥
कैशिक्यारभटी चैव भारती सात्वती परा।
मध्यमारभटी चैव तथा मध्यमकैशिकी॥ ३५॥
सुकुमारार्थसंदर्भा कैशिकी तासु कथ्यते।
या तु प्रौढार्थसंदर्भा वृत्तिरारभटीति सा॥ ३६॥
कोमलप्रौढसंदर्भा कोमलार्थाथ भारती।
प्रौढार्था कोमलप्रौढसंदर्भां सात्वतीं विदुः॥ ३७॥
कोमले प्रौढसंदर्भा त्वर्थे मध्यमकैशिकी।
प्रौढार्था कोमले बन्धे मध्यमारभटीष्यते॥ ३८॥

तत्र कैशिकी यथा,—

अभिरुचिषु दलेषु नागवल्ल्या विचकिलदामनि चन्दने च हृद्ये।
कुवलयिनि पुराणसीधुपात्रे तरलदृशामपतन् दृशः प्रिये च॥

सेयमर्थस्य च संदर्भस्य च सौकुमार्य्यात् कैशिकी नाम वृत्तिः॥

आरभटी यथा,—

यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदः पाण्डवीनां चमूनाम्
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।
यो यस्तत् कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम्॥

सेयं प्रौढार्थसंदर्भारभटी नाम वृत्तिः॥

भारती यथा,—

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकवरीभारमंसे वहन्त्याः।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु॥

सेयमतिसुकुमारार्थं नातिसुकुमारसंदर्भा भारती नाम वृत्तिः॥

सात्वती यथा,—

वन्द्यौ द्वावपि तावनार्यचरितप्राप्तप्रतापोदयौ
भीमो भीमपराक्रमः स च मुनि र्भास्वत्कुठारायुधः।
एकेनामृतवद्विदार्य करजैः पीतान्यवक्षो द्विधा-
मन्येनापि हताहिताशसरसि स्नातं क्रुधः शान्तये॥

सेयं प्रौढार्था नातिप्रौढसंदर्भा सात्वती नाम वृत्तिः॥

मध्यमकैशिकी यथा,—

किं द्वारि दैवहतके सहकारकेण
संवर्द्धितेन विषपादप एष पापः।
अस्मिन् मनागपि विकाशविकारभाजि
भीमा भवन्ति मदनज्वरसन्निपाताः॥

सेयं सुकुमारेऽर्थे प्रौढसंदर्भा मध्यमकैशिकी नाम वृत्तिः॥

मध्यमारभटी यथा,—

त्वं नागराज बहुमस्य नितम्बभागम्
भोगेन गाढमुपवेष्ट्य मन्दराद्रेः।
सोढा विपक्ष्य वृषवाहनयोगलीला-
पर्यङ्कबन्धनविधेस्तव कोऽतिभारः॥

सेयं प्रौढेऽर्थे सुकुमारसंदर्भा मध्यमारभटी नाम वृत्तिः॥

अन्योक्तीनामनुकृतिश्छाया सापीह षड्विधा।
लोकच्छेकार्भकोन्मत्तपोटामत्तोक्तिभेदतः॥ ३८॥

तासु लोकोक्तिच्छाया यथा,—

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
मासानेतान् गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं तं तमात्माभिलाषम्
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥

सेयं लोचने मीलयित्वेति लोकोक्तेरनुकृतिर्लोकोक्तिच्छाया ॥

छेकोक्तिच्छाया यथा,—

यो हि दीर्घासिताक्षस्य विलासललितभ्रुवः ।
कान्तासुखस्यावधयस्तस्मै रूपघ्ने नमः ॥

सेयं रूपघ्ने नम इति विदग्धोक्तेरनुकृतिश्छेकोक्तिच्छाया ॥

अर्भकोक्तिच्छाया यथा,—

किं स स्वर्गतरुः कोऽपि यत्र पुष्पं निशाकरः ।
ते धन्याः कीदृशा भार्येषां मुक्ताफलं फलम् ॥

सेयमव्युत्पन्नशिशुजनोक्तेरनुकृतिरर्भकोक्तिच्छाया ।

उन्मत्तोक्तिच्छाया यथा,—

दृष्टः कथं सुतनु किं कुरुते किमस्मद्-
वार्त्तां स इच्छति शृणोति निवेद्यमानाम् ।
भार्या किमस्य कथया कथयाशु तावद्
भवागमिष्यति न वा खलु सोऽभिमानी ॥

सेयमसमञ्जसाया उन्मत्तोक्तेरनुकृतिरुन्मत्तोक्तिच्छाया ॥

पोटोक्तिच्छाया यथा,—

तिलकमसहाक्षि सोढुं घनसारेणातिसारो दोषो मे ।
लघयति च दौर्बल्यं कुङ्कुमरागो प्रसाङ्गानि ॥

सेयमुत्तमपदारोपितनीचयुवत्युक्तेरनुकृतिः पोटोक्तिच्छाया ॥

मत्तोक्तिच्छाया यथा,—

पि पि प्रिय स स स्वयं मु मु मुखासवं देहि मे

स त त्यज द्रु द्रु द्रुतं भ भ भ भाजनं काञ्चनम्।
इति स्खलितजल्पितं मदवशात् कुरङ्गीदृशः
प्रगे हसितहेतवे सहचरीभिरध्यैयत ॥

सेयं स्खलन्त्या मत्तोक्तेरनुकृति र्मत्तोक्तिच्छाया ॥

साभिप्रायस्य वाक्ये यद्वचसो विनिवेशनम्।
मुद्रां तां मुत्प्रदायित्वात् काव्यमुद्राविदो विदुः ॥ ४० ॥
साख्मिन् पदस्य वाक्यस्य विभक्ते र्वचनस्य च।
समुच्चयस्य संवृत्त्याः षोढा न्यासेन जायते ॥ ४१ ॥

तासु पदमुद्रा यथा,—

निर्माल्यं नयनश्रियः कुवलयं वक्त्रस्य दासः शशी
भ्रूयुग्मस्य सनाभि मन्मथधनुर्ज्योत्स्ना स्मितस्याञ्चलः।
संगीतस्य च मत्तकोकिलरुतान्युच्छिष्टमेणीदृशः
सर्व्वाङ्गीणमहो विधेः परिणतं विज्ञानचित्रं चिरात् ॥

अत्र निर्म्माल्यं दासः सनाभ्यञ्चल उच्छिष्टमितिपदानां गौणवृत्तिव्यपाश्रयेण मुत्प्रदायिनां साभिप्रायनिवेशादियं पदमुद्रा।

वाक्यमुद्रा यथा,—

यत् स्वर्ळे सलिलात्मनि प्रतिफलद्देवे त्रियामापतौ
पीयूषाकृति पर्य्यवस्यति किल ज्योत्स्नेति तत्वान्तरम्।
तिग्मं धाम चिरं चकास्ति दिवि यत् तत्रास्ति दिव्यः पुमान्
यं विज्ञातवतां त्रुटन्ति निखिला भूयो भवग्रन्थयः ॥

अत्र तत्रास्ति दिव्यः पुमानित्यादे र्वाक्यान्तरस्य पूर्व्ववाक्योपकारित्वेन मुत्प्रदायकस्याभिप्रायपूर्व्वनिवेशादियं वाक्यमुद्रा ॥

विभक्तिमुद्रा यथा,—

श्रियः प्रदुग्धे विपदो रुणद्धि यशांसि सूते मलिनं प्रमार्ष्टि।
संस्कारशौचेन परं पुनीते शुद्धा हि बुद्धिः किल कामधेनुः ॥

अत्र प्रबुध्यै रुणद्धि स्तुते प्रमार्ष्टि पुनीते इति तिङ्विभक्तीनां दुहि-पच्योः सकर्मकयोरुपसंख्यानं रुधादिभ्यः श्नमित्यादिभि विशेषलक्षण-योगैः परस्मैपदात्मनेपदपर्यायेण निवेशो दृश्यते। श्रियो विपदो यशांसि मलिनं संस्कारशौचेनेति च सुब्विभक्तीनाम् अचि श्नुधातुभ्रुवां य्वोरियङुवङावित्यादिविशेषलक्षणवतीनामविकृतविकृतानां मङ्गलामङ्ग-लार्थपरत्वेन मङ्गलाद्यर्थानामभिप्रायतः प्रयोगो लक्ष्यते तेनेयं विभक्ति-मुद्रा भवति ॥

वचनमुद्रा यथा,—

विश्वम्भरा भगवती भवतीमसूत
राजा प्रजापतिसमो जनकः पिता ते।
तेषां वधूस्त्वमसि नन्दिनि पार्थिवानाम्
येषां कुलेषु सविता च गुरु र्वयञ्च ॥

अत्र वयमित्यात्मनि बहुवचनेन सविता चेति सवितर्य्येकवचनेन स-वितुरप्यहं बहुमत इत्यभिप्रायो वक्तुरितीयं वचनमुद्रा ॥

समुच्चयमुद्रा यथा,—

जातश्चायं मुखेन्दुस्ते भ्रुकुटिप्रणयी पुरः ।
गतश्च वसुदेवस्य कुलं नामावशेषताम् ॥

अत्राशंसायां भूतवच्चेति भूतवद्भावस्य ह्ययोर्यप्रभावातिशयशंसिनः समुच्चयद्वारेण निवेशादियं समुच्चयमुद्रा ॥

संवृत्तिमुद्रा यथा,—

मणिरत्नं प्रसेनस्य तच्चानार्य्येण विष्णुना ।
लब्धं येनाद्ययोगेन तेन किं कीर्त्तितेन वः ॥

अत्र "कयापि खलु पापानामलमश्रेयसे यतः" ततः किं तेन वः कीर्त्तिते-नेति साभिप्रायसंवृत्तिकरणादियं संवृत्तिमुद्रा ॥

विधिद्वारेण वा यत्र निषेधेनाथ वा पुनः।

प्रतीयते विशिष्टोऽर्थः सोक्तिस्त्वाभिधीयते ॥ ४२ ॥

विधेरथ निषेधात् स्यादधिकाराद्विकल्पतः।

नियमात् परिसङ्ख्याया उपाधेः सेह षड्विधा ॥ ४३ ॥

तासु विध्युक्ति र्यथा,—

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने

अत्वाप्राप्तौ प्रापणवचनं विधिः ॥

निषेधोक्ति र्यथा,—

भर्त्तु र्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः ॥

अत्र प्राप्तौ निवारणं निषेधः ॥

अधिकारोक्ति र्यथा,—

भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी

यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥

अत्र विधिनिषेधज्ञानाद्विधिनिषेधयोग्यताधिकारः ॥

विकल्पोक्ति र्यथा,—

एको नेता क्षत्रियो वा द्विजो वा एका विद्याध्यात्मिकी वा त्रयी वा।

एका भार्य्या वंशजा वा प्रिया वा एकं मित्रं भूपति र्वा यति र्वा ॥

सोऽयं जातिक्रियागुणद्रव्यावलम्बी चतुर्विधो विकल्पः ॥

नियमोक्ति र्यथा,—

विवादो ऽपार्थ एवायं पार्थ एव धनुर्धरः।

यो न केवलमात्मीयैः परैरप्यभिनन्द्यते ॥

सोऽयमयोगान्ययोगात्यन्तायोगव्यवच्छेदलक्षणस्त्रिप्रकारो नियमः ॥

परिसङ्ख्योक्ति र्यथा,—

पञ्च पञ्चनखा भक्ष्या ॥ वामेनाक्ष्णा न पश्यति ॥

काठिन्यमस्याः कुचयोः ॥ किमसद् यन्न रोचते ॥

तदिदं विधिनिषेधाभ्यां शेषाभ्यनुज्ञानं परिसङ्ख्येत्युच्यते ॥

अयुज्यमानस्य मिथः शब्दस्यार्थस्य वा पुनः।

योजना क्रियते यासौ युक्तिरित्युच्यते बुधैः ॥ ४४ ॥
पदस्यैव पदार्थस्य वाक्यं वाक्यार्थ एव च ।
विषयोऽस्याः प्रकरणं प्रबन्धश्चाभिधीयते ॥ ४५ ॥

तत्र, योगरूढिपर्यायाङ्गाङ्गिभावपरम्पराः ।
पदयुक्ते निमित्तं स्युर्निरूढाः पदसिद्धये ॥ ४६ ॥
विरुद्धानां पदार्थानां जात्यादीनां परस्परम् ।
योजना येह तां युक्तिं पदार्थविषयां विदुः ॥ ४७ ॥
गर्भः सह निगर्भेण संहतिः ससमुच्चया ।
हेतवो वाक्ययुक्तीनां कियन्तामेवमादयः ॥ ४८ ॥
यत्तदादेरुपादानं क्रियाभ्याससमुच्चयौ ।
क्रियासमभिहारश्च वाक्यार्थान् युञ्जते मिथः ॥ ४९ ॥
पदस्याद्वैयशैलादिवर्णनाभ्युपपत्तये ।
वाक्यं येह प्रकरणविषया युक्तिरिष्यते ॥ ५० ॥
प्रबन्धविषयाप्येवं युक्तिरुक्ता मनीषिभिः ।
उदाहरणमालासां रूपव्यक्त्यै निदर्श्यते ॥ ५१ ॥

अत्र योगरूढिपरम्परादिनिमित्ता पदयुक्तिर्यथा,—
प्राच्यां निर्जितजम्भजिद्द्विपशिरःसिन्दूरशोभं दिशि
प्रत्याख्यातदयाङ्गनास्यज्ञतभुग्जेयातिः प्रतीच्यर्णवे ।
प्रातर्जातमदोन्मिषत्कमलिनीकिञ्जल्ककल्कोद्भटम्
भानोः पूर्णनभःकटाहकुहरक्रोडं महः पातु वः ॥

अत्र जम्भजिद्द्विप इति योगरूढिपरम्परा, दयाङ्गनास्यज्ञतभुगिति पर्यायपरम्परा, प्रातर्जातमदोन्मिषत्कमलिनीकिञ्जल्ककल्कोद्भटमिति हेतुपरम्परा, नभःकटाहकुहरक्रोडमित्यङ्गाङ्गिभावपरम्परा च परिस्फुरन्ती दृश्यते ॥

विरुद्धजात्यादियोगनिमित्ता पदार्थयुक्तिर्यथा,—
तन्वागेऽङ्करोरुदोः करिशिरःपीनस्तनांसं वपुः . . .

स्त्रीपुंसाकृति यत् पितुस्तव मुखे रम्योग्रमीचामहे।
वाराह्या इति नर्मणीभवदनः पश्यन् यदास्या मुखम्
नाभिष्टौति हसन्न निन्दति तदा श्लिष्टोऽम्बया पातु वः॥

अत्र स्त्रीपुंसाकृति विरुद्धजातियोजना, नाभिष्टौति न निन्दतीति विरुद्धक्रियायोजना, रम्योग्रमिति विरुद्धगुणयोजना, मुखे वपुरीचामह इति विरुद्धद्रव्ययोजना च लक्ष्यते॥

वाक्यगर्भादिविषया वाक्ययुक्तिर्यथा,—

दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सा च वदन्त एव हि वयं रोमाञ्चिताः पश्यत।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत् कथाद्भुतमिदं यत्रैव चास्तं गतम्॥

अत्र वदन्त एव हि वयं रोमाञ्चिताः पश्यतेति वाक्यगर्भः। तत्रैव पश्यतेति वाक्यान्तरे भावाविष्कारवाचा निगर्भः, किमपरं रामाय तस्मै नम इति वाक्यसंहृतिः, यस्मादाविरभूत् कथाद्भुतमिदं यत्रैव चास्तं गतमिति वाक्यसमुच्चयः। सेयमेतेषां योजनाद्वाक्यविषया युक्ति-र्भवति॥

यत्तदोरुपादाननिमित्ता वाक्यार्थयुक्ति र्यथा,—

तिष्ठ द्वारि भवाङ्गने व्रज बहिः स प्रेति वर्त्म चते
शालामञ्च तमङ्गमञ्च वलभीमञ्चेति वेश्मास्वति।
दूतीं संदिश संदिशेति बहुशः संदिश्य सास्ते तथा
तल्पे कल्पमयीव निष्टु[illegible] यथा नान्तं निशा गच्छति॥

अत्र प्रथमपादे क्रियासमुच्चयः द्वितीये क्रियाभ्यासस्तृतीये दूतीं संदिशेति यावत्क्रियासमभिहारः। शेषे तु तथा सास्ते यथा निशान्तं न गच्छति इति यत्तदोरुपादानं वाक्यार्थयुक्ते र्हेतुः प्रतीयते। सेयमुक्तलक्षणा वाक्यार्थयुक्ति र्भवति॥

अश्रद्धेयमव्यक्तादिवर्णनोपपत्तिहेतुः प्रकरणविषया यथा,—

मुदे मुरारेरमरैः सुमेरोरानीय यस्योपचितस्य शृङ्गैः ।
भवन्ति नोद्दामगिरां कवीनामुच्छ्रायसौन्दर्यगुणा मृषोद्याः ॥

प्रबन्धव्यापिवस्तूपपत्ते हेतुस्तु प्रबन्धविषया युक्ति र्भवति यथा,—

धूमज्योतिःसलिलमरुतां सन्निपातः क मेघः
सन्देशार्थाः क पटुकरणैः प्राणिभिः प्रापणीयाः ।
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे
कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ॥

उक्तिप्रकारो भणितिः सम्भवेऽसम्भवे च सा ।
विधौ पर्य्युदसनाश्चर्यप्रकल्पनासु च कल्प्यते ॥ ५२ ॥

तत्र सम्भवभणिति र्यथा,—

सद्योद्रावितकेतकोदरदलस्रोतःश्रियं बिभ्रती
येयं मौक्तिकदामगुम्फनविधे र्योग्यच्छविः प्रागभूत् ।
उत्सेच्या कलशीभिरञ्जलिपुटैः पेया मृणालाङ्कुरै
र्पातव्या च शशिन्यमुग्धविभवे सा वर्त्तते चन्द्रिका ॥

अत्र ज्योत्स्नायाः सद्योद्रावितकेतकोदरदलस्रोतःसादृश्यादिसम्भवा-
दियं सम्भवभणिति र्विधिरूपा ॥

असम्भवभणिति र्यथा,—

क्व पेयं ज्योत्स्नाम्भो वदत विपवल्लीसरणिभि
र्मृणालीतन्तुभ्यः सिचयरचना कुत्र भवति ।
क्व वा पारीमेयो वत वकुलदाम्नां परिमलः
कथं स्वप्नः साक्षात् कुवलयदृशं कल्पयतु ताम् ॥

अत्र ज्योत्स्नादीनां मृणालादिभिः पेयत्वादेरसम्भवादियमसम्भव-
भणितिः ॥

निषेधरूपा विशेषभणिति र्यथा,—

रैवतीदशनोच्छिष्टपरिपूतपुटे दृशौ ।

वहन् हली मदक्षीवः पानगोष्ठ्यां पुनातु वः ॥

अत्र रेवतीदशनोच्छिष्टयोरपि हलिदृशो र्यत् पूतत्वं मदक्षीवस्यापि हलिनो यत् पावनत्वमसौ विशेष इतीयं विशेषभणिति र्निषेधे विधिरूपा ॥

संवृतिभणिति र्यथा,—

आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः ।
उपमानस्यापि सखे प्रत्युपमानं वपुस्तस्याः ॥

अत्र प्रसिद्धवर्णनाप्रपञ्चविधेराभरणस्याभरणं इत्यादिवाक्यैः संवरणादियं संवृतिभणिति विधौ निषेधरूपा ॥

आश्चर्यभणिति र्यथा,—

ज्योतिर्भ्यस्तदिदं तमः समुदितं जातोऽयमदभ्रः शिखी
पीयूषादिदमुत्थितं विषमयं छायाभुजन्मातपः ।
को नामास्य विधिः प्रशान्तिषु भवेद्, वाढं दृढीयानयम्
ग्रन्थि र्यत् प्रियतोऽपि विप्रियमिदं सख्यः क्षतं सान्त्वनैः ॥

अत्र ज्योतिःप्रभृतिभ्यस्तमःप्रभृतीनामुत्पत्तेराश्चर्यरूपत्वादियमाश्चर्यभणिति र्निषेधविधौ विधिनिषेधरूपा ॥

कल्पनाभणिति र्यथा,—

दृश्यं दृशां सहस्रै र्मनसामयुतैर्विभावनीयं च ।
सुकृतशतकोटिभोग्यं किमपि वयः सुभ्रु वः स्वदते ॥

अत्र वयोरामणीयकातिशयस्य दृक्सहस्रादिभिरेवावलोकनीयत्वादियोग्यताकल्पनादियं कल्पनाभणिति र्विधिनिषेधे निषेधविधिरूपा ॥

वाक्ये शब्दार्थयोः सम्यग्रचना गुम्फना स्मृता ।
शब्दार्थक्रमपर्यायपदवाक्यकृता च सा ॥ ५३ ॥

तासु शब्दकृता यथा,—

रामाभिषेके मदविह्वलाया: कराच्च्युतो हेमघटस्तरुण्याः ।

सोपानमासाद्य चकार शब्दं ठं ठं ठ ठं ठं ठ ठ ठं ठ ठं टः ॥

सेयं ठंठमित्यादेर्निरर्थकस्य श्लोकपादस्यार्थानुगुणेन वाक्येन रचितत्वाच्छब्दरचना ॥

अर्थकृता यथा,—

दिक्कालात्मसमैव यस्य विभुता, यस्तत्र विद्योतते,
यत्राहुत्य सुधीभवन्ति किरणा, राशेः स यासामभूत् ।
यस्तत्पित्तम्, उपःसु योऽस्य हविषे, यस्तस्य जीवातवे,
वोढा यद्गुणमेष मन्मथरिपोस्ताः पान्तु वो मूर्त्तयः ॥

सेयं व्योमादीनामष्टानामपि महेशमूर्त्तिलक्षणानामर्थानामुत्तरोत्तरसङ्कलनया रचितत्वादर्थरचना ॥

क्रमकृता यथा,—

नीलाब्जानां नयनयुगलद्राघिम्ना दत्तपत्रः
कुम्भाविभौ कुचपरिकरः पूर्वपक्षीचकार ।
भ्रूविभ्रान्तिर्मदनधनुषो विभ्रमाननुवादीद्
वक्त्रज्योत्स्ना शशधररुचं दूषयामास यस्याः ॥

अत्र पत्रप्रदानपूर्वपक्षोपन्यासानुवाददूषणोद्भावनानां बुधजनप्रसिद्धक्रमेण रचितत्वादियं क्रमरचना ॥

पर्य्यायकृता यथा,—

कण्डुज्जिञ्चिअ जाणइ कुन्तपलत्ताइ कीरसंलविरी ।
पूसअभासं सुअ सणङ्क रे हं पिठवा घाडी ॥

सेयं शुकनामपर्य्यायाणामर्थानुगुणरचितत्वात् पर्य्यायरचना ।

पदकृता यथा,—

लोलल्लाङ्गूलवल्लीवलयितबकुलानोकहस्कन्धलोलै-
र्गोलाङ्गूलैर्नदद्भिः प्रतिरसितजरत्कन्दरामन्दिरेषु ।
षण्डेषूद्दण्डपिण्डीतगरतरलनाः प्रापिरे येन वेला-
मालम्ब्योत्तालतालस्फुटितपुटकिनीबन्धवो गन्धवाहाः ॥

अत्र लाङ्गूलवलयितवकुलैर्नदद्भिर्गोलाङ्गूलैः प्रतिरसितजरत्कन्दरा-मन्दिरेषु पण्डेषु उद्दण्डपिण्डीतगरतरलनाः पुटकिनीवन्धवो गन्धवाहा वेलामालम्ब्य येन प्रापिरे इत्यतोऽधिकानामपुष्टार्थानामपि पदाना-मनुप्रासाय छन्दःपूरणाय चार्थानुगुण्येन रचितत्वादियं पदरचना ॥

वाक्यरूता यथा,—

पतिश्वश्रुरता ज्येष्ठे पतिदेवरतानुजे ।

इतरेषु तु पाञ्चालं त्रास्त्रिसय विसय त्रिषु ॥

इह महतोऽर्थस्याल्पीयसा ग्रन्थेनाभिधानमिति सूत्रक्रमेणापि ग्रन्थ-लाघवाय वाक्यार्थो रचित इतीयं वाक्यरचना ॥

अथैतत्याङ्गः पदार्थानां घटनायां परस्परम् ।

सा प्रक्रान्तेन कस्मिंश्चिदपक्रान्तेन कुत्रचित् ॥ ५४ ॥

अतिक्रान्तेन कुत्रापि पदार्थवर्णयोः क्वचित् ।

वाक्यार्थवाक्ययोः क्वापि प्रकीर्णानाञ्च दृश्यते ॥ ५५ ॥

तासु प्रक्रान्तघटना यथा,—

स तथेति प्रतिज्ञाय विसृज्य कथमप्सरसम् ।

ऋषीन् ज्योतिर्मयान् सप्त सस्मार स्मरशासनः ॥

सेयं सप्तर्षीणामागमनस्य प्रक्रान्तस्यैव घटनात् प्रक्रान्तघटना ॥

अपक्रान्तघटना यथा,—

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।

निषादस्य च संवादमृषेः संवरणस्य च ॥

सेयमपक्रान्तस्य निषादसंवरणसंवादस्य घटनादपक्रान्तघटना ॥

अतिक्रान्तघटना यथा,—

तस्य चक्रुश्चमत्कारं व्यतीतसमया अपि ।

स्मिताद्र्र मुकुलोद्भेदाः कदम्बवनराजयः ॥

इयमतिक्रान्तस्यापि कदम्बवनराजीनामार्द्र मुकुलोद्भेदस्य विरचि-

मनश्चमत्कारकारिणो रामस्य स्मृतिद्वारेण घटनादतिक्रान्तघटना ॥

पदघटना यथा,—

छिन्नेनापतता वक्त्रौ यस्मुखेन रुठास् स्रुते ।
स्वेति हेति हरेणोक्तं स्वाहासीत् स एष रावणः ॥

इयं स्वेति हेति वर्णाभ्यां स्वाहेति पदस्य घटितत्वात् पदघटना ॥

वाक्यघटना यथा,—

हंस प्रयच्छ मे कान्तां गतिरस्यास्त्वया हृता ।
विभावितैकदेशेन देयं यदभियुज्यते ॥

इयं पूर्व्वशास्त्रनिबद्धसूत्रोत्तरार्द्धस्य तदर्थाननुयायिनापि प्रस्तुतार्थाविरुद्धेन पूर्व्वार्द्धेनैकवाक्यतयैव घटितत्वाद्वाक्यघटना ॥

प्रकीर्णघटना यथा,—

एक्कहिं अच्छिहि सावणु अन्नहि भद्दवउ ।
माहउ महिअलसत्थरि गण्डत्थले सरउ ॥
अङ्गहि गिम्ह सुहच्छिइ तिलवणे मग्गसिउ ।
मुद्धिहि मुहपङ्कअसरि आवासिउ सिसिरु ॥

अत्र आवणादीनामयुगपद्भाविल्वेन विप्रकीर्णानां घटनादियं प्रकीर्णघटना ॥ प्रकीर्णशब्दश्चायं शेषवाची तेनान्यासामपि प्रकीर्णघटनानामिहावकाशो भवति । तेन या इमा महाकविप्रबन्धेषु मुख्या गौणी लक्षणा तद्भावापत्तिरुपचरिता लक्षितलक्षणेतिशब्दवृत्तयस्ता अपीह श्रूयन्ते । तत्रादितः षट्स्वाधारवचनेषु मुग्धाया इति सम्बन्धिपदे च मुख्या,शेषयो र्द्वयोराधारवचनयो र्गौणी, आवणादिषु चतुर्षु मासवचनेषु लक्षणा, षट्स्वपि चाधेयवचनेषु वर्षादिषु लक्षिताभिहितेष्वपि युगपदसम्भवत्सु श्रुतार्थापत्तिलभ्या तद्भावापत्तिः, आवासित इति क्रियापदं चोपचरिता व्यक्तमेव प्रतीयते। लक्षितलक्षणापि चैतास्वेव व्याख्यानत उन्मिषति। तथाह्यावासितशब्दोऽयमभिमतप्रदेशनिवेशितमहापरिच्छदे महाराजादौ निरूढ़ाभिधानशक्तिः । स चोपचारेण आवणादिषु

प्रयुज्यमानं तेषामपि महत्तमभिलच्य महापरिच्छदतां महारम्भत्वञ्च लक्षयन् प्रस्तुताया अपि प्रवृत्तेर्महान्तमनुबन्धं लक्षयति। ते च युगपदालोचनाद्यावनुपपद्यमानस्थितयः स्वशब्दशक्तिभिस्तत्र तत्र निवेश्यमानाः स्वधर्मसम्पदः प्रत्यासन्नायायां तद्धर्मसम्पदमुपलक्षयन्ति । असावसौ विरहवत्या अपि वियोगवेदनातिशयं लक्षयन्ती कमितरि स्नेहातिशयं लक्षयति । तत्र श्रावणो भाद्रपद इत्युभाभ्यामवयवाभ्यां वर्षर्तुर्लक्ष्यते। स च लोचनयोरनुपपद्यमानस्थितिरपि विभक्तिश्रुत्या निवेशितः पयःप्रपतत्प्रवाहलक्षणायाः स्वधर्मसम्पदः प्रत्यासन्नामविच्छिन्नाश्रुप्रवाहसम्पदमुपलक्षयन् समागमोत्कायाः उत्कण्ठातिशयं लक्षयति। माधव इत्युत्तरावयवेन वसन्तो लक्ष्यते । सोऽपि महीतलस्रस्तरेऽनुपपद्यमानस्थितिः प्राग्वदेव शब्दशक्त्या निवेशितः कुसुमकिसलयमृणालकमलिनीदलादिकायाः स्वधर्मसम्पदः समासन्नां शिशिरोपकरणसामग्रीमुपलक्षयन् कामवत्याः शरीरान्तःसन्तापं लक्षयति। शरदित्यनेन ऋतुविशेषोऽभिधीयते सा गण्डयोरनुपपद्यमानस्थितिः प्रशंसावचनस्यापि स्थलशब्दस्यानुस्मरणशक्त्या समाक्षिप्यमाणः काशकुसुमहंसागमकुमुदसरःप्रसादचन्द्रातपादिकायाः स्वधर्मसम्पदः समासन्नां गण्डयोः पाण्डुतां लक्षयन् मृगेक्षणाया विरहक्षामतामुपलक्षयति। ग्रीष्म इत्यनेनापि ऋतुविशेष एव उच्यते। सोऽप्यङ्गनाङ्गेऽनुपपद्यमानः सूर्यांशुकार्कश्यप्रतप्तपांशुतापरूपोष्णानिलत्वदावाग्निकालुष्यादेः स्वधर्मसम्पदः समानानीकभूताभूतपूर्व्वानङ्गज्वरलिङ्गसम्पदमुपयन्नष्टमीं कामावस्थां लक्षयति । मार्गशीर्ष इत्यनेन तु पूर्व्वावयवेन हेमन्तो लक्ष्यते । तेन च यथा हेमन्ते तिलवनं लूयते तथा तस्याः सुखासिका साम्प्रतं लूयते इति लक्ष्यते। तेनातिशयिनी मनःपीड़ोपलक्षिता भवति । का पुनः सुखासिकातिलवनयोः समानधर्म्मता । येयं स्नेहनिर्भरता नाम । अभिसारिकाणां च प्रायेण तिलवनाब्जिनीषण्डयोरेव वर्त्तमानप्रसिद्धिः । यदित्थमाहुः ।

अत्तान्तहरमणिज्जं अम्हं गामस्स मण्डणीहूअं ।

मनश्चमत्कारकारिणो रामस्य स्तुतिद्वारेण घटनादतिक्रान्तघटना ॥

पदघटना यथा,—

छिन्नेनापतता वह्नौ यन्मुखेन हठात् कृते ।
स्वेति हेति हरेणोक्तं स्वाहासीत् सैव रावणः ॥

इयं स्वेति हेति वर्णाभ्यां स्वाहेति पदमत्र घटितत्वात् पदघटना ॥

वाक्यघटना यथा,—

हंस प्रयच्छ मे कान्तां गतिरस्यास्त्वया हृता ।
विभावितैकदेशेन देयं यदभियुज्यते ॥

इयं पूर्वशास्त्रनिबद्धस्योत्तरार्द्धमत्र तदर्थाननुयायिनापि प्रस्तुतार्थाविरुद्धेन पूर्वार्द्धेनैकवाक्यतयैव घटितत्वाद्वाक्यघटना ॥

प्रकीर्णघटना यथा,—

एक्कहिं अक्खिहिं सावणु अन्नहिं भद्दवउ ।
माहउ महिअलसत्थरि गण्डत्थले सरउ ॥
अङ्गहिं गिम्ह सुहच्छिइ तिलवणे मग्गसिउ ।
मुद्धिहि मुहपङ्कअसरि आवासिउ सिसिरु ॥

अत्र श्रावणादीनामयुगपद्भावित्वेन विप्रकीर्णानां घटनादियं प्रकीर्णघटना ॥ प्रकीर्णशब्दश्चायं श्लेषवाची तेनान्यासामपि प्रकीर्णघटनानामिहावकाशो भवति। तेन या इमा महाकविप्रबन्धेषु मुख्या गौणी लक्षणा तद्भावापत्तिरुपचरिता लक्षितलक्षणेतिशब्दवृत्तयस्ता अपीह श्रूयन्ते। तत्रादितः पदस्याधारवचनेषु मुग्धाया इति सम्बन्धिपदे च मुख्या, शेषयो र्द्वयोराधारवचनयो र्गौणी, श्रावणादिषु चतुर्षु मासवचनेषु लक्षणा, पदस्वपि चाधेयवचनेषु वर्षादिषु लक्षिताभिहितेष्वपि युगपदसम्भवत्सु श्रुतार्थापत्तिलभ्या तद्भावापत्तिः, आवासित इति क्रियापदं चोपचरिता व्यक्तमेव प्रतीयते। लक्षितलक्षणापि चैतास्वेव व्याख्यानत उन्नियते। तथाह्यावासितशब्दोऽयमभिमतप्रदेशनिवेशितमहापरिच्छदे महाराजादौ निरूढाभिधानशक्तिः। स चोपचारेण श्रावणादिषु

प्रयुज्यमान तेषामपि महत्त्वमभिलक्ष्य महापरिच्छदतां महारम्भत्वञ्च लक्षयन् प्रस्तुताया अपि प्रवृत्तेर्महान्तमनुबन्धं लक्षयति। ते च युगपत्प्रोच-नादावनुपपद्यमानस्थितयः स्वशब्दशक्तिभिस्तत्र तत्र निवेश्यमानाः स्वधर्म-सम्पदः प्रत्यासन्नायां तद्धर्मसम्पदमुपलक्षयन्ति। असावसौ विरहवत्या अपि वियोगवेदनातिशयं लक्षयन्ती कमितरि स्नेहातिशयं लक्षयति। तत्र श्रावणो भाद्रपद इत्युत्तमाभ्यामवयवाभ्यां वर्षर्त्तु र्लक्ष्यते। स च लोचनयो-रनुपपद्यमानस्थितिरपि विभक्तिश्रुत्या निवेशितः पयःप्रपतमवाहलक्ष-णायाः स्वधर्मसम्पदः प्रत्यासन्नामविच्छिन्नाश्रुप्रवाहसम्पदमुपलक्षयन् समागमोत्काया उत्कण्ठातिशयं लक्षयति। माधव इत्युत्तरावयवेन वसन्तो लक्ष्यते। सोऽपि महीतलस्रस्तरेऽनुपपद्यमानस्थितिः प्राग्वदेव शब्दशक्त्या निवेशितः कुसुमकिसलयमृणालकमलिनीदलादिकायाः स्वधर्मसम्पदः समासन्नां शिशिरोपकरणसामग्रीमुपलक्षयन् कामवत्याः शरीरान्तःसन्तापं लक्षयति। शरदित्यनेन ऋतुविशेषोऽभिधीयते सा गण्डयो-रनुपपद्यमानस्थितिः प्रशंसावचनस्यापि स्थलशब्दस्यानुसरणशक्त्या समाकृष्यमाणा काशकुसुमहंसागमकुमुदसरःप्रसादचन्द्रातपादिकायाः स्वधर्मसम्पदः समासन्नां गण्डयोः पाण्डुतां लक्षयन् मृगेक्षणाया विरह-क्षामतामुपलक्षयति। ग्रीष्म इत्यनेनापि ऋतुविशेष एव उच्यते। सोऽप्य-ङ्गनाङ्गेऽनुपपद्यमानः सूर्यरांशुकार्कश्यप्रतप्तपांशुतापरुषोष्णानिलत्वदा-वाग्निकालुष्यादेः स्वधर्मसम्पदः समानानीकभूताभूतपूर्व्वानङ्गज्वरलिङ्ग-सम्पदमुपयन्नष्टमीं कामावस्थां लक्षयति। मार्गशीर्ष इत्यनेन तु पूर्व्वावयवेन हेमन्तो लक्ष्यते। तेन च यथा हेमन्ते तिलवनं लूयते तथा तस्याः सुखासिका साम्प्रतं लूयते इति लक्ष्यते। तेनातिशयिनी मनःपीडोपलक्षिता भवति। का पुनः सुखासिकातिलवनयोः समानधर्मता। येयं स्नेहनिर्भरता नाम। अभिसारिकाणां च प्रायेण तिलवनाजिनीपण्डयोरेव बहुमानप्रसिद्धिः। यदित्थमाहुः।

अत्तान्तहरमणिज्जं अम्हं गामस्स मण्डणीहुअं।

लुअ तिलवाड़िसरिच्छं सिसिरेण कश्रगिसिणिसग्डं ॥

अत्र एवायमुत्तरवाक्ये कमलसरःशब्देनाब्जिनीखण्डमपि निर्दिशति ॥

तद् यथा,—

मुद्धिहि मुहपङ्कअसरि आवासिउ सिसिरु ॥

तत्र शिशिर इत्यनेन ऋतुविशेषेण मुग्धामुखेऽपि पद्मसरसीव शब्दशक्त्या-भिनिवेशितेन कमलवनोपप्लवादेः स्वधर्मसम्पदो लोकप्रतीतायाः प्रत्या-सन्ना मुग्धामुखाम्बुरुहलोचनोत्पलस्मितकुसुमदशनकेशरादेश्छायापरि-म्लानि र्लक्ष्यमाणा विप्रलम्भानुभावप्रकर्षमुपलक्षयति । शिशिरलक्ष्मीवर्णन-प्रस्तावाच्च मुखमङ्गं शरीरस्य सर्व्वं वा मुखमुच्यत इति स्थानप्राधा-न्यलक्षणया सर्व्वत्तुभरः शिशिर एवेह प्रधानमित्यपि लक्षितं भवति ॥

काकुस्वरपदच्छेदभेदाभिनयकान्तिभिः ।
पाठो योऽर्थविशेषाय पठितिः सेह षड्विधा ॥ ५६ ॥

तत्र काक्वा यथा,—

यदि मे वल्लभा दूती तदाहमपि वल्लभा ।
यदि तस्या' प्रिया वाचस्तन्ममापि प्रियप्रियाः ॥

अत्रैकया काक्वा विधिरन्यया तु निषेधः प्रतीयते ॥

स्वरेण यथा,—

मुञ्च त्वं कुपितेत्यपास्तमशनं त्यक्ता कथा योषिताम्
दूरादेव मयोज्झिताः सुरभयः स्रग्गन्धधूपादयः ।
रागं रागिणि मुञ्च मय्यवनते दृष्टे प्रसीदाधुना
सत्यं त्वद्विरहाद् भवन्ति दयिते सर्व्वा ममान्धा दिशः ॥

अत्र दृष्टे इत्यत्र प्लुतस्वरकरणात् कुपितकान्ताप्रसादनपरमपीदं वाक्य सुतकुपितदृष्टिप्रसादनपरतां प्रतिपद्यते ॥

पदच्छेदेन यथा,—

सर्व्वक्षितिभृतां नाथ दृष्टा सर्व्वाङ्गसुन्दरी ।

रामा रम्ये वनान्तेऽस्मिन् मया विरहिता त्वया॥

अत्र मया विरहितेतेत्रतावति पदच्छेदे पुरूरवसस्त्वयेतेत्रतावति तु पर्य्यन्तसत्र वाक्यभेदो भवति॥

पदभेदेन यथा,—

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यो गङ्गां विदधेऽन्धकक्षयकरो यो वर्हिपत्रप्रियः।
यस्त्राह्रः शशिमच्छिरोहर इति स्तुत्यश्च नामामराः।
सोऽव्यादिष्टभुजङ्गहारवलयस्त्वां सर्व्व दोमाधवः॥

अत्र येन ध्वस्तमनोभयेनेत्यादे र्येन ध्वस्तमनोऽभवेनेत्यादेश्च पदभेदादुमाधवो माधव इत्यर्थद्वयं प्रतीयते। तयोश्च द्वयोरपि प्राधान्येनोपादानादङ्गाङ्गिभावेन प्रकृताप्रकृतरूपतया चानवस्थानात् परस्परमसम्बन्धेनायं श्लेषः॥ पदभेदेन तु पाठे पर्यायतोऽर्थद्वयप्रतीतेरियं श्लेषोपसर्जनात् पदभेदपठितिः॥

अभिनयेन यथा,—

एद्दहमेत्तत्थणिआ एद्दहमेत्तेहिं अच्छिवत्तेहिं।
एद्दहमेत्तावत्था एद्दहमेत्तेहिं दिअहेहिं॥

अत्र यस्मात्स्तनीत्यादीनां तथाभूतहस्ताभिनयैः सह पठनात् तथाविधार्थविशेषो गम्यते॥

अपदेशोऽप्यभिनयविशेष एव यथा,—

इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्।

*इत्यत्रांसानमपदिश्य मूले॥*

कान्त्या यथा,—

यस्त्रारिजातं नृपतेरपभ्रदवलम्बनम्।
ययौ निर्भरशस्त्रौघै रपभ्रदवलं वनम्॥

अत्रावलम्बनमवलं वनमिति पदे पदद्वये वा द्वितीयचतुर्थस्थानयो र्यौ वकारौ तयोरन्तःस्थपवर्गाभ्यां पवर्गान्तःस्थाभ्यां वा कान्तिमति पाठेऽर्थ-

भेदो जायते ॥

अपरे पुनः पठितिमन्यथा कथयन्ति ॥

पदपादार्द्धभाषाणामन्यथाकरणेन यः।
पाठः पूर्व्वोक्तसूक्तस्य पठितिं तां प्रचक्षते ॥ ५७ ॥

तत्र पदान्यथाकरणं द्विधा प्रकृतितो विभक्तितश्च ॥

तत्र प्रकृतितो यथा,—

असकलहसितत्वात् क्षालितानीव कान्त्या
मुकुलितनयनत्वाद्व्यक्तकर्णोत्पलानि।
पिबतु मधुसुगन्धीन्याननानि प्रियाणाम्
त्वयि विनिहितभारः कुन्तलानामधीशः ॥

अत्र त्वयीत्यस्य स्थाने यदा मयीति पठ्यते तदैतत्प्रार्थनावाक्यमपि अनुमतिवाक्यं भवति ॥

विभक्तितो यथा,—

सह भृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम्।
स्वबलेन निहन्ति संयुगे न चिरात् पाण्डुसुतः सुयोधनम् ॥

अत्र यदा पाण्डुसुतः सुयोधनमित्यस्य स्थाने पाण्डुसुतं सुयोधनं इति पठ्यते तदैतदमङ्गलार्थमपि सुयोधने मङ्गलार्थं भवति ॥

पादान्यथाकरणेन यथा,—

एकान्ते विजने रात्रावन्तर्वेश्मनि साध्वसे।
न्यासापह्नवने चैव दिव्या सम्भवति क्रिया ॥

अत्र यदा तृतीयपादस्थाने तनुङ्गी यदि लभ्येतेति पाठो भवति तदैतत् परीक्षोपयिकमपि कामौपयिकं भवति ॥

अर्द्धान्यथाकरणेन यथा,—

तत्तावदेव शशिनः स्फुरितं गरीयो
यावन्न तिग्मरुचिमण्डलमभ्युदेति।

अभ्युद्यते सकलधामनिधौ तु तस्मिन्
इन्दोः सिताब्जकलशस्य च को विशेषः ॥

अत्र यदा मध्यमपादयोः स्थाने "यावन्न ताः किमपि गौरतरा हसन्ति ताभिः पुनर्विहसिताननपङ्कजाभिः" इति पठ्यते तदैतद्वीरार्योक्तिरूपमपि शृङ्गारोक्तिरूपं संपद्यते ॥

पादत्रयान्यथाकरणेन यथा,—

त्यागेन युक्ता दिवमुत्पतन्ति तत्त्यागेन हीना नरकं व्रजन्ति।
न त्यागिनां दुष्करमस्ति किञ्चित् त्यागो हि सर्व्वव्यसनानि हन्ति ॥

अत्र यदा तुरीयपादमेवादाय पादत्रयान्यथाकरणेन वक्ष्यमाणः पाठो भवति तदैतत्त्यागप्रशंसार्थमपि त्यागनिन्दार्थं जायते ॥

तद्, यथा,—

त्यागो हि सर्व्वव्यसनानि हन्तीत्यलीकमेतद् भुवि संप्रतीतम्।
जातानि सर्व्वव्यसनानि तस्यास्त्यागेन मे मुग्धविलोचनायाः ॥

भाषान्यथाकरणेन यथा,—

किं तादेण णरेन्दसेहरसिहालीढग्गपादेण मे
किं वा मे ससुरेण वासवसहासींहासणद्धासिणा।
ते देसा गिरिणो अ ते वणमही स ञ्चेअ मे वल्लहा
कोसल्लातणअस्सजत्थ चरणो वन्दे अ णन्दामि अ ॥

अत्र यदि भाषान्तरेण पठ्यते तदैतच्छौरसेनीभाषया सीतावाक्यं संस्कृतभाषया सुमन्त्रेण दशरथाय निवेदितं भवति ॥

तद्, यथा,—

किं तातेन नरेन्द्रशेखरशिखालीढाग्रपादेन मे
किं वा मे श्वशुरेण वासवसभासिंहासनार्द्धासिना।
ते देशा गिरयश्च ते वनमही सा चैव मे वल्लभा
कौशल्यातनयस्य यत्र चरणौ वन्दे च नन्दामि च ॥

सेयमेवंप्रकारा पठितिः ॥

विभिन्नार्थैकरूपाया या इत्ति र्वर्णसंहतेः।
अव्यपेतव्यपेतात्मा यमकं तन्निगद्यते॥ ५८॥
तदव्यपेतयमकं व्यपेतयमकं तथा।
स्थानास्थानविभागाभ्यां पादभेदाच्च भिद्यते॥ ५९॥
तत्र पादादिमध्यान्ताः स्थानं तेषूपकल्प्यते।
यदव्यपेतमन्यद्वा तत् स्थानयमकं विदुः॥ ६०॥
चतुस्त्रिद्व्येकपादेषु यमकानां विकल्पना।
आदिमध्यान्तमध्यान्तमध्याद्याद्यन्तसर्व्वतः॥ ६१॥
अत्यन्तं बहवस्तेषां भेदाः संभेदयोनयः।
सुकरा दुष्कराश्चैव दृश्यन्ते तत्र केचन॥ ६२॥

तत्र चतुष्पादयमकेष्वव्यपेतमादियमकं यथा,—

राजीवराजीवशलोलभृङ्गं मुष्णन्तमुष्णं ततिभिस्तरूणाम्।
कान्तालकान्ता ललनाः सुराणां रचोभिरचोभितमुद्वहन्तम्॥

तदेव मध्ययमकं यथा,—

दधतमाकरिभिः करिभिः चतैः समवतारसमैरसमैस्तटैः।
विविधकामहिता महिताम्भसः स्फुटसरोजवना जवना नदीः॥

तदेवान्तयमकं यथा,—

व्यथितसिन्धुमनीरशनैः शनैरमरलोकबधूजघनैर्घनैः।
फणभतामभितो वितत ततं दयितरम्यलतावकुलैः कुलैः॥

आदिमध्ययमकं यथा,—

घना घनाभस्य मही महीयसः सुरासुराणां दयितस्य तस्य स
धराधराकारगृहा गृहार्थिनो बभूव भूमेर्नगरी गरीयसी॥

आद्यन्तयमकं यथा,—

हूतं हूतं वह्निसमागतं गतं महीमहीनद्युतिरोचितं चितम्।
समं समन्तादपगोपुरं पुरं परैः परैरप्यनिराकृतं कृतम्॥

मध्यान्तयमकं यथा,—

उदयि ते दयिते जघनं घनं स्तनवती नवतीर्थतनु स्तनुः ।
सुमनसामनसा सदृशी दृशी शुकुरुमे कुरु मे ऽभिमुखं मुखम् ॥

आदिमध्यान्तयमकं यथा,—

सीमासीमानभूमिः फणिबलवलनोद्धाविराजीविराजी
हारी हारीसवङ्गिः परिसरसरणावस्तमालिस्तमालिः ।
देवादेवाप्तरचः क्षतभवभवतोऽग्रे न दीनो नदीनो
मुक्तामुक्ताच्छरत्नः सितरुचिरुचिरोल्लासमुद्रः समुद्रः ॥

त्रिपादयमकेष्वव्यपेतयमकं यथा,—

विशदा विशदामत्तसारसे सारसे जले ।
कुरुते कुरुते नेयं हंसी मामन्तकामिषम् ॥

नास्य प्रचुरः प्रयोग इति शेषभेदा नोदाह्रियन्ते ॥

द्विपादयमकेष्वव्यपेतमादियमकं यथा,—

करोति सहकारस्य कलिकोत्कलिकोत्तरम् ।
मन्मनो मन्मनोऽप्येष मत्तकोकिलनिःस्वनः ॥

तदेव मध्ययमकं यथा,—

तुलयति स्म विलोचनतारकाः कुरवकस्तवकव्यतिषङ्गिणि ।
गुणवदाश्रयलब्धगुणोदये मलिनिमालिनि माधवयोषिताम् ॥

अन्तयमकं यथा,—

खण्डिताशंसया तेषां पराङ्मुखतया तया ।
आविवेश सभा केतुस्तोचै र्वानरं नरम् ॥

एवमादिमध्यादीन्यपि द्रष्टव्यानि । एकपादयमकेष्वव्यपेतमाद्यन्तयोरनुश्लेषीति नोदाह्रियन्ते ॥

रुथमयमकन्तु चतुर्थपाद एवोल्लिखति यथा,—

विलुलितालकसंहतिरामृषन् मृगदृशां श्रमवारि ललाटजम् ।
तनुतरङ्गततीः सरसां दलन् कुवलयं वलयन् मरुदाववौ ॥

एवमावृत्तत्राधिक्ये ऽप्यव्यपेतमुदाहार्यं यथा,—

वियद्विषद्दृष्टिपरम्परं परं घनाघनाली रसिता सितासिता ।
सरःसरस्त्र: सरसारसारसा: सभा सभा रात्रिरतारतारता ॥

आवृत्तेरेकरूपतायामपि तवादियमकं यथा,—

याम यामत्रयाधीनायामया मरणं निशा ।
यामयाम धिया ऽस्वर्त्याया मया मथितेव सा ॥

तदेव मध्ययमकं यथा,—

स्थिरायते यतेन्द्रियो न हीयते यतेर्भवान् ।
अमायतेयतेऽप्यभूत् सुखाय तेऽयते घयम् ॥

तदेवान्तयमकं यथा,—

भवादृशा नाथ न जानते नते रसं विरुद्धे खलु सन्नतेनते ।
य एव दीनाः शिरसा नतेन ते चरन्त्यलं दैन्यरसेन तेन ते ॥

तदेतत् सर्वं मध्यव्यवस्थितावृत्तेरव्यपेतयमकं भवति ।

अथ चतुर्षु पादेषु व्यपेतमादियमकं यथा,—

काञ्चिमतोलीमनु कामिनीनां काञ्चिवल्लीवनमारिख्या ।
काञ्चिमभत्याभरणोज्झितानां काञ्चिद्धुनोति सुरतश्रमार्त्तिम् ॥

तदेव मध्ययमकं यथा,—

मदमदारुण उत्थित उच्छिखो मधुमदारुणचूर्णमुखच्छविः ।
तरुणिदारुण एष दिशः समं मम च्छदारुणदाभ्रवनानलः ॥

अन्तयमकं यथा,—

तव प्रिया सच्चरिता प्रमत्तया विभूषणं धार्यमिहांशुमत्तया ।
रसोत्सवामोदविशेषमत्तया न मे फलं किं वनकान्तिमत्तया ॥

आदिमध्ययमकं यथा,—

घनगिरीन्द्रविलङ्घनशालिना वनगता वनजद्युतिलोचना ।
जनमता दहशे जनकात्मजा तरुमृगेण नरस्थलशायिनी ॥

आद्यन्तयमकं यथा,—

विहगाः कदम्बसुरभाविह गाः कलयन्त्यनुक्षणमनेकलयम्।
भ्रमयन्नुपैति मुहुरभ्रमयं पवनश्च धूतनवनीपवनः॥

मध्यान्तयमकं यथा,—

मितमवददुदारं तां हनूमान् मुदारम्
रघुवृषभसकाशं यामि देवि प्रकाशम्।
तव विदितविषादो दृष्टकृत्स्नामिषादः
श्रियमनिशमवन्तं पर्व्वतं माल्यवन्तम्॥

आदिमध्यान्तयमकं यथा,—

समं स सैन्येन समन्ततः समं पुरन्दरश्रीः पुरमुच्चगोपुरम्।
मदालसां तां प्रमदां मुसम्मदां ययौ निधायाक्षययौवनां ययौ॥

त्रिपादयमकेषु व्यपेतमादियमकं यथा,—

करेण ते रणेष्वन्तकरेण द्विषतां हताः।
करेणवः क्षरद्रक्ता भान्ति सन्ध्याघना इव॥

अस्यापि नातिप्रचुरः प्रयोग इति शेषभेदा नोदाह्रियन्ते॥

द्विपादयमकेषु व्यपेतामादियमकं यथा,—

मुदा रमणमन्वीतमुदारमणिभूषणाः।
मदभ्रमद्दृशः कर्त्तुमदभ्रजघनाः क्षमाः॥

मध्ययमकं पुनरस्तुतमेवेति परिह्रियते॥

अन्तयमकं यथा,—

इह मुहुर्मुदितैः कलभैरवः प्रतिदिशं क्रियते कलभैरवः।
स्फुरति चानुवनं चमरीचयः कनकरत्नभुवां च मरीचयः॥

एकपादयमकमिह शुद्धं न सम्भवति। तस्य स्थाने द्विपादयमकमेवो-द्दिश्यते॥

तदादियमकं यथा,—

मधुरेणदृशां मानं मधुरेण सुगन्धिना।
सहकारोद्गमेनैव कथाशेषं करिष्यति॥

द्वन्द्वापि मध्ययमकमनुष्टुब्योति परिक्लिश्यते ॥

अन्तयमकं यथा,—

यस्याङ्करतिगम्भीरजलदध्वनिमं गलम्।
स वः करोतु निःसङ्गमुदयं प्रति मङ्गलम्॥

एवमावृत्ताधिक्येऽपि यथा,—

अवसितं हसितं प्रसितं मुदा-विलसितं ह्रसितं स्मरभासितम्।
न समदाः प्रमदा हतसंमदाः पुरहितं विहितं न समीहितम्॥

आवृत्तेरेकरूपतायामपि तत्रादियमकं यथा,—

सारयन्तमुरसा रमयन्ती सारभूतमुरुसारधरा तम्।
सारसानुकृतसारसकाञ्चिः सा रसायनमसारमवैति ॥

मध्यान्तयमकं यथा,—

लीलास्मितेन शुचिना मृदुमोदितेन
व्यालोकितेन लघुना गुरुणा गतेन।
व्याजृम्भितेन जघनेन च दर्शितेन
सा हन्ति तेन गलितं मम जीवितेन ॥

आद्यन्तयमकमादिमध्यान्तयमकञ्चेहास्थानयमकत्वप्रसङ्गान्न सङ्गृह्येते।
आदिमध्यान्तयमकानि तु प्रथममेवोदाहृतानि ॥

आवृत्तेरेकरूपतायामावृत्त्याधिक्ये च मध्ययमकं यथा,—

सभासु राजन्नसुराहतैर्मुखैर्महीसुराणां वसुराजितैः स्तुताः।
न भासुरा यान्ति सुरान् न ते गुणाः
प्रजासु रागात्मसुराश्रितां गताः ॥

तदेतत् सर्वमपि व्यवहितावृत्तेर्वैत्रमेतमादियमकं भवति ॥

नादौ न मध्ये नान्ते यत् सन्धौ वा यत् प्रकाश्यते।
अव्यपेतव्यपेतं तदस्थानयमकं विदुः॥ ५८ ॥
पादे श्लोके च तत् प्रायः पादसन्धौ च बध्यते।

स्वभेदे चान्यभेदे च स्थूलं सूक्ष्मं च सूरिभिः ॥ ५८ ॥

तत्र पादे स्थूलमव्यपेतं यथा,—

वीनां छन्दस्वैतत् कूटे समरति सुतरणि समरति सुतरणि ॥

चित्तं वातेन क्रोडे ऽस्मिन् सुरमणिगुणरुचि सुरमणि गुणरुचि ॥

अत्र स्थूलेनैवावृत्तिद्वयेन श्लोकपादयो वर्ग्राप्तत्वादादिमध्यन्तता न सम्भवतीत्यस्थानयमकमिदं स्थूलाव्यपेतमुच्यते ॥

पादएव सूक्ष्ममव्यपेतं यथा,—

स्वस्थः शैले पश्चात्तोऽसौ वररुरतिरतिततुततु मतिमनि ॥

लोको यद्वद्वैतत्रानीकं गुरु गुरुमयि मयि तरितरि सति सति ॥

अत्र पुनः सूक्ष्मेणावृत्तत्रष्टकेन श्लोकपादौ व्याप्तावितत्रस्थानयमकमिदं सूक्ष्माव्यपेतमुच्यते ॥

श्लोके स्थूलमव्यपेतं यथा,—

नगजा न गजा दयिता दयिता विगतं विगतं ललितं ललितं ।

प्रमदा प्रमदा महतामहतामरणं मरणं समयात् समयात् ॥

अत्रावृत्तत्रष्टकेन श्लोकोऽपि व्याप्त इतत्रस्थानयमकमिदं श्लोके स्थूल मव्यपेतमुच्यते ॥

श्लोक एव सूक्ष्ममव्यपेतं यथा,—

विविधधववना नागगर्द्दर्नाना-

विविततगगना नाम मज्जज्जनाना ।

कुरुममललना नाववन्नुन्नुनाना

सम द्वि द्वि ततनाना नन स्वस्वनाना ॥

अत्र सूक्ष्मतराभिरष्टाविंशत्यावृत्तिभिः श्लोको व्याप्त इतत्रस्थानयमकमिदं श्लोके सूक्ष्माव्यपेतमुच्यते ॥

पादसन्धावन्यभेदोच्छेदेन स्थूलं यथा,—

उपोढरागाप्यवला मदेन सा मदेनसा मन्युरसेन योजिता ।

न योजितात्मानमनङ्गतापितां गतापि तापाय ममास नेयतं ॥

अत्रान्तादिसन्दंशादव्यपेतं प्रवर्त्तते। व्यपेतन्तु पादसन्धिषु निवर्त्तत इत्यस्थानयमकमिदं स्थूलावृत्तेः सन्धिस्थूलाव्यपेतमुच्यते ॥

अन्यभेदानुच्छेदेन सूक्ष्मं यथा,—

मतान्धनानारमतामकामतामतापलब्धाग्रिमतानुलोमता।
मतावयत्युत्तमताविलोमतामताश्यत ते समता न वामता ॥

अत्र यत्पेतानुच्छेदेनैव पादसन्धिष्वव्यपेतमुत्पद्यत इत्यस्थानयमकमिदं सूक्ष्मावृत्तेः सन्धिसूक्ष्माव्यपेतमुच्यते ॥

स्वभेदे पूर्वभेदानुच्छेदेन स्थूलं यथा,—

सतमाः सतमालो यः पारापारायतः सदावोऽदावः।
लोकालोकानुकृति सद्यः सद्ययमनभ्रकूटैः कूटैः ॥

अत्र विषमपादयोः समपादावन्तेऽवतिष्ठमानावादियमकाद्यन्तयमकयोरादिमध्यान्तयमकतामापादयतः। पारमारेति सद्यः सद्य इत्यावृत्ती स्वेते एवादिमध्ययमकव्यपदेशञ्च लभेते इत्यस्थान यमकमिदं स्वभेदे पूर्वभेदानुच्छेदि स्थूलाव्यपेतमुच्यते ॥

तदेव स्वान्यभेदोच्छेदि सूक्ष्मं यथा,—

सनाकवनितं नितम्बरुचिरं चिरं सुनिनदैर्नदैर्वृतममुम्।
मता फणवतो वतो रसपरापरास्तवसुधा सुधाऽधिवसति ॥

अत्र पादान्तादिषु व्यपेतं यदा मध्येष्वव्यपेतं तदुभयमपि पादान्तादिसंहितायामव्यपेतमभिन्नजातीयं जायते। न च प्राचीनां मध्ययमकतां जहातीत्यस्थानयमकमिदं सूक्ष्मावृत्तेरन्यतो भेदेन स्वभेदानुच्छेदि सूक्ष्माव्यपेतमुच्यते ॥ तदुभयमप्येवंविध एव छन्दसि द्रष्टव्यम् ॥

पादे स्थूलव्यपेतं यथा,—

अस्थितताम्रसमुद्गसमं रविं दृशालोऽम्बरदिन्दुभाले।
भृङ्गावलि येषत्र तटे निपीतरसा ममत्तामरसा न मत्ता ॥

अत्र मा भूदव्यपेतमसङ्ग इत्येकमेवाक्षरं विहाय स्थूलावृत्तिद्वयेन श्लोकपादयो र्व्याप्तत्वादादिमध्यान्तता न सम्भवतीत्यस्थानयमकमिदं स्थूल-

व्यपेतमुच्यते ॥

पाद एव सूक्ष्मं यथा,—

> करेणुः प्रस्थितोऽनेको रेणु र्घण्टाः सहस्रशः ।
> करेऽणुः शीकरो जज्ञे रेणु तेन शमं ययौ ॥

अत्र विषमपादयोः करेणुः करेणुरित्यादावावृत्तं समपादयोस्तु रेणुः रेणुरिति । तत्त् स्थापेक्षया न मध्यमन्यापेक्षया नादिरित्यस्थानयमकमिदं सूक्ष्मव्यपेतमुच्यते ॥

श्लोके स्थूलव्यपेतं यथा,—

> जयन्ति ते सदादेहं नमस्यन्ति जयन्ति ते ।
> भवान्यतो नमस्यन्ति सदादेहं भवान्यतः ॥

अत्र स्थूलव्यपेताहत्तिचतुष्टयेन श्लोकोऽपि व्याप्त इत्यादिमध्यान्ताभावादस्थानयमकमिदं स्थूलव्यपेतमुच्यते ॥

स्थूल एव सूक्ष्मव्यपेतं यथा,—

> यामानीता नीतायामा लोकाधीरा ऽधीरालोका ।
> सेनासन्ना सन्नासेनासारं हत्वाह त्वा सारम् ॥

अत्र यद्यपि यामायामेत्यादौ व्यपेतमाद्यन्तयमकं, नीतानीतेत्यादौ च मध्ययमकमव्यपेतं विद्यते, तथापि मण्डूकप्लुतिन्यायेन गतप्रत्यागते यैतेष नैतदुल्लिखति । अपि तु श्लोकोऽपि द्वाभ्यां द्वाभ्यामक्षराभ्यां सूक्ष्मावृत्त्या व्याप्त इव लक्ष्यते । तेनास्थानयमकमिदमादिमध्यान्तानामभावात् सूक्ष्मावृत्तेः सूक्ष्मव्यपेतमुच्यते ॥

पादसन्धौ स्थूलव्यपेतं यथा,—

> हठपीतमहाराष्ट्रीदशनच्छदपाटला ।
> पाटलाकलिकानेके रेकैका लिलिहे ऽलिभिः ॥

अत्रापि प्राग्वदेव यतिविच्छेदात् पूर्वोत्तरार्द्धयोरसंहितायां पाटलापाटलेत्यावृत्तेर्नाव्यपेतयमकत्वम् । न चैतत् पादयोरादावन्ते च श्रूयते यत्तमपि स्वकस्यादावन्यस्य चान्त इत्यस्थानयमकमिदं स्थूलावृत्तेः

स्थूलव्यपेतमुच्यते । न चैतद्वाच्यमुपोद्‌घातगतत्वादौ काञ्चियमकेऽप्ययं न्याय इति तस्यैव तथाभूतलक्षणत्वात् । काञ्चियमक एवाव्यपेतास्थानयमकभेदे सूक्ष्मव्यपेतं यथा,—

धराधराकारधरा धराभुजां भुजा महीं पातुमहीनविक्रमाः ।
क्रमात् सहन्ते सहसा हतारयो रयोद्धरा मानधुरा च लम्बिनः ॥

अत्रान्तपादे धुराधुरेति सूक्ष्मव्यपेतं वर्त्तते ॥

स्वभेदान्यभेदयोः स्थूलं सूक्ष्मञ्च यथा,—

सालं वहन्ती सुरतापनीयं साऽलं तडिद्भासुरतापनीयम् ।
रक्षोभरक्षोभरसत्रिकूटा लङ्का कलङ्काकलिकाद्रिकूटा ॥

अत्र सालं सालमिति स्वभेदे सुरतापनीयं सुरतापनीयमिति स्थूलः रक्षोभरक्षोभेति लङ्का कलङ्केत्यन्यभेदे कूटाकूटेति सूक्ष्मश्च व्यपेते भेदो दृश्यते तदिदमस्थानयमकं स्थूलसूक्ष्मव्यपेतमुच्यते ॥

यत् सूक्ष्मभागं बह्वावृत्ति तदपि स्थूलसूक्ष्ममेव । यथा,—

मधुरया मधुबोधितमाधवी मधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥

स्थानस्थानविभागोऽयमव्यपेतव्यपेतयोः ।
क्रमेणोक्तस्तयोरेव पादभेदोऽथ कथ्यते ॥ ६५ ॥

तत्राव्यपेतभेदेषु प्रथमपादयोरावृत्तिर्यथा,—

न मन्दया वर्जितमानसात्मया नमन् दयावर्जितमानसात्मया ।
उरस्युपास्तीर्णपयोधरद्वयं मया समालिङ्ग्यत जीवितेश्वरः ॥

अत्रैव द्वितीयतृतीययोर्यथा,—

दृश्यस्त्वयायं पुरतः पयस्वानानाकलाली रुचिरैष नेता ।
नानाकलालीरुचिरैषणेशा देवी यदस्मादजनि स्वयं श्रीः ॥

एवं तृतीयचतुर्थयोरपि यथा,—

स्मरानलो मानविवर्द्धितो यः स निर्वृतिं ते किमपाकरोति ।

समन्ततस्तामरसेक्षणे न समं ततस्तामरसेक्षणेन ॥

व्यपेतभेदेषु प्रथमतृतीययोर्यथा,—

सभा सुराणामबला विभूषिता गुणैस्तवारोहि मृणालनिर्मलैः।
स भासुराणामबला विभूषिता विहारयन्निर्विश सम्पदः पुराम् ॥

तत्रैव प्रथमचतुर्थयोर्यथा,—

कलङ्कमुक्तं तनुमध्यनामिका स्तनद्वयी च त्वदृते न हन्त्यतः।
न याति भूतं गणने भवन्मुखे कलङ्कमुक्तं तनुमध्यनामिका ॥

एवं द्वितीयचतुर्थयोरपि यथा,—

या बिभर्त्ति कलवल्लकीगुणस्वानमानमतिकालिमालया।
नात्र कान्तमुपगीतया तया स्वानमानमतिकालिमालया ॥

अर्द्धाभ्यासः समुद्गः स्यात्तत्र भेदास्त्रयो मताः।
व्यपेतश्चाव्यपेतश्च उभयात्मा च सूरिभिः ॥ ६६ ॥

तेषु व्यपेतो यथा,—

अनेकपादभ्रमदभ्रशालं मानेत्रहृद्याभीरुपतत्रिकूटम्।
अनेकपादभ्रमदभ्रशालं मानेत्र हृद्या भीरु पत त्रिकूटम् ॥

अव्यपेतो यथा,—

घनं विदार्यार्जुनवाणपूगं घनं विदार्यार्जुनवाणपूगम्।
ससार वाणो युगलोचनस्त्वं सारवाणो ऽयुगलोचनमत्र ॥

व्यपेताव्यपेतो यथा,—

कलापिनां चारुतयोपयान्ति वृन्दानि लापोढघनागमानाम्।
वृन्दानिलापोढघनागमानां कलापिनां चारुतयोऽपयान्ति ॥

पादत्रयाभ्यासस्तु नातिसुन्दर इति तद्भेदा नोदाह्रियन्ते ॥

एकाकारचतुष्पादं महायमकमुच्यते।
श्लोकाभ्यासश्च तत्राद्यं पुनरभ्यासमर्हति ॥ ६७ ॥

तत्राव्यपेतभेदे प्रथमं महायमकं यथा,—

सभासमाना सहसा परागात् सभासमाना सहसापरागात्।
सभासमाना सहसापरागात् सभासमाना सहसापरागात्॥

व्यपेतभेदे द्वितीयं महायमकं यथा,—

प्रवणमदभ्रमदचलद्विपराजितमूढविमलमद्भिततरङ्गम्।
विरसं सद्मातिमिश्रितमचुरतधाम प्रतीतशिखिचरितवनम्॥

अव्यपेतभेदे आद्यसत्र पुनरभ्यासो यथा,—

समानयास मानया समानयासमानया।
समानया समानया समान या समानया॥

एकरूपेण वाक्येन द्वयोर्भणनमर्थयोः।
तन्त्रेण यत् स शब्दज्ञैः श्लेष इत्यभिशब्दितः॥ ६८॥
प्रकृतिप्रत्ययोत्थौ द्वौ विभक्तिवचनाश्रयौ॥
पदभाषोद्भवौ चेति शब्दश्लेषा भवन्ति षट्॥ ६९॥

तेषु प्रकृतिश्लेषो यथा,—

आत्मनश्च परेषाञ्च प्रतापस्तव कीर्त्तिनुत्।
भयसङ्कुपते बाङ्क्ष ह्रिं याञ्च सुहृदाञ्च ते॥

अत्र कीर्त्तिनुदित्यत्र नौतिनुदत्यो भयसदित्यत्र करोतिस्यन्तैतैरायः प्रकृत्योः किमपि तुल्यं रूपमिति प्रकृतिश्लेषोऽयम्॥

लिङ्गश्लेषोपि प्रकृतिश्लेष एव स यथा,—

कुवलयदलद्युतासौ दृशा च वपुषा च कं न दर्शयते।
अधरीकृतप्रवालश्रियाङ्घ्रिणाधरेन च नतभ्रूः॥

अत्र दृग्वपुषोरास्यचरणयोश्च कुवलयद्युतेत्यधरीकृतप्रवालश्रियेति च लिङ्गभेदेपि तुल्यरूपे विशेषणे इति लिङ्गश्लेषोऽयं॥

प्रत्ययश्लेषः सोऽङ्गो निरङ्गश्च तयोराद्यो यथा,—

तस्या विनापि हारेण निसर्गादेव हारिणौ।
जनयामासतुः कस्य विस्मयं न पयोधरौ॥

अत्र हारिणाविति इनिणिनिप्रत्यययोरेकरूपत्वाद्विनापि हारिणेतिच मत्वर्थीयोद्भेदात् सोद्भेदः प्रत्ययश्लेषोऽयं ॥ द्वितीयो यथा,—

त्वदुद्धृता मयस्थानरूढव्रणकिणाकृतिः ।
विभाति हरिणीभूता शशिनो लाञ्छनच्छविः ॥

अत्र हरिणीभूतेति श्वेच्छ्वीप्रत्यये तुल्यरूपतायां तदुद्भेदो नास्तीत्यनुद्भेदः प्रत्ययश्लेषोऽयम् । विभक्तिश्लेषो द्विधा भिन्नजातीययोरभिन्नजातीययोश्च । तयोराद्यो यथा,—

विषं निजगले येन बभ्रे च भुजगप्रभुः ।
देहे येनाङ्गजो दभ्रे जाया च स जयत्यजः ॥

अत्र येन विषं निजगले भुजगराजश्च निजगले बभ्रे अङ्गजो देहे जाया च देहे दभ्रे इति लिङात्मनेपदप्रथमपुरुषैकवचनस्यप्रमेरकवचनान्तयो-रेकरूपत्वाद्विभिन्नार्थत्वाद्भिन्नजातीयसुप्तिङ्विभक्तिश्लेषोऽयम् ॥

द्वितीयो यथा,—

त्वमेव धातुः पूर्व्वोऽसि त्वमेव प्रत्ययः परः ।
अनाख्यातं न ते किञ्चिन्नाथ केनोपमीयसे ॥

अत्र धातुरिति प्रथमान्तस्य षष्ठ्यन्तस्य चैकरूपत्वाद्भिन्नार्थत्वाच्चाभि-न्नजातीयसुब्विभक्तिश्लेषोऽयम् । वचनश्लेषो द्विधा सोद्भेदो निरुद्भेदश्च । तयोः सोद्भेदो यथा,—

प्राजप्रभावः प्रभवो धर्मस्यास्तरजस्तमाः ।
मुक्तात्मानः शिवं नेमिरन्येऽपि ददतां जिनाः ॥

अत्र नेमिरित्यन्येऽपीति एकवचनबहुवचनाभ्यां ददतामित्यत्र लिङ्गभ्यां प्राजप्रभावः प्रभव इत्यादिषु च सुबन्तैकवचनबहुवचनयोरुद्भेद इत्ययं सोद्भेदो नाम वचनश्लेषः ॥

निरुद्भेदो यथा,—

तनुत्वरमणीयस्य मध्यस्य च भुजस्य च ।
अभवन्नितरां तस्या वलयः कान्तिहेतवे ॥

अलाभवन्निति वलय इति पदयोस्तिङन्ततुवन्तयोरेकवचनवहुवचने अनुच्छिन्ने एव श्लिष्यते इत्ययं निरुद्धेदो नाम वचनश्लेषः॥

पदश्लेषो यथा,—

अरिभेदः पलाशश्च बाहुः कल्पद्रुमश्च ते।
बालेवोद्यानमालेयं सालकाननशोभिनी॥

अत्र प्रकृतिप्रत्ययविभक्तिवचनानां पृथगभिधानादभिधानमालोक्तानि प्रातिपदिकान्येव पदशब्देनोच्यन्ते। तेन पूर्वार्द्धे अत्र भेत्ता मांसादस्ते बाहुरित्यर्थेनारिभेदपलाशाख्यवृत्तनामनीति श्लिष्यते॥ उत्तरार्द्धे सालानां काननेन शोभते इत्येवंशीलेयमुद्यानमालेत्यर्थेन सालकेन आननेन शोभत इत्येवंशीला बालेत्युपमानार्थः श्लिष्यते स एव पद-श्लेषो नाम शब्दश्लेषः॥

वर्णश्लेषोऽपि पदश्लेष एव। स यथा,—

त्वमेव देव पातालमाशानां त्वं निबन्धनम्।
त्वञ्चामरमरुद्भूमिरेकोलोकत्रयात्मकः॥

अत्र त्वमेव पातालमित्यकारः पाश्चात्ये, त्वं च अमरमरुद्भूमिरिति चकारः पौरस्त्येऽचरे श्लिष्टः पातालञ्चामरेति च पदं रचयति॥ सोऽयं पदश्लेष एव वर्णश्लेष उच्यते॥

भाषाश्लेषो यथा,—

कुरु लालसभूलेहे महिमोहहरे तुहारिविच्छिन्ने।
हरिणारिसारदेहे वरे वरं हर उमे भावम्॥

अत्र, "आननीताजरुद्राणीं कान्ताञ्च पुरतः स्थिताम्। रणेच्छुः कश्चिदानर्च दिव्यमाश्रतया गिरा॥" अत्र रुद्राणीपक्षे हे उमे हरे भवे वरं श्रेष्ठं भावं कुरु किम्भूते लालसभूलेहे लालसभूः कामस्तं लेढि यस्मिन् तथा महिम्ना प्रभावेण जडं वितर्कमपहरति यस्मिन् महिमोहहरे महेश्वरसन्निधौ हि सर्वज्ञानाभिभव इति श्रूयते। अतएव मोहन्ति अर्हयन्ति ये अरयस्तैर्विच्छिन्ने विरहिते। अपर-

मप्यरीणां विच्छेदकारणमाह। हरिणारिसारदेहे हरिणारिः सिंहस्तस्य सारो बलं स देहे यस्य तस्मिन् वरे परिणेतरीति। उमाया एव वा इमानि सम्बोधनविशेषणानि। कान्तापक्षे तु हे कान्ते तव योऽयं हरिनायिका श्रियाः सार उत्कृष्टो देहस्तत् यद्वर श्रेष्ठं विलोचनाननस्तनजघनादि तस्मे भावमभिलाषं हरतु कामं पूरयत्वित्यर्थः। किम्भूते देहे, कुटिलालसभ्रूलेखे मद्दीमोहगृहे हारिणि विच्छिन्ने च तनुमध्यत्वादिभिरिति॥

यथा वा,—

रुचिरं जितारिहेतिं जननमितं सामकायमकलङ्कम्।
सन्तममितञ्च मानय कमलासनमभिविराजन्तम्॥
भूतसंस्कृतभाषाभ्यां द्विर्नमस्कृत्य माधवम्।
जगाम समरं कोऽपि कस्य श्रेयसि तन्मयः॥

तत्र भूतभाषायां यथा, रुचिरं मनोहरं जितारिहेतिं भग्नसपत्नायुधं जनैर्नमितं श्यामकायमकलङ्कं शान्तं शान्तरूपं अमितं अनन्तं च समुच्चये कमलासनं ब्रह्माणं अभिलक्षीकृत्य विराजन्तं शोभमानं मानय पूजयेति॥ संस्कृतभाषायां यथा। रुचिभिः रञ्जिता अरिहेतयः चक्रदीप्तयः येन तं, जननैः दशभिरवतारैर्मितं परिच्छिन्नं, सामानि कायति गायति यः स सामकायः तं, न विद्यते कला यस्य सोऽकलस्तं, कं सन्तं ब्रह्माणं सन्तम्, अं विष्णुं इतं गतं, अभि विराजं तं गरुत्मन्तमभि तं प्रसिद्धं कमलासनं श्रिया संसक्तं मा नय मां प्रापयेति॥

आवृत्तिर्या तु वर्णानां नातिदूरान्तरस्थिता।
अलङ्कारस्तत्र विद्वद्भिरनुप्रासः प्रदर्श्यते॥ ७०॥
श्रुतिभिर्वृत्तिभिर्वर्णैः पदैर्नामद्विरुक्तिभिः।
लाटानामुक्तिभिश्चायं षट्प्रकारः प्रकाश्यते॥ ७१॥
मार्गेण श्रुतयनुप्रासस्तेष्वनुप्रासनायकः।

सनाथेव हि वैदर्भी भाति तेन विचित्रिता ॥ ७१ ॥
निवेशयति वाग्देवी प्रतिभानवतः कवेः।
पुरो येऽमुमनुप्रासं ससमाधिनि चेतसि ॥ ७२ ॥

स त्रिधा ग्राम्यो नागर उपनागरश्च। तेषु ग्राम्यश्चतुर्धा मसृणो वर्णमसृणो वर्णोत्कटो वर्णानुत्कटश्च ॥ तेषां मसृणो यथा,—

एष राजा यदा लक्ष्मीं प्राप्तवान् ब्राह्मणप्रियः।
तदा प्रभृति धर्मस्य लोके ऽस्मिन्नुत्सवो ऽभवत् ॥

अत्र स्थानतः समानश्रुतीनां मूर्द्धन्यतालव्यदन्त्यौष्ठ्यकण्ठ्यवर्णानां प्रथमतृतीयपादयो र्निरन्तरा द्वितीयचतुर्थपादयोश्च सान्तरा पट इव स्रग्दाम्नीव वा वर्णपदानामसृणैवावृत्तिः ॥ सोयं श्रुत्यनुप्रासो मसृण इत्युच्यते ॥

वर्णमसृणो यथा,—

स्थिता क्षणं पक्ष्मसु ताड़िताधराः पयोधरोत्सेधनिपातचूर्णिताः।
वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदविन्दवः ॥

अत्र दन्त्यमूर्द्धन्ययोरोष्ठ्ययो र्डलयो रैक्येन दन्त्यपक्षकं मूर्द्धन्य इत्यादिक्रमेण यद्यपि पूर्ववत् स्थानतः समानश्रुतितया मसृणैवावृत्तिः तथापि चित्रपट इव माल्यग्रथन इव वा। योऽयं क्षणं पक्ष्मसु ताड़िताधराः पयोधरो वली स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदविन्दव इति नानावर्णात्मकः सूत्रान्तरेणेव पुष्पान्तरेणेव वा, स्थानभेदेन मसृण एव निवेशः। तेनैष श्रुत्यनुप्रासो वर्णमसृण इत्युच्यते ॥

वर्णोत्कटो यथा,—

विमुच्य सा हारमहार्य्यनिश्चया विलोलदृष्टिः प्रविलुप्तचन्दना।
बबन्ध बालारुणबभ्रु वल्कलं पयोधरोत्सेधविशीर्णसंहति ॥

अत्र सर्वं पूर्ववत् ॥ किन्तु तृतीयपादे बबन्धबालारुणबभ्रुवल्कलमिति वर्णाधिक्ययोगः ॥ सोयं वर्णोत्कटो नाम श्रुत्यनुप्रासः ॥

वर्णानुत्कटो यथा,—

ततः प्रभृत्युन्मदना पितुर्गृहे ललाटिकाचन्दनधूसरालका ।
न जातु बाला लभते स्म निर्वृतिं तुषारसंघातशिलातलेष्वपि ॥

अत्र दन्त्यवर्णप्रायतया अतिमसृणत्वे शिलातलेष्विति दन्त्यवर्णाभ्यामेव वर्णस्तोमो दत्तः । सोऽयं वर्णानुत्कटो नाम श्रुत्यनुप्रासः । तेऽमी चत्वारोऽप्यतिप्रसिद्धतया ग्राम्या उच्यन्ते । ग्राम्यवैपरीत्येन नातिप्रसिद्धो नागरः । यथोच्यते,—

एकत्वबुद्धिर्भेदेऽपि तत्त्वेऽप्येकत्वनिह्नवः ।
यस्तत्र वर्णस्तत्र तं प्राहुरनुप्रासस्य जीवितम् ॥ ७४ ॥

तत्र भेदेऽप्येकत्वबुद्ध्या समानस्थानयोर्यथा,—

हरेर्लङ्घितगम्भीरा व्योम्नि दीर्घेण रंहसा ।
बलिबन्धनघोरोऽङ्घ्रिरंहःसङ्घं निहन्तु वः ॥

अत्र हकारस्य तुल्यस्थानेन घकारेण सह भेदेऽप्येकत्वबुद्धेस्तुल्यश्रुतित्वमिति भेदेऽप्येकत्वबुद्ध्या नागरानुप्रासोऽयम् ॥
तथैवासमस्थानयोर्यथा,—

उच्छलन्मत्स्यपुच्छाग्रदण्डपाताहताम्भसि ।
जगद्धानमम्भोधावुन्ममज्ज ममज्ज च ॥

अत्र उच्छलन्मत्स्यपुच्छाग्रेत्यत्र छकारयोरिव दन्त्यचकारयोरपि तुल्यश्रुतित्वमिति असमानस्थानत्वेन भेदेऽप्येकत्वबुद्ध्या नागरानुप्रासोऽयम् ॥ तत्त्वेऽप्येकत्वनिह्नवेन डकारवकारयकाराणां यथा,—

क्रोडे मा डिम्भमादाय चपिड पीडय सहसा ।
कर्णं प्रच्छि पयस्ताया युवा यद्दयमुच्यते ॥

अत्र डकारादीनामीषत्स्पृष्टतादिभिरैकत्वेऽपि भेदाभ्यास इति तत्त्वेऽप्येकत्वनिह्नवेन नागरानुप्रासोऽयम् ॥
तथैव छकारवकारसकाराणां यथा,—

नवोढे त्वं कुचाढ्यापि नोपगूढाय ढौकसे ।
वहन् बाहुलते क्षीणो वरः पुलकलङ्घिते ॥

अत्र ढकारादीनामीषत्स्पृष्टतादिभिरेकत्वेऽपि भेदावभास इति तन्नि-ष्पेयकत्वनिह्नवेन नागरानुप्रासोऽयम् ॥

उभयगुणयोगान्नात्यप्रसिद्ध उपनागरः । यथोच्यते,—

डलयोरैक्यमित्यादिवाक्यैर्यैस्त्रानुमीयते ।
समानश्रुतितान्योन्यं सोऽनुप्रासः प्रशस्यते ॥ ७५ ॥

स डलयोरैक्येन यथा,—

शयने यस्य शेषाहिः सनीडे वडवानलः ।
महासाहसिनामग्र्यं तमीडे जडशायिनम् ॥

सेयमुपनागरः श्रुत्यनुप्रासः ॥

नणयोरैक्येन यथा,—

बाणैः घुणेषु सैन्येषु त्वया देव रणाङ्गणे ।
हतशेषाः श्रयन्तीमे शून्यारण्यानि विद्विषः ॥

अत्र घुणेषु सैन्येषु शून्यारण्यानि इति नकारणकारयोः स्वल्पश्रुतित्व-मैकत्वं वा भासत इति उपनागरोऽयं श्रुत्यनुप्रासः ॥

रलयोरैक्येन यथा,—

विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या ।
रत्नैः पुन र्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः ॥

अत्र करीरनीलैरिति रेफलकारयोरैक्येन तुल्यश्रुत्या चतुर्ष्वपि पादे-ष्वनुप्रासनिर्वहणमितुपनागरोऽयं श्रुत्यनुप्रासः ॥

दन्त्यतालव्यानामैक्येन यथा,—

विद्यास्यन्दो वाग्विदां यः प्रसन्नः पुण्यो यश्च देवतां तां नमाम ।
यां शश्वापश्चिन्तयन्तो विशोकाः सा नो देयात् स्वस्ति सूक्तानि ॥

अत्र दन्त्यतालव्यानामैक्येन तुल्यश्रुतितेतुपनागरोऽयं श्रुत्यनुप्रासः ॥

सर्व्वेऽपि चानुप्रासाः प्रायेण विसदृशवर्णान्तरिता एव स्वदन्ते। इत्यो-
ष्ठ्रकण्ठ्रादीनामिहानुप्रवेशो भवति॥

यथा ज्योत्स्ना चन्द्रमसं यथा लावण्यमङ्गनाम्॥
अनुप्रासस्तथा काव्यमलङ्कर्तुमयं क्षमः॥ ७६॥
अनुप्रासः कविगिरां पदवर्णमयोऽपि यः।
सोऽप्यनेन स्तवकितः श्रियं कामपि पुष्यति॥ ७७॥
मुद्रावर्त्तप्रमानेषु यः स्ववर्गेषु वर्त्तते।
काव्यव्यापी स संदर्भो वृत्तिरित्यभिधीयते॥ ७८॥
कार्णाटी कौन्तली कौङ्की कौङ्कणी वानवासिका।
द्राविडी माथुरी मात्स्यी मागधी ताम्रलिप्तिका॥ ७९॥
औड्री पौण्ड्रीति विद्वद्भिः सा द्वादशविधेष्यते।
अथ लक्षणमेतासां सोदाहरणमुच्यते॥ ८०॥

तासु कवर्गानुप्रासवती कार्णाटी यथा,—

कान्ते कुटिलमालोक्य कर्णकण्डूयनेन किम्।
कामं कथय कल्याणि किङ्करः करवाणि किम्॥

चवर्गानुप्रासवती कौन्तली यथा,—

ज्वलज्जटिलदीपार्च्चिरञ्जनोच्चयचारवः।
चम्पकेषु चकोराक्षि चञ्चरीकाश्चकासति॥

टवर्गानुप्रासवती कौङ्की यथा,—

कुम्भकूटाट्टकुट्टाककुटिलोत्कटपाणिरट्।
हरिः करटिपेटेन न द्रष्टुमपि चेष्टते॥

तवर्गानुप्रासवती कौङ्कणी यथा—

मधु मधूनि गान्धर्वमन्दिरे मदिरेक्षणा।
इन्दरिन्दीवरं दाम काममानन्दयन्ति नः॥

पवर्गानुप्रासवती वानवासिका यथा,—

प्रिया प्रगल्भा ताम्बूलं परिघ्नन् फुल्लसुतपल्लम् ।
ष्टपत्काः पञ्चवाणस्य पञ्चमः पञ्चमध्वनिः ॥

अन्तःस्थानुप्रासवती द्राविडी यथा,—

प्रियालवलीमालतमालैलावनावली ।
भाति पत्रलच्छिन्नालङ्कारसमुद्रा वधूरिव ॥

ऊष्मानुप्रासवती माथुरी यथा,—

पुष्णाती पुष्पधनुषं मुष्णाती प्रोषविपुषः ।
मिषन्ती निर्निमेषेण चक्षुषा मानुषी न सा ॥

द्वित्रिवर्गानुप्रासवती मात्सी यथा,—

कोकिलालापवाचालो मामेति मलयानिलः ।
उच्छलच्छीकराच्छाच्छनिर्झराम्भःकणोच्छितः ॥

द्वाभ्यां विदर्भितैकवर्ग्या मागधी यथा,—

घर्घोषं नो नृसिंहस्य घनाघनघनध्वनिः ।
हन्याद् घुरघुराघोरः सुदीर्घो घोरघर्घरः ॥

स्वान्तरसंयोगिकवर्गा ताम्रलिप्तिका यथा,—

भ्रिङ्गानमञ्जुमञ्जीरावाहकाञ्चनकाञ्चयः ।
कङ्कणाङ्कभुजा भान्ति जितानङ्ग मवाङ्गनाः ॥

सरूपसंयोगग्रथितौड्री यथा,—

सल्लतापल्लवोल्लासी चित्तक्षत्तहरो नृणाम् ॥
कल्लोलोज्जलसज्जासु नदीषु मलयानिलः ॥

असरूपसंयोगग्रथिता पौण्ड्री यथा,—

अस्तमस्तकपर्यस्तसमस्तार्कांशुसंस्तरा ।
पीनस्तनस्थिता ताम्रकम्रवस्त्रेव वारुणी ॥

अकठोराक्षरादामं नातिनिर्वेद्यर्णपिता ।
अग्रे पिल्यस्य सत् कर्त्तुं दृष्टानुप्रासमीप्सता ॥ ८१ ॥

क्वचिदस्ति क्वचिन्नास्ति क्वचिदस्ति च नास्ति च।
वर्णानुप्रास एषा तु सर्वतोऽस्तीति भिद्यते ॥ ८२ ॥

अन्ये पुनरन्यथा वृत्तिं व्याचक्षते ॥

स्पर्शादीनामसम्बन्धः सम्बन्धो वापि यो मिथः।
स्फुटादिबन्धसंसिद्ध्यै सेह वृत्तिर्निगद्यते ॥ ८३ ॥
वाक्यव्यापी च संदर्भो वृत्तिरित्यभिधीयते।
सौकुमार्यप्रभृति प्रौढिर्मध्यमत्वं च तद्गुणाः ॥ ८४ ॥
गम्भीरौजस्विनी प्रौढा मधुरा निष्ठुरा श्लथा।
कठोरा कोमला मिश्रा परुषा ललिता मिता ॥ ८५ ॥
इति द्वादशधा भिन्ना कविभिः परिपठ्यते ॥
कारणं पुनरुत्पत्तेस्त एवासां विजानते ॥ ८६ ॥

तासु गम्भीरा यथा,—

अप्फन्दन्तेण घणं महिं च तडिउद्धमाविअदिसेण।
दुन्दुहिगम्भीररवं दुन्दुहिअं अंबुवाहेण ॥

सैषा प्रायस्तवर्गपवर्गयोस्तृतीयचतुर्थानां पकारफकारयोश्च स्वसंयोगबिन्दुयोगाभ्यां जायते ॥

ओजस्विनी यथा,—

घणाअ सीभराउग्घाडसिलाअलणिसण्णराउअजलअं।
घत्तं ओज्झरपडसिददरिमुहणिम्महिअवडलमहुरामोअं ॥

सेयं मूर्धन्यानां प्रथमचतुर्थपञ्चमद्वित्वैस्तदावृत्त्या च प्रायो जायते ॥

प्रौढा यथा,—

त्वत्वा पुंवत् पातमुच्चैर्भृगुभ्यो मूर्ध्नि ग्राव्णां जर्जरा निर्झरौघाः।
कुर्वन्ति द्यामुत्पतन्तः स्मरार्त्तस्वर्लोकस्त्रीगात्रनिर्वाणमत्र ॥

सैषा प्रायेण मूर्धन्यानामन्तःस्थानां संयोगात् पूर्वगुणत्वेन जायते ॥

मधुरा यथा,—

किञ्जल्कसङ्गी म्लानभङ्गलाञ्छितपक्ष्मकः ।
अयं मधुरुपैति त्वां चण्डि पङ्कजदन्तुरः ॥

सैषा प्रायोऽनुस्वारपुरोवर्त्तिस्पर्शतया जायते ॥

निष्ठुरा यथा,—

स्वाङ्गश्लिष्टाद्रिजन्मानं नेत्रार्च्चिःप्लुष्टमन्मथम् ।
स्तौमि त्र्यक्षं क्षुद्रपक्षेरठं दैत्यश्रेण्यर्च्चिताङ्घ्रिकम् ॥

सैषा प्रायःसंयोगभूयस्त्वेनोत्पद्यते ॥

श्लथा यथा,—

दयितजनविरहविगलितनयनोदकपीतहरिणमदतिलकम् ।
वदनमपगतमृगमदशशिकरणि वहति लोलदृशः ॥

सेयं प्रायो व्यञ्जनानामसंयोगेन जन्यते ॥

कठोरा यथा,—

निसर्गनिर्गतानर्घघर्घरध्वनिहास्तिकम् ।
चक्रे चक्रं युधि क्रामन्नर्कः कर्कशार्करुक् ॥

सैषा प्रायःकण्ठ्यरेफादिसंयोगादुत्पद्यते ॥

कोमला यथा,—

दारुणरणे रणन्तं करिदारणकारणं कृपाणं ते ।
रमणकृते रणरणको पश्यति तरुणीजनो दिव्यः ॥

सेयं रेफणकारादसंयुक्तकोमलवर्णविरचनया निष्पद्यते ॥

मिश्रा यथा,—

पिनष्टीव तरङ्गाग्रैरुदधिः फेनचन्दनम् ।
तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः ॥

सैषा प्रायःकठोराणामोष्ठ्यकण्ठ्यमूर्द्धन्यानां बाहुल्यादिभिरुपलभ्यते ॥

परुषा यथा,—

जङ्के भिङ्कादिङ्कादोऽसौ कह्लाराह्लादितङ्कदः ।
मयत्ना मत्या गत्यं त्वमर्दपार्श्वः परम्परत् ॥

सैषा प्रायेणोष्मणामन्तःस्थादिसंयोगैरवस्थाप्यते ॥

ललिता यथा,—

द्राविडीनां भ्रुवं लीलारोचिमन्भ्रूलते सुखे ।
आसज्य राज्यभारं स्वं सुखं स्वपिति मन्मथः ॥

सैषा प्रायेण दन्त्यौष्ठ्यतालव्यानां मध्येऽन्तःस्थादिसंयोगैः स्थाप्यते ॥

अमिता यथा,—

वकुलकलिकाललामनि कलकण्ठीकलकलाकुले काले ।
कलया कलावतोऽपि हि कलयति कलिकास्त्रतां मदनः ॥

सेयममितयोरेव ककारलकारबन्धयोरनुप्रासेन प्रसूयते ॥

इति द्वादशधा वृत्तिः कैश्चिद्या कथितेह सा ।
न गुणेभ्यो न वृत्तिभ्यः पृथक्त्वेनावभासते ॥ ८७ ॥
श्रुत्यनुप्रासवर्णानुप्रासयोरपि दुष्कराः ।
क्वचिद्भेदाः पृथक्कर्तुमस्याखेनेह नेष्यते ॥ ८८ ॥
यथाम्रातकपुष्पादिः स्रगादे वर्ण उच्यते ।
वर्णावृत्तिस्तथा वाचां वर्णानुप्रास उच्यते ॥ ८९ ॥
स तु स्तवकवान् स्थानी गर्भो विरतसंहतः ।
गृहीतमुक्तः क्रमवान् विपर्यस्तोऽथ संपुटम् ॥ ९० ॥

मिथुनं वेणिका चित्रो विचित्रश्चेति वर्ण्यते ।
वर्णावृत्तिः प्रयोगेभ्यस्तेभ्यस्तेभ्यो मनीषिभिः ९१ ॥

तेषु स्थाने स्थानेऽनुप्रासविन्यासतः स्तवकवान् यथा,—

यस्यावासीकृतहिमगिरे गुञ्जतां कुञ्जराणा-
माविश्यके वनगजमदामोदघोरायितानि ।
दर्पोत्फुल्लस्फुरणविकटाकाण्डकण्डूलगण्ड-
स्वेच्छाकायक्वथितसरलानोकहस्कन्धगन्धः ॥

अत्र गुञ्जतां कुञ्जराणामित्यादे वर्णस्तवकस्तत्र स्थाने स्थाने विन्यासादयं

वर्णानुप्रासः स्तवकवानित्युच्यते ॥

नियतविवक्षितस्थानविशेषः स्थानी यथा,—

बाले मालेयमुच्चैर्न भवति गगनव्यापिनी नीरदानाम्
किं त्वं पक्ष्मान्तराले मलिनयसि मुधा वक्त्रमश्रुप्रवाहैः ।
एषा प्रोद्वृत्तमत्तद्विपकटकषणक्षुण्णविन्ध्योपलाभा
दावाग्नेर्व्योमलग्ना मलिनयति दिशां मण्डलं धूमलेखा ॥

अत्र पादप्रथमविभागस्थानेषु बाले मालेयमित्यादिनियमेन दृष्टिः सोऽयं वर्णानुप्रासः स्थानीत्युच्यते ।

आवृत्ते वर्णान्तरायैश्च गर्भो यथा,—

कालं कपालमालाङ्कमेकमन्धकसूदनम् ।
वन्दे वरदमीशानं शासनं पुष्पधन्वनः ॥

अत्र कालं कलापमालेत्यङ्कमेकमिति वन्दे वरदमीशानं शासनमित्यादिषु पकारवकारमकाररेफककारगर्भाधानादयं वर्णानुप्रासो गर्भ इत्युच्यते ॥

स्थाने स्थाने विकाससङ्कोचाभ्यां विवृतसंवृतो यथा,—

न मालतीदाम विमर्दयोग्यं न प्रेम नवं सहतेऽपराधान् ।
म्लानापि न म्लायति केसरस्रग् देवी न खण्डप्रणया कथञ्चित् ॥

अत्र प्रथमपादे मालतीदामेत्यादिभिर्विकासः । द्वितीयपादे प्रेमेतेन्ताक्षरा सङ्कोचः ॥ तृतीयपादे म्लानापि न म्लायतीत्यक्षराभ्यां केसरस्रगितेरक्षराभ्याञ्च विकासः ॥ चतुर्थेनेति सङ्कोचः । सोऽयं वर्णानुप्रासो विवृतसंवृत इत्युच्यते । चक्रवालवद्दानोपादानाभ्यां गृहीतमुक्तो यथा,—

लोलल्लवङ्गलवलीवलया निकुञ्ज-
कूजत्कपिञ्जलकुलायकुलावनद्धाः ।
अघूर्णिरे कनकचम्पकराजिकान्ता
येनापरान्तविजये जलधेरुपान्ताः ॥

अत्र चक्रवाक्रमः सुव्यक्त एव । सोऽयं वर्णानुप्रासो गृहीतमुक्त इत्युच्यते ।

क्रमेण द्वित्राणां त्रिचतुराणां वर्णानामसंयोगस्वराणामावृत्तिः क्रमवान् यथा,—

नितम्बगुर्वी गुरुणा प्रयुक्ता वधू विंधातृप्रतिमेन तेन।
चकार सा मत्तचकोरनेत्रा लज्जावती लाजविमोकमग्नौ ॥

अत्र गुर्वी गुरुणा प्रयुक्तेति वधू विधातृ इति चकार चकोरेति लज्जावती लाजेति विमोकमग्नौ इति द्वयोस्त्रयाणाञ्चास्वरसंयोगवर्णानां क्रमेणावृत्तिः। सोऽयं वर्णानुप्रासः क्रमवानित्युच्यते ॥

क्रमवतां विपर्ययोपन्यासाद्विपर्ययो यथा,—

प्रणवः प्रवणो यत्र प्रथमः प्रमथेषु यः।
रणवान् वारणमुखः स वः पातु विनायकः ॥

अत्र व्युत्क्रमो व्यक्त एव सोऽयं वर्णानुप्रासो विपर्यय इत्युच्यते।
स्वाद्यवर्णवर्त्तिना स्वरेण सह पादमध्यान्तयोरनुप्रासः संपुटं। यथा,—

स्थिरापायः कायः प्रणयिषु सुखं स्थैर्यविमुखम्
महारोगा भोगाः कुवलयदृशः सर्पसदृशः।
गृहावेशः क्लेशः प्रकृतिचपला श्रीरपि खला
यमः स्वैरी वैरी तदपि न हितं कर्म्म विहितम् ॥

तदेतल्लक्षणेनैव व्याख्यातम्। सोऽयं वर्णानुप्रासः संपुटमित्युच्यते ॥

अन्तःपादमुपसंहारोपक्रमयो र्विवचितस्वरानुप्रासो मिथुनं यथा,—

त्यज मनसि सदाहे हे स्मर स्थानमस्मिन्
ननु किरसि शरीरे रे किमिन्दो मयूखान्।
अयि परिहर वायो योगभङ्गे मदीये
प्रणयिनि समवेते ते भवन्तः सखायः ॥

तदेतन्निगदेनैव व्याख्यातं। सोऽयं वर्णानुप्रासो मिथुनमित्युच्यते ॥

आवाक्यपरिसमाप्ते र्वर्णानुप्रासनिर्वाहो वेणिका यथा,—

विद्राणे रुद्रवृन्दे सवितरि तरले वज्रिणि ध्वस्तवज्रे
जाताशङ्के शशाङ्के विरमति मरुति त्यक्तवैरे कुवेरे।

वैकुण्ठे कुण्ठितास्त्रे महिषमतिरुषं पौरुषोपघ्ननिघ्नम्
निर्विघ्नं निघ्नती वः शमयतु दुरितं भूरिभावा भवानी ॥

तदेतन्नातिदुर्बोधं । सोऽयं वर्णानुप्रासो वैषयिकेऽनुप्रचर्यते ॥
उक्तलक्षणेभ्योऽन्यश्चित्रः । यथा,—

नीते निर्व्याजदीर्घामघवति मघवद्वज्रनिद्रानिदाने
निद्रां द्रागेव देवद्विषि मुषितरुषः संस्मरन्त्यः स्वभावम् ।
देव्या दृग्भ्रस्तितद्भ्यस्य इव गलिता राशयो रक्तसाया
रक्षन्तु त्वां त्रिशूलक्षतिकुहरभुवो लोहिताम्भःसमुद्राः ॥

एवमन्येऽपि द्रष्टव्याः । एकवर्णोक्ते वृत्त्यनुप्रासस्य वर्णान्तरवैचित्र्येण विचित्रो यथा,—

चञ्चत्काञ्चनकाञ्चयो लयचलन्नोलाञ्चलैर्वञ्चिता-
श्चारीसञ्चरणैकचारुचरणाः सिञ्चन्ति चित्तं मम ।
लीलाचञ्चुरचञ्चरीकरुचिभिश्चूलालकैश्चर्चिताः
किञ्चिच्चन्दनचन्द्रचम्पकरुचो चौर्य्यो मृगीलोचनाः ॥

अन्ये पुनरन्यथा चित्रविचित्रयोर्लक्षणं व्याचक्षते । तत्र यमकच्छायानुकारो चित्रः, ससवर्णानुप्रासवान् विचित्र इति ॥

तत्र चित्रो यथा,—

सर्व्वाशारुधि दग्धवीरुधि सदा सारङ्गबद्धक्रुधि
क्षामच्छायरुहि मन्दमुन्मधुलिहि स्वच्छन्दकन्दद्रुहि ।
शुष्यत्स्रोतसि तप्तभूरिरजसि ज्वालायमानाम्भसि
ज्येष्ठे मासि खरार्कतेजसि कथं पान्थ व्रजन् जीवसि ॥

विचित्रो यथा,—

उद्यद्बर्हिषि दर्दुरारववपुषि प्रक्षीणपान्थायुषि
खद्योतद्विषु,षि चन्द्ररुङ्मुषि सखे हंसद्विषि प्राट्षि ।
मा मुञ्चोच्चकुचान्तसन्ततगलद्बाष्पाकुलां बालिकाम्
काले कालकरालनीलजलदव्यालुप्तभास्वत्त्विषि ॥

वर्णावृत्तिरनुप्रास इति यः स्मृतलक्षणः।
सोऽयं द्वादशधा भेदैः प्रविभज्य प्रदर्शितः॥ ८२॥
समग्रमसमग्रं वा यस्मिन्नावर्त्तते पदम्।
पदाश्रयेण स प्रायः पदानुप्रास उच्यते॥ ८३॥
विसर्गविन्दुसंयोगस्वरस्थानाविवक्षया।
अनिर्वाहाच्च स प्रायो यमकेभ्यो विभिद्यते॥ ८४॥
मसृणो दन्तुरः शृङ्खः संपुटं संपुटावली।
खिन्नः स्तवकवान् स्थानी मिथुनं मिथुनावली॥ ८५॥
गृहीतमुक्तनामान्यस्ततोऽन्यः पुनरुक्तिमान्।
इति द्वादशभेदोऽयं मनीषिभिरिहेष्यते॥ ८६॥

तेषु मसृणो यथा,—

स रणे वारणास्यस्य दमनेऽशनिसम्भवे।
चकार वलयाकारं भुजं भुजगभीषणम्॥

सोऽयमसंयुक्तवर्णावृत्तेः पदानुप्रासो मसृण इत्युच्यते॥

दन्तुरो यथा,—

स नैषधस्याधिपतेः सुतायामुत्पादयामास निषिद्धशत्रुः।
अनूनसारं निषधान्नगेन्द्रात् पुत्रं यमाहुर्निषधाख्यमेव॥

अत्र निषिद्धशत्रुरिति पदे संयोगाधिक्येन दन्तुरता। सोऽयं पदानुप्रासो दन्तुर इत्युच्यते॥

शृङ्खो यथा,—

अयेऽयि कान्ते वैदेहि देहि प्रतिवचो मम।
अरविन्दाक्षि दाक्षिण्यमलङ्कारो हि योषिताम्॥

अत्र स्वरेण सहावृत्तेः शृङ्खता। सोऽयं पदानुप्रासः शृङ्ख इत्युच्यते॥

संपुटं यथा,—

सदर्प इव कन्दर्पस्तरला माहशी मतिः।
असार इव संसारः कुरुष्व मदनुग्रहम्॥

अत्रैवमन्दस्यापदत्वेनाध्यवधायकत्वादनुप्रासोऽयं संपुटमित्युच्यते ॥

संपुटावली यथा,—

करोति किं किरातोऽपि समाक्षिप्य शिलीमुखान् ।
शिलीमुखान् समाक्षिप्य किङ्किरातः करोति यत् ॥

अत्र करोतीत्येकं संपुटं, किं किरातः किङ्किरात इति द्वितीयं, समाक्षिप्य समाक्षिप्येति तृतीयं, शिलीमुखान् शिलीमुखानिति चतुर्थम् । सोऽयं पदानुप्रासः संपुटावलीत्युच्यते ॥

खिन्नो यथा,—

कुलजातिसमाकुलीकृतानां सुखदुःखाश्रयमूढचेतनानाम् ।
अभवविभवलाभलोलुभानां भव भवबन्धविभेदनाय भूयः ॥

अत्र रीतेरनिर्वाहात् खिन्नता । सोऽयं पदानुप्रासः खिन्न इत्युच्यते ॥

स्तबकवान् यथा,—

भासयन्नपि भाषाद्यौ कविवर्गे जगत्त्रयीम् ।
के न यान्ति निबद्धारः कालिदासस्य दासताम् ॥

सोऽयं वर्णानुप्रासवत् पदानुप्रासोऽपि स्थाने स्थाने निवेशात् स्तबकवानित्युच्यते ॥

स्थानी यथा,—

मरं जोण्हा उण्हा गरलसरिसो चन्दणरसो
खदक्खारो हारो मलअपवणा देहतवणा ।
मुणाली वाणाली जलदिअ जलद्दा तणुलदा
वरिट्ठा जं दिट्ठा कमलवअणा सा सुणअणा ॥

सोऽयं पदानुप्रासः स्थाननियमात् स्थानीत्युच्यते ॥

मिथुनं यथा,—

पुरः पारापारा तटभुवि विहारः पुरवरम्
ततः सिन्धुः सिन्धुः फणिपतिवनं पावनमतः ।
तदग्रे ह्रद्यो गिरिरिति गिरेरस्य पुरतो

विशाला शालाभिर्ललितललनाभिर्विजयते ॥

तदेतत् प्रतिपादं द्वयो र्द्वयोः पदानुप्रासयो र्विन्यासान्मिथुनम् ॥

मिथुनावली यथा,—

शिरसि शरभः क्रोडे क्रोडः करी करटे रटन्
उरसि च रुरु र्मर्मण्येणः शिखी मुखरो मुखे ।
कपिरपि हृदि क्रोडी दूरान्तरि द्विपजिह्वगो
धनुषि लघुता लब्धेत्र पूर्वो जयोऽस्य यशस्विनः ॥

सेयं द्वयो र्द्वयोः पदानुप्रासयो र्निरन्तरमावृत्ति र्मिथुनावलीत्युच्यते ॥

गृहीतमुक्तो यथा,—

पुन्नागनागकेशरकेशरपरिवासवासनासुरभिः ।
सुरभि र्मधुरमधुप्रियषट्चरणाचरणवान् मासः ॥

सोऽयं चक्रवालवत् पदानुप्रासो गृहीतमुक्त इत्युच्यते ॥

पुनरुक्तिमान् यथा,—

धूमाइ धूमकलुसे जलइ जलन्तात्तहत्तजीआवन्धे ।
पडिरअपडिउत्थदिसेरसइरसन्तमि सिहरे धणुम्मि धइअलं ॥

अत्र धूमादीनां पुन र्वचनात् पदानुप्रासोऽयं पुनरुक्तिमानित्युच्यते ॥

वर्णावृत्तिरनुप्रासः पादेषु च पदेषु च ।
पूर्वानुभवसंस्कारबोधिनी यद्यदूरता ॥ ९७ ॥
लाटानुप्रासवर्गस्य यावती वच्यते गतिः ।
पदानुप्रासवर्गोऽपि तावत्येव प्रपञ्च्यते ॥ ९८ ॥
स्वभावतश्च गौण्या च वीप्साभीक्ष्ण्यादिभिश्च सा ।
नाम्नां द्विरुक्तिभि र्वाक्येत्र तदनुप्रास उच्यते ॥ ९९ ॥

सा स्वभावतो यथा,—

कुर्वन्तोऽमी कलकलं मारुतेन चलाचलाः ।
प्राप्त गुलुगुलायन्ते गजा इव घनाघनाः ॥

अत्र कलकलमित्यादिषु स्वाभाविकी पुनरुक्तिरुपदिश्यते ॥

गोरूप्या यथा,—

> अमृतममृतं चन्द्रश्चन्द्रः सायाम्बुजमम्बुजम्
> रतिरपि रतिः कामः कामो मधूनि मधून्यपि।
> इति न भजते वस्तु प्रायः परस्परसङ्करं
> तदियमबला कान्तिं धत्ते कुतः सकलात्मिकाम्॥

अत्रामृतममृतमित्यादिष्वभेदेऽपि भेदोपचारेण विशेषणविशेष्यभावः सामान्यविशेषभावाद्भवन् पुनरुक्तिवद्भासते॥ वीप्सा यथा,—

> शैले शैले न माणिक्यं मौक्तिकं न गजे गजे।
> देशे देशे न विद्वांसश्चन्दनं न वने वने॥

सेयं द्रव्यवीप्सायां द्विरुक्तिः॥ एवं गुणजातिक्रियावीप्सायामपि द्रष्टव्यं॥ प्रकारे गुणवचनस्येत्यादिरपि वीप्साप्रकार एव। यथा,—

> मानिनीजनविलोचनपातानुष्णवाष्पकलुषान् प्रतिगृह्णन्।
> मन्दमन्दमुदितः प्रययौ खं भीतभीत इव शीतमयूखः॥

आभीक्ष्ण्येन यथा,—

> स्मृपं स्मृपं मृगदृशा दत्तमाननपङ्कजम्।
> मया मुकुलिताक्षेण पायं पायमतृप्यत॥

सोऽयमाभीक्ष्ण्ये णमुल् स चानुप्रयुज्यते इति पुनरुक्तिः।

क्रियापदाभीक्ष्ण्याद्द्विरुक्तौ तु पुनरुक्तेरपि पुनरुक्तिः यथा,—

> जयति जयति देवः श्यामकण्ठः पिनाकी
> जयति जयति देवी लोकमाता भवानी।
> जयति जयति धन्यः सोऽपि भक्तस्तयोर्यः
> किमपरमिह धन्यं वर्ण्यते भावदेव॥

आदिग्रहणेन निमूलसमूलादयः परिगृह्यन्ते। तेषु निमूलादि यथा,—

> निमूलकाषं कषति स्वान्तमन्तः स्मरज्वरे।
> लाजस्फोटं स्फुटन्त्यस्य हृदये तारयष्टय॥

सम्भ्रमेण यथा,—

अस्त्रीन्यस्त्रीन्यजिनमजिनं भस्म भस्मेन्दुरिन्दु-
र्गङ्गा गङ्गोरग उरग इत्याकुलाः सम्भ्रमेण।
भूषावेषोपकरणगणप्रापणव्यापृतानाम्
इत्यारम्भप्रणयिनि शिवे पान्तु वाचो गणानाम्॥

हर्षावेशविस्मयादयोऽपि सम्भ्रमस्योपाधयो भवन्ति। तेषु हर्षसम्भ्रमेण यथा,—

इन्द्रधुः कौतुकोत्तालास्तस्तामपरावतीम्।
फाल्गुनः फाल्गुन इति प्रुवत्यो नाकयोषितः॥

आवेगसम्भ्रमेण यथा,—

कञ्चुकं कञ्चुकं मुञ्च हारं हारं परित्यज।
हा हा दहति दावाग्नि र्वस्त्रं वस्त्रमपाकुरु॥

अत्र मुञ्च परित्यज दहति अपाकुरु इति क्रियापदेष्वावेगसम्भ्रमाभावान्न द्विरुक्तिः। तथाहि अरण्यानीप्रवेशे विजिगीषुद्विषो योषिद्दावाग्निसम्भ्रमावेगात् कयापेत्रवमुच्यते॥ तत्र प्रथमं कञ्चुक एवावेगसम्भ्रमः। स हि आगते दावाग्नावुत्तारयितुमशक्यः। ततस्तदासन्नदेशो हारे, अनन्तरं प्रायःपतितदावाग्निदीप्ते वाससीति॥

विस्मयसम्भ्रमेण यथा,—

अहो रूपमहोरूपमहो सुखमहो सुखम्।
अहो मधमहो मधमस्याः सारङ्गचक्षुषः॥

एतेषु समस्तेष्वपि सम्भ्रमेषु यावद्बोधमिति द्विरुक्तिः॥

एवं त्रिरुक्तिरपि द्रष्टव्या,—

जय जय जय श्रीमन् भोज प्रभाति विभावरी
वद वद वद श्रुतंच विद्वन्निदं ह्यवधीयते।
शृणु शृणु शृणु त्वद्वत् सूर्योऽनुरज्यति मण्डलम्
नहि नहि नहि क्ष्मामार्त्तण्ड घणेन विरज्यते॥

क्रियासमभिहारश्च क्रियाभ्यासश्च यः पुरा।
युक्तावुदाहृतः सोऽपि नामानुप्रास उच्यते ॥ १०० ॥
जायते न च दोषाय कार्येऽलङ्कारसङ्करः।
विभूषयति हारोऽपि स्तनौ ग्रीवां मृगीदृशाम् ॥ १०१ ॥
अर्थाभेदे पदावृत्तिः प्रवृत्त्या भिद्यते या।
स सूरिभिरनुप्रासो लाटीय इति गीयते ॥ १०२ ॥
स चाव्यवहितो व्यस्तः समस्त उभयः पुनः।
उभयश्चैकवाक्यस्थ गर्भश्चेत्ताभिधीयते ॥ १०३ ॥
यस्तु व्यवहितो नाम नेयत्ता तस्य शक्यते।
कर्त्तुमेकादिगणना पदवृत्त्यादिभङ्गिभिः ॥ १०४ ॥

तेष्वव्यवहितभेदेषु व्यस्तो यथा,—

उग्गहिआ असेण असं णीरं णीरेण गअणआ वि गअणं।
रामो णिरट्ठिए अविट्ठि' भणइ रवेण अ रवं समुप्फुडन्तो ॥

अत्राव्ययानां द्योतकत्वादिवादिभि र्व्यवधानं नाश्रीयते ॥ न चेवादेः शाकल्येऽपि पृथक् पदत्वं भवति। यदेवमिदमिहोदाहरणं युज्यते ॥

त्वन्मुखं त्वन्मुखमिव त्वद्दृशौ त्वद्दृशाविव।
त्वन्मूर्त्तिरिव मूर्त्तिस्ते त्वमिव त्वं कृशोदरि ॥ इति।

अस्त्वेवैतत्। किन्तु यथा, "अमृतममृतं चन्द्रश्चन्द्र" इत्यादिकमभेदेऽपि भेदोपचारान्नामद्विरुक्तिरत्रयमित्युपेक्षते ॥

समस्तो यथा,—

अपहस्तितान्यकिसलयकिसलयशोभं विलोकयाशोकम्।
सखि विजिता पुरसुमनःसुमनः सुभगश्च मधुतिलकम् ॥

अत्र किसलय किसलय इति, सुमनः सुमन इति च समस्तानामेवाव्यवधानादयं लाटीयानुप्रासोऽव्यवहितसमस्तः पूर्वः पुनरव्यवहितव्यस्त इत्युपपद्यते। उभयस्तु द्विधा प्रथमः समस्तोऽपरो व्यस्तः प्रथमो

व्यस्तो ऽपरः समस्त इति च।

तयोः प्रथमो यथा,—

जितलाटाङ्गनावक्त्रं वक्त्रं तस्या मृगीदृशः।
कस्य न क्षोभजनकं जनकं पुष्पधन्वनः॥

तदिदं लक्षणेनैव व्याख्यातम्। द्वितीयो यथा,—

नलिनी नलिनीनाथकरसन्ततिसङ्गमात्।
विकचा विकचास्यानां कान्तानां हरति श्रियम्॥

अस्यापि लक्षणेनैवोक्तोऽर्थः। स्वापेक्षया व्यस्तोऽन्यापेक्षया समस्तो द्वितीयो व्यस्तः समस्त इति स द्वितीयोभयशब्दवाच्यः। सोऽपि द्विधा प्रतिपादमन्तादौ गर्भे इवानुप्रासविन्यासात्। तयोः प्रथमश्चक्रवालं यथा,—

जयति क्षुण्णतिमिरस्तिमिराम्भोजवल्लभः।
वल्लभीकृतपूर्वाशः पूर्वाशातिलको रविः॥

अत्र तिमिरवल्लभ पूर्वाश इति शब्दास्तिमिरादिशब्दापेक्षया व्यस्ताः, यथास्वं पूर्वोत्तरपदापेक्षया च समस्ताः, पादान्तादौ विनिवेशिता इति यथोक्तलक्षणानुगमाल्लाटीयानुप्रासोऽयमव्यवहितो व्यस्तसमस्तश्चक्रवालमितुच्यते॥ एतेन पादमध्येऽनुप्रासविन्यासाद् गर्भोऽपि व्याख्यातः। यथा,—

समाधवा माधवदत्तदृष्टिः सकौतुका कौतुकमन्दिरे स्तात्।
सविभ्रमा विभ्रमदायिनी वः सपङ्कजा पङ्कजलोचना श्रीः॥

व्यवहितभेदेषु व्यस्तो यथा,—

प्रकाशो यशसा देवः प्रकाशो महसा रविः।
दुःसहो विद्विषां स्वामी दुःसहस्तमसाञ्च सः॥

तदेतत्त्वातिदुर्बोधमिति न व्याक्रियते। सोऽयमेकगुणो व्यस्तश्च लाटीयानुप्रासो व्यवहित इत्युच्यते॥

व्यस्त एवानेकगुणो यथा,—

किञ्चिद्वच्मि न वच्मि वच्मि यदि वा किं वच्मि वच्मीदृशम्

दृश्यन्ते न भवादृशेषु यतिषु स्वेषामदोषे दमाः ।
ते किं सन्ति न सन्ति सन्ति यदि वा के सन्ति सन्तीदृशाः ,
सर्व्वस्वेषु गुणे गृहीतहृदयो लोकः कुतो वर्त्तते ॥

अत्र वच्मीति सन्तीतिप्रतयोरनेकगुणां वृत्तिः ॥

समस्त एकगुणो यथा,—

चन्द्रानन चन्द्रदिनं मृगलोचन मृगशिरश्च नचत्रम् ।
तिथिरतिथिर्मियदशमी परतस्त्वं कादशी मदरात् ॥

ननिह तिथिरित्यसमस्तम् । न केवलमसमस्तं भिन्नार्थतया लाटीयानुप्रासोऽपि न संगच्छते । संगच्छते च केनचित् पदानुप्रासेन च लाटीयानुप्रासो वा नामानुप्रासो वा पदानुप्रासाद् भिद्यत इति ॥

समस्तोऽनेकगुणो यथा,—

ब्रह्माण्डच्छत्रदण्डः शतधृतिभुवनाम्भोरुहो नालदण्डः
चोणीनौकूपदण्डः चरदमरनदीपट्टिकाकेतुदण्डः ।
ज्योतिश्चक्राचदण्डस्त्रिभुवनभवनस्तम्भदण्डोऽङ्घ्रिदण्डः
श्रेयस्त्रैविक्रमस्ते वितरतु विबुधद्वेषिणां कालदण्डः ॥

अत्रानेकशो दण्ड इत्यस्यावृत्तिः । आभ्यां व्यस्तसमस्तभेदोऽपि व्याख्यातः ॥

यथा,—

दशरश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम् ।
दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः ॥

अत्रानेकधा दशशब्द आवर्त्तते । अव्यवहितेऽपि द्वैगुण्यादे न विरोधः ॥

यथा,—

यच्छायन्ते नदीनां सितकुसुमधराः शक्रसङ्काशकाशाः
काशाभा भान्ति तासां नवपुलिनचराः श्रीनदीहंसहंसाः ।
हंसाभाम्भोदमुक्तः शरदमलरुचि मेदिनीचन्द्रचन्द्र-
चन्द्राङ्कः शारदस्ते जयकृदुपनतो विद्विषां कालकालः ॥

व्यवहिताव्यवहितभेदेऽपि दृश्यते यथा,—

यदनुप्रासलेशोऽपि हन्त तत्र निवेश्यते ॥ १०६ ॥
कुण्डलादिवियुक्तापि कान्ता किमपि शोभते।
कुङ्कुमेनाङ्गरागस्तु सर्व्वाङ्गीनः प्रयुज्यते ॥ १०७ ॥
श्रुतिवर्णानुप्रासावेकविधौ कुन्तलेषु गौड़ेषु।
पदयो निरनुप्रासो द्वेधा त्रेधा च लाटेषु ॥ १०८ ॥
वर्णस्थानस्वराकारगतिबन्धान् प्रतीह यः।
नियमस्तद्बुधैः षोढा चित्रमित्यभिधीयते ॥ १०९ ॥

वर्णशब्देन चात्र स्वराणां पृथङ्निर्देशाद् व्यञ्जनान्येव प्रगृह्यन्ते। तत्र वर्णचित्रेषु चतुर्व्यञ्जनं यथा,—

जजौजोजाजिजिज्जाजी सं ततो ऽतिततातितुत्।
भाभो ऽभीभाभिभूभाभूरारारिररिरीररः ॥

त्रिव्यञ्जनं यथा,—

देवानां नन्दनो देवो नोदनो वेदनिन्दिनाम्।
दिवं दुदाव नादेन दाने दानवनन्दिनः ॥

द्विव्यञ्जनं यथा,—

भूरिभिर्भारिभिर्भीराभूभारैरभिरेभिरे।
भेरीरेभिभिरभ्राभैरभीरुभिरिभैरिभाः ॥

एकव्यञ्जनं यथा,—

न नोननुन्नो नुन्नोनो ना ऽना नानानना ननु।
नुन्नोऽनुन्नो ननुन्नेनो ना ऽनेनानुन्ननुन्ननुत् ॥

क्रमस्थसर्वव्यञ्जनं यथा,—

कः खगौघङचिच्छौजा भाञ्ज्ञोटौठीडडण्ढणः।
तथोदधीन् पफर्बाभी र्मयोऽरिल्वाशिषां सहः ॥

छन्दोऽपरव्यञ्जनं यथा,—

सरत्सुरारातिभयाय जाग्रतो जगत्त्रनं स्रोत्रजनस्य जायताम्।

स्मितं स्मरारे गिरिजास्यनीरजे समेतनेत्रत्रितयस्य भूतये ॥

षड़जादिस्वरव्यञ्जनं यथा,—

सा ममारिधमनीनिधानिनी सामधामधनिधामसाधिनी ।
मानिनी सगरिमा ऽपपापपा सापगा सनसमागमाऽसमा ॥

मुरजाचरव्यञ्जनं यथा,—

खरगरकालितकण्ठं मथितगदं मकरकेतुमरणकरम् ।
तडिदिति ददमुरुडद्दरं द्दरमन्तद्दरं दधे घोरम् ॥

चतुःस्थानचित्रेषु निष्कण्ठ्यं यथा,—

भूरिभूतिं पृथु प्रीतिसुद्दमूर्त्तिं पुरस्थितिम् ।
विरिञ्चिं स्तुचिरविधीः शुचिभि र्नुतिभि र्धिनु ॥

निस्तालव्यं यथा,—

स्फुरत्कुण्डलरत्नौघो मघवद्दनुकर्बुरः ।
मेघनादोऽथ संग्रामे प्रावृट्कालवदाबभौ ॥

निर्दन्त्यं यथा,—

पापापहारी रणकर्मघोरखड्गखण्डीशमिश्रो मम चक्रपाणिः ।
भूयाच्छ्रियापश्ममयेक्षमाणो मोक्षाय मुख्यामरपूगपूज्यः ॥

निरौष्ठ्यं यथा,—

नयनानन्दजनने नक्षत्रगणशालिनि ।
अघने गगने दृष्टिरङ्गने दीयतां सकृत् ॥

निर्मूर्द्धन्यं यथा,—

शलभा इव धावन्तः सायकास्तस्य भूभुजः ।
निपेतुः सायकच्छिन्नास्तेन संयुगसीमनि ॥

त्रिस्थानचित्रेषु निरौष्ठ्यदन्त्यं यथा,—

जीयाज्जगज्जयश्चगरिष्ठचारचक्रार्चिषा क्षणकडारकायः ।
हरि र्हिरण्याक्षशरीरहारी खगेश्वगः श्रीश्रयणीयशयः ॥

निरौष्ठ्यमूर्द्धन्यं यथा,—

अलिनीलालकलतं कं न हन्ति घनस्तनि ।
आननं नलिनच्छायनयनं शशिकान्ति ते ॥

द्विस्थानचित्रेषु दन्त्यकण्ठ्यैर्यथा,—

अनङ्गलङ्घनालग्ननानातङ्का सदङ्गना ।
सदानघ सदानन्द नताङ्गीसङ्गसङ्गतात् ॥

एकस्थानचित्रेषु कण्ठ्यैर्यथा,—

अगा गां गाङ्गकाकाकगाहकाघककाकहा ।
अहाहाङ्क खगाङ्कागकङ्कागखगकाकक ॥

स्वरचित्रेषु ह्रस्वैकस्वरं यथा,—

उरुगुं द्युगुरुं युत्सु चुक्रुशुस्तुष्टुवुः पुरु ।
लुलुभुः पुपुषुर्मुत्सु मुमुहुर्नु मुहुर्मुहुः ॥

दीर्घैकस्वरं यथा,—

सैधैरैनैरैभैरैन्द्रैरैजैरैलैजैनैः सैन्धैः ।
मैत्रैर्नैकैर्धैर्यैर्वैरैर्दैः स्वैः स्वैरैर्दैवैः स्तैस्तैः ॥

ह्रस्वद्विस्वरं यथा,—

क्षितिस्थितिमितिदीप्तिविधिविन्निधिसिद्धिलिट् ।
मम त्वरय नमश्च हर स्मरहर स्मर ॥

दीर्घद्विस्वरं यथा,—

श्रीदीप्ती ह्रीकीर्ती धीनीती गीःप्रीती ।
एधेते द्वे द्वे ते ये नेमे देवेशे ॥

त्रिस्वरेषु ह्रस्वस्वरं यथा,—

क्षितिविजितिस्थितिविहितिव्रतरतयः परगतयः ।
उरु रुरुधुर्गुरु दुधुवुः स्वमरिकुलं युधि कुरवः ॥

चतुःस्वरेषु दीर्घस्वरं यथा,—

आम्नायानामाहान्त्या वाग्गीतीरीतीः प्रीतीर्भीतीः ।
भोगो रोगो मोदो मोहो ध्येये वेच्छेद्देशे क्षेमे ॥

प्रतिव्यञ्जनविन्यस्तस्वरं यथा,—

तापेनोग्रोऽस्तु देहे नो हेये विस्तोभिनिन्दिना।
जायाग्रे हि सुखिप्रेष्ठा हितोऽचेपोऽमृतोचिषी॥

नदेवापास्तसमस्तस्वरं यथा,—

तपनग्रस्तदहन हयवल्लभनन्दन।
जय ग्रहगणप्रष्ठ हतघय मतचण॥

आकारचितेष्वष्टदलं यथा,—

या श्रिता पावनतया यातनच्छिदनी च या।
याचनीया धिया माया या माया संस्तुता श्रिया॥

अत्र, कर्णिकायां न्यसेदेकं द्वे द्वे दिक्षु विदिक्षु च।
प्रवेशनिर्गमौ दिक्षु कुर्यादष्टदलाम्बुजे॥ ११३॥

द्वितीयमष्टदलं यथा,—

चर स्कारवर चारवरकार गरस्वर।
चलस्काल वलचालबल कालगल स्वल॥

अष्टधा कर्णिकावर्णः पत्रेष्वष्टौ तथापरे।
तेषां सन्धिषु चाप्यष्टावत्र पत्रसरोरुहे॥ ११४॥

तृतीयमष्टपत्रं यथा,—

न प्रणोम्र नवे भावे नमत्काम नतव्रत।
नमामि माननमन न तुवानु नयं न यम्॥

अत्र, प्राक्कर्णिकां पुनः पर्णं पर्णाग्रं पर्णकर्णिके।
प्रतिपत्रं व्रजेद्धीमानिह त्वष्टदलाम्बुजे॥ ११५॥

एवं चतुष्पत्रषोडशपत्रे अपि द्रष्टव्ये। तयोश्चतुष्पत्रं यथा,—

सासवा त्वा सुमनसा सा नमत्पीवरोरसा।
सारसोमैति सहसा साहसहं सुवाससा॥

कर्णिकातो नयेदूर्द्ध पत्राकाराक्षरावलीम् ।
प्रवेशयेत् कर्णिकायां पद्ममेतत् चतुर्दलम् ॥ ११६ ॥

षोड़शपत्रं यथा,—

नमस्ते मद्दिमप्रेम नमस्यामतिमद्दम ।
धामसोम नमत्काम धामभीम समक्षम ॥

गोमूत्रिकाक्रमेण सूत्र वर्णाः सर्व्वे समाः समाः ।
मध्ये मवर्णविन्यासात् पद्मोऽयं षोड़शच्छदः ॥ ११७ ॥

अष्टपत्रमेव कविनामाङ्कं यथा,—

रातावद्याधिराजत्रा विसररसविद्‌ वत्राजवाक् च्मापकारा
राका पद्माभशेषा नयननन्नयनश्चा स्वश्चा सव्यमारा ।
रामा व्यस्तस्थिरत्वा तुहिननन्हितुः श्रीः करचारधारा
राधा रचास्तु मस्त्वं शिवममवशिव्यालविद्यावसारा ॥

निविष्टाष्टदलन्यासमिदं पादाङ्कभक्तिभिः ।
अस्पृष्टकर्णिकं कोणैः कविनामाङ्कमम्बुजम् ॥ ११८ ॥

तत्राङ्को राजशेखरकमलः । एतेन चक्रमपि व्याख्यातं यथा,—

स त्वं मानविशिष्टमाजिरभसादालम्ब्य भव्यः पुरो
लब्धाघचयशुद्धिरुद्धरतरश्रीवत्सभूमिं मुदा ।
मुक्ता काममपास्तभीः परमृगव्याधः स नादं हरे-
रेकौघैः समकालमभ्रमुदयी रोपैस्तदा तस्तरे ॥

पुरः पुरो लिखेत् पादानत्र त्रीन् पङ्क्तिशस्ततान् ।
तुर्य्यन्तु भ्रमयेत्त्वेमी नामाङ्कचक्रसंविधिः ॥ ११९ ॥

एवं चतुरङ्गमपि यथा,—

युद्धं वहसुरास्थिसारविषमत्वग्रगजयातिस्थिर
भ्रष्टोद्धर्म्मरजः पदं गवि गवा घोषेन यद्वदुवा ।

तथ्यं चिन्तितगुप्तिरक्तविधिदिग् मैन्द्रस्य नक्तं शुचा
चारो ऽमांशुरदभ्रमुग्रतनु मे रम्यो भवानीरुचा ॥

अत्राङ्कः शुभ्रतरवाधा वह्निचितिचक्रं राजगुरुणेदं सादरमवादि । गतिचित्रेषु गतप्रत्यागतं यथा,—

वारणागगभीरा सा साराभीगगणारवा ।
कारितारिवधा सेना नासेधावरितारिका ॥

अत्राद्युक्पादयोर्गति युक्पादयोः प्रत्यागतिः । तदचरागतं यथा,—

निभितासिरतोऽभीकोनेत्रजते ऽमरणा रुचा ।
चारुणा रमते जनेत्र कोभीतो रसिताशिनि ॥

अत्र प्रतिगत्यागतिभ्यां स एव श्लोकः ।

श्लोकान्तरम् । यथा,—

वाहना ऽजनि मानासे साराजावनमा ततः ।
मत्तसारगराजेभे भारीहावज्जनध्वनि ॥

अत्र प्रातिलोम्येनापरः श्लोको भवति यथा,—

निध्वनज्जवहारीभा भेजे रागरसात्तमः ।
ततमानवजारासा सेना मानिजनाहवा ॥

भाषान्तरगतं यथा,—

कुरु रे वहला लासे वाला राङ्कमलीमसा ।
सालका रसलीला सा तुङ्गालालि कलारत ॥

अत्र प्रातिलोम्येनापरः प्राकृतश्लोको भवति ॥

तरला कलिला गातुं सालाली सरकालसा ।
सामली मङ्कलालावा सेलाला हव रेरुकु ॥

तदर्थानुगतं यथा,—

विदिते दिवि केऽनीके तं यान्तं निर्जिताजिनि ।
विगदं गवि रोद्धारो योद्धा यो नतिमेति न ॥

अत्र प्रातिलोम्येन स एव पदार्थः ॥ तुरङ्गपदं यथा,—

बाला सुकालबाला सा कान्तिलालकलालिता ।
सखा सुतवती सारा-दर्पिका वनगह्निता ॥

क्रमात् पादचतुष्कोऽत्र पङ्क्तिषु परिलेखिते ।
तुरङ्गपदपातेन श्लोकोऽन्य उपजायते ॥ १२० ॥

यथा,—

बाला ललिततीव्रस्वा सुकला रागदर्यिका ।
सुदन्तिका वर्ष्मिता वा सा सालातललासका ॥

श्राङ्करङ्ग भ्रमं नाम श्लोकार्द्ध भ्रमणं यदि ।
तदिष्टं सर्वतोभद्रं सर्वतो भ्रमणं यदि ॥ १२१ ॥

तयोरङ्गभ्रमं यथा,—

ससत्वरतिदे नित्यं सदरामर्षनाशिनि ।
त्वराधिककसंनादे रमकत्वमकर्षति ॥

सर्वतोभद्रं यथा,—

देवाकानिनि कावादे वाहिकास्वस्वकाहि वा ।
काकारेभभरे काका निस्वभव्यव्यभस्वनि ॥

बन्धचित्रेषु द्विचतुष्कचक्रबन्धो यथा,—

जय देव नतेन्द्रादे लम्बोदर विनायक ।
जगद्देधनचन्द्राभालङ्कृदन्त सिभापते ॥

इह शिखरसन्धिमालां विन्यस्यादर्द्धं समाश्रितैर्वर्णैः ।
द्विचतुष्कं चक्रबन्धे नेमिविधौ चापरं भ्रमयेत् ॥ १२२ ॥

द्विशृङ्गाटकबन्धो यथा,—

करासक्तवशर्धं खगौरवस्य कलारसम् ।
सन्धाय वलयासङ्गामगौरीं मे वनात्मक ॥

शृङ्गाद् ग्रन्थिं पुनः शृङ्गं ग्रन्थेः शृङ्गं व्रजेदिति ।

छिन्नशृङ्गाटकबन्धे ऽक्षिन्न मिः श्रेपाघरैर्भवेत् ॥ १२३ ॥

अत्राङ्को राजशेखरस्य ॥
विविडितिबन्धो यथा,—

सा ससी जयतादत्र सरन्ती यमितासुसा ।
सारं परं स च जयी शमिताऽस्यन्दिनसा ॥

शिखरादन्यतरस्मात् प्रतिपर्वं भ्रमति रेखयाद्यर्द्धम् ।
नेमौ तदितरमर्द्धं विविडितचक्राभिधे बन्धे ॥ १२४ ॥

मरयन्त्रबन्धो यथा,—

नमस्ते जगतां नाथ सदानवकुलक्षय ।
समस्ते ऽज सतां नाथ सुदामवन लक्षय ॥

चतुर्ष्वपि च पादेषु पङ्क्तिशो लिखितेष्विह ।
आदेरादेस्तु रङ्गस्य पादैः पादः समाप्यते ॥ १२५ ॥

व्योमबन्धो यथा,—

कमलावलिहारिविकासविशेषपदं जनकाङ्क्ष
णनगामिकरं द्विविधारमनारमणं जरितानाम् ।
तमसां बलहानिविलासवरोऽनवरं जनकान्त
न नमामि चिरं सवितारमनादिसदं जगतां न ॥

अष्टादशशिखरचरीं गोमूत्रिकया चतुष्पदीं पश्येत् ।
यत्रायन्ते दृष्टां स ज्ञेयो व्योमबन्ध इति ॥ १२६ ॥

मुरजबन्धो यथा,—

सा सेना गमनारम्भे रसेनासीदनारता ।
तारनादजना मत्तधीरनागमनामया ॥

अत्र पादचतुष्केऽपि क्रमशः परिलेखिते ।

श्लोकपादक्रमेण स्याद्रेखासु मुरजस्तु यौ ॥ १२७ ॥

एकाक्षरमुरजबन्धो यथा,—

सुरानन त्वां म न हाननष्टये पुनः सुधेऽनघघनप्लवाननम्।
मनसन्ननूनथ्यसनप्रधूननं सकाननस्याननदीननर्दनम् ॥

श्लोकस्यैतस्य पादेषु लिखितेषु चतुर्ष्वपि।
त्रिमृदङ्गकरोत्र स्याच्चतुरेकाक्षरावली ॥ १२८ ॥

मुरजप्रस्तारो यथा,—

तालसारप्रभा राका तारकापतिदंशिता।
मारधामा रमाधीता वलयामास सागरम् ॥

क्रमेण वास्य पादेषु प्रसृतेषु चतुर्ष्वपि।
तुर्यप्रान् मुरजमार्गेण श्लोकोऽयमुपजायते ॥ १२९ ॥
सरकारप्रदं धीरं तारधामाऽसमाश्रिका।
सा ललामालयाऽमाऽप ताराभाऽतिरसागता ॥

उदाहरणमात्रञ्चैतत्। तेन गतिचित्रादिगोमूत्रिकादयोऽन्येऽपि चित्रप्रकारा भवन्ति ॥

गतिरुच्चावचा यत्र मार्गे मूत्रस्य गोरिव।
गोमूत्रिकेति तत् प्राहुः दुष्करं चित्रवेदिनः ॥ १३० ॥

तेषु पादगोमूत्रिका यथा,—

काङ्क्षन् पुलोमतनयास्तनताड़ितानि
वक्षःस्थलोत्थितरयाश्रुनपीड़ितानि।
पायादपापभयतो नमुचिप्रहारी
मायामपास्य भवतोऽम्बुमुचां प्रसारी ॥

सेयमयुग्मतः पादगोमूत्रिका। युग्मतो यथा,—

देवः शशाङ्कशकलाभरणः पिनाकी देयं शशैकविकलाभरणः सनागः।

चित्ते महासुरजनेन शुभं विधत्तां चित्तं महासुरजनानतभङ्गधन्वा॥

अर्द्धश्लोकगोमूत्रिका यथा,—

चूडाप्रोतेन्दुभागद्युतिदलिततमस्कन्दलीचक्रवालो
देवो देयाददारां प्रममरजनतानन्दनोऽनन्यधामा।
क्रीडाधूतेशभामा द्युसदनतनिमच्छेदनी च श्रुवा नो
देहे देवी द्युरीरं दममरतनतानन्दिनोमान्यधामा॥

श्लोकगोमूत्रिकायां प्रथमश्लोको यथा,—

पायाद्दचन्द्रधारी सकलसुरशिरोलीढपादारविन्दो
देव्या रुद्धाङ्गभागः सुरदनुजदवः सत्रानसंविन्निधानम्।
कन्दर्पक्षोददक्षः सरससुरवधूमण्डलीगीतगर्वो
दैत्याधीशान्धकेनानतचरणनखः शङ्करो भव्यभाव्यः॥

द्वितीयो यथा,—

देयान्नश्चण्डधामा सलिलहरकरो रूढकन्दारविन्दो
देहे रुग्भङ्गरागः सुरमनुजदमस्त्रागसम्पन्निधानम्।
मन्दं दिक्क्षोभदक्षोः सदसदरवधूखण्डनागौरगव्यो
दैत्येश धीबन्धहानावततरसनयः शंपरो दिव्यसेव्यः॥

विपरीतगोमूत्रिकायां प्रथमः श्लोको यथा,—

विनायकं दानसुगन्धिवक्त्रं स्मिताननं मन्दचरं कथासु।
नमामि विघ्नावलिहारिसारं सतीसुतं शङ्करवल्लभं च॥

विपरीतश्लोको यथा,—

चलल्लतारब्धशमं सुभासं संसारहारं बहुविभ्रमान्यम्।
सुधाकरं चन्द्रमसं नतोऽस्मि सवर्णगर्भं नवकम्बुनाभ्यम्॥

भिन्नच्छन्दोगोमूत्रिकायां प्रथमश्लोको यथा,—

नमत चन्द्रकलामयमण्डनं नगसुताभुजसङ्गतकन्धरम्।
हरमभाग्यरदं स्तवसादरं शमितरावणशासनविक्रमम्॥

द्वितीयो यथा,—

कामदं चण्डकम्रं मदामर्दिनं नागदन्ताजअयंत्र गदाकर्बुरम् ।
धीरशोभाभरव्यञ्जकं सासुरं नौमि नारायणस्यासमं विभ्रमम् ॥

संस्कृतप्राकृतगोमूत्रिकायां संस्कृतश्लोको यथा,—

स्कन्दो बन्दर्द्धि मिष्टो विनरतु सरलो दारितारातिवर्गे
सस्यन्दो ऽमन्दसज्जो भवभयकलने सङ्गरे केलिकारी ।
सन्दोहोल्लासलासी जन इह बलिहा चण्डताभूरखर्वो
देवैजोराजदोहे महिमनि निरतो विक्रमाडम्बरेण ॥

प्राकृतश्लोको यथा,—

चन्दो कन्दप्पमित्तं विहरणसहलो हारितारायवन्धो
सच्छन्दो वन्दणिज्जो कुवलयदलनो सङ्करे सेलिकारी ।
सन्दोट्ठोल्लासलासी जअइ सिवसिहामण्डलीभूदखण्डो
देत्ता जोण्हा जलोहे विहिम्मणिम्मरद्दे विब्भमाणं बलेण ॥

समसंस्कृतप्राकृतेन पादगोमूत्रिका यथा,—

बाला विलासावलिहारिहासा लोलामला भावसहा सहावा ।
देहं हरन्ती सहसा सुरामा गेहं चरन्ती सहसा विरामा ॥

अर्द्धगोमूत्रिकाप्रस्तारो यथा,—

नमो दिवसपूराय सुतामरसभासिने ।
नतभव्यादिदाराय सुसारलयभाविने ॥

अत्र गोमूत्रिकाश्लोकोऽयमुत्तिष्ठति,—

नतदिव्यासदाराय सुसामलसभासिने ।
नमो भवरिपूराय सुताररयभाविने ॥

गोमूत्रिकाधेनु यथा,—

मम स्फुरतु चिह्नतः सततचिन्तनरघा मतिः
समस्तरविचितिनस्तुतरुचिः स्मरघेमस्तत् ।
समर्द्धिरतचिन्तितः स्ततविचित्ररत्यामयो
नमस्कारणचिह्नितः स्मितरुचिर्हरः सामरः ॥

चतुर्णामपि पादानां क्रमेण व्युत्क्रमेण च ।
इयं गोमूत्रिकाधेनु वैपरीत्यवशेन च ॥ १३१ ॥

शतधेनु यथा,—

वन्द्या देवी पर्वतपुत्री नितंत्र मधुमधुरकमलवदना पुरन्ध्र्यधिदेवता
देवैः स्तुत्या किन्नरगेया भक्त्या वरचरितमहिषमथनी जगन्नयनाधिका ।
सिद्धैर्ध्येया केशरियाना काम्या रणचतुररसिकहृदया त्रिलोचनवल्लभा
धीरैः पूज्या दर्पणमाधि नूनं गुणनिलयलटभललिता सतीषु धुरन्धरा ॥

यतिविच्छेदिनी ह्येषा श्लोकधेनुरनुत्तमा ।
छन्दोभेदाच्छतमियं प्रसूते श्लोकतर्णकान् ॥ १३२ ॥

सहस्रधेनु यथा,—

नखमुखपाणिकण्ठचिकुरैर्गतिभिः सहसास्मितेन ललितेक्षुदृशा
मणिशशिपद्मकम्बुचमराः करिणः सुतनोः सुधावहसिता हरिणः ।
फणिगणसिद्धसाध्यदयिता न समाः सकलास्त्वया च खभुवश्च्छलिता-
स्तव चलरूपदर्पविजिता नितरां विबुधाधिराजचरितैश्चतुरैः ॥

पदविच्छेदिनी ह्येषा श्लोकधेनुरनुत्तमा ।
छन्दोभेदात्सहस्रतीं प्रसूते श्लोकतर्णकान् ॥ १३३ ॥

अयुतधेनु यथा,—

श्रिये जयसि जृम्भसे स्फुजसि जायसे लायसे
स्तुपे मृषसि मृष्यसे क्षपसि पीयसे प्रीयसे ।
सुपे मृडसि होडसे कुडसि गल्भसे क्लीवसे
क्रुपे हरसि रज्यसे रजसि राजसे भ्राजसे ॥

एषा तु पदविच्छेदिन्येव धेनुः क्रियापदैः ।
सम्बोधनाग्रगे दृष्टास्माभिः श्लोकायुतप्रसूः ॥ १३४ ॥

खड्गधेनु र्यथा,—

दुर्गे भद्रे सुभद्रे ऽदिति सुरभि दिते चण्डिके गौरि पद्मे
नित्ये रुद्रे वरेण्ये कलि कमलिकले कालिके चण्डि चण्डे ।
धन्ये पुण्ये शरण्ये शुचि प्रवरि शिवे भैरवे रात्रि सन्ध्ये
छाये माये मनोज्ञेऽवनि जननि जये मङ्गले देहि शं नः ॥

सम्बोधनैरियं धेनुः कृ्ता सैकक्रियापदैः ।
लक्षत्रयं सहस्राणि षष्टिं श्लोकान् प्रसूयते ॥ १३५ ॥
एषान्तरपदर्भेदेन सम्भ्रमादिद्विरुक्तिभिः ।
यावद्बोधं पुनः सूते प्रयुतं श्लोकतर्णकान् ॥ १३६ ॥

कोटिधेनुर्यथा,—

स्थूलं दत्से सूक्ष्मं धत्से
भुवि भवसि नभसि रमसे रमे दिवि मोदसे
छिन्त्से वाढं भिन्त्से गाढं
क्षयि सिषसि धनुषि मनुषे जये पुरि जृम्भसे ।
स्वल्पं श्रेपे कल्पं प्रेपे
चिति चरसि यशसि यतसे चले युधि गल्भसे
त्रपे वामं स्वपे कामं
हृदि विशसि वचसि सचसे रुचे दृशि दीप्यसे ॥

सम्बोधनै र्द्वितीयान्तैः सप्तम्यन्तैः क्रियापदैः ।
श्लोककोटीरियं तिस्रः सार्द्धा धेनुः प्रसूयते ॥ १३७ ॥
यदा तु सम्भ्रमादिभ्यो भवन्त्यस्या द्विरुक्तयः ।
स्थूलादीनां तदा चैषा दशकोटीः प्रसूयते ॥ १३८ ॥

कामधेनु र्यथा,—

या गीः ग्नीः स्त्री धीः स्त्री ह्री भौं जूं मूंस्तृ स्त्रु धूं: म्रू भूं:
स्तुक् स्रग् युग् भुग्रुक् भुक् तृट् हिट् युत् क्रुत् चिद्भिक्तुग्दिग् द्रुः।
चक्रदृग् वा मा मृत् सङ्गा मा सुत् चुत् काऽस्मा-हा द्यौं गौः
सा सा या मा मे धा वे धा मे ना मा ते त्वं मे नौः ॥

पदग्रहाद् यथाकामं कामधेनुरियं तु नः।
पराद्धीनां पराद्धीनि प्रसूते श्लोकतर्णकान् ॥ १४०॥
एकाक्षरादिच्छन्दोभिर्गतिबन्धादिभेदतः।
उक्तानुक्तानि चित्राणि सर्वाण्येया प्रसूयते ॥ १४१ ॥
सकृदुच्चारणे यास्या गच्छत्येका विनाडिका।
तत् षष्ट्या नाडिका ताभिः षष्ट्याहोरात्रमृच्छति। १४२ ॥
प्रणवादिनमोऽन्ताभिः पदान्यस्या जयन्ति ये।
सर्वभाषासु वाक् तेषामविच्छिन्ना प्रवर्त्तते ॥ १४३ ॥
सिद्धैर्मन्त्रपदैः सेयं शास्त्राण्यालोचय निर्मिता।
जपतां जुह्वतां देवी सर्व्वान् कामान् प्रयच्छति ॥ १४४ ॥
स्थितेनागन्तुकं हन्यादौचित्येन विभाजयेत्।
तद्भेदास्ते भवन्त्यत्र वमनेऽप्यपि हि योजयेत् ॥ १४५ ॥
दुष्करत्वात् कठोरत्वाद् बोधत्वाद् विनाऽवधेः।
दिङ्मात्रं दर्शितं चित्रे ग्रेषमूह्यं महात्मभिः ॥ १४६ ॥
उक्तिप्रत्युक्तिमद् वाक्यं वाकोवाक्यं विदुर्बुधाः।
द्वयोर्वक्त्रोस्तदिच्छन्ति बहूनामपि सङ्गमे ॥ १४७ ॥
ऋजूक्तिरथ वक्रोक्तिर्वैयात्योक्तिस्तथैव च।
गूढप्रश्नोत्तरोक्ती च चित्रोक्तिश्चेति तद्भिदा ॥ १४८ ॥

तासु ऋजूक्तिर्द्विधा ग्राम्योपनागरिका च।
तत्र ग्राम्या यथा,—

अन्तो मणुस्सु करकुदगन्तु उदद्धु उक्को विहंसए छोमि।

मद्दोसि णर्व चुले मेह्लासितो विकिस्सु कु. णाणउं उज्जु अ कुखु कद्दाहि।

वाणउ उज्जु माइ गेह्लिउ घस्सवि

को मल्हणउ वारिज्जंतु रमट्ठाइ।

करइ वलिवंउ च वक्कइ मंच्छलु अहिमुहं

हि तहणिहि अच्छासइ उक्कर॥

सेयमुभयतोऽपि ऋजुनैव मार्गेणोक्तिमतुक्तयोः समा प्रवृत्तिरिति।
सेयमृजूक्ति नाम वाकोवाक्यम्।

सैवोपनागरिका यथा,—

बाले नाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतम्

खेदोऽस्मासु न मेऽपराध्यति भवान् सर्वेऽपराधा मयि।

तत् किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते

नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते॥

सेयमेकतः काक्वा कुटिलेऽतिविषमेयमृजूक्ति नाम वाकोवाक्यम्।
वक्रोक्ति द्विधा, निर्व्यूढ़ा अनिर्व्यूढ़ा च। तयो निर्व्यूढ़ा यथा,—

किं गौरि मां प्रति रुषा, ननु गौरहं किम्

कुप्यामि कां प्रति, मयीत्यनुमानतोऽहम्।

जानामि सत्य मनु मानत एव सत्य-

मित्थं गिरो गिरिभुवः कुटिला जयन्ति॥

सेयमावाक्यपरिसमाप्ते निर्वाहान्निर्व्यूढ़ेति वक्रोक्ति वाकोवाक्यम्।
अनिर्व्यूढ़ा यथा,—

केयं मूर्ध्न्यन्धकारे, तिमिरमिह कुतः सुभ्रु कान्तेन्दुयुक्ते,

कान्ताप्यस्ति च कामिन्ननु भवति मया दृष्टमेतावदेव।

नाहं द्वन्द्वं करोमि व्यपनय शिरसस्तूर्णमेनामिदानी-

मेवं मोक्तो भवान्या प्रतिवचनजड़ः पातु वो मन्मथारिः॥

सेयमनिर्वाहादनिर्व्यूढेतिवक्रोक्ति नाम वाकोवाक्यम्। ते इमे उभे
अपि प्रपञ्चवक्रोक्ती भवतः॥ सैयात्योक्ति द्विधा स्वाभाविकी नैमि-

न्तिकी चेति। तयोः स्वाभाविकी यथा,—

नादेयं किमिदं जलं, घटगतं नादेयमेवोच्यते,
सत्यं नाम पिबामि, कत्यपटपः पीतेन नाम्नाभवन्।
किं वर्णा अपि सन्ति नाम्नि, रचितं किं तैरलं त्वं कुतो,
यस्मादेव भवान्, भगिन्यसि ततस्तेनैव मां बाधसे॥

अत्र स्वैरिण्याः सहजात् वैयात्यात् स्वाभाविकीयं वैयात्योक्ति नाम वाकोवाक्यम्॥

नैमित्तिकी यथा,—

कुशलं राधे, सुखितोऽसि कंस, कंसः क्व नु क्व सा राधा।
इति पारीप्रतिवचनै र्विलक्षहासो हरि र्जयति॥

अत्र गोत्रस्खलिते विपक्षनाम्नैव वैयातेप्रनोत्तरं दत्तमिति नैमित्तिकीयं वैयात्योक्ति र्वाकोवाक्यम्॥

गूढोक्ति र्द्विधा मुख्या गौणी च। तयो र्मुख्या यथा,—

केशव यमुनातीरे व्याहृतवानुषसि हंसिकां कोऽद्य।
कान्ताविरहभयातुरहृदयः प्रायः प्रिये ऽहं सः॥

अत्र प्रिये हंस इत्यत्रावर्णलोपे प्रिये अहं स इत्यर्थस्य मुख्ययैव वृत्त्या गूढत्वादियं मुख्या गूढोक्ति र्नाम वाकोवाक्यम्॥

गौण्या यथा,—

निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम्।
उत्पत्तिरिन्दोरपि निष्फलैव दृष्टा विनिद्रा नलिनी न येन॥

ताविमौ पूर्वोत्तरार्द्धयोरन्योन्योक्त्या गूढकामलेखावितीयं गौणी गूढोक्ति र्नाम वाकोवाक्यम्॥

प्रश्नोत्तरोक्ति र्द्विधा, अभिधीयमानच्छाया प्रतीयमानच्छाया च। तयोराद्या यथा,—

क्व प्रस्थितासि करभोरु घने निशीथे
प्राणाधिको वसति यत्र जनः प्रियो मे।

एकाकिनी वद बिभेपि कथं न बाले
ननूस्ति पुङ्खितशरो मदनः सहायः ॥

सेयं छन्नतप्रष्टव्यस्यैव स्पष्टमभिधयैव अभिधानादभिधीयमानछ्द्मा नाम प्रश्नोक्ति र्वाकोवाक्यम् ॥

द्वितीया यथा,—

कियन्मात्रं जलं विप्र जानुदघ्नं नराधिप ।
तथापीयमवस्था ते न हि सर्वे भवादृशाः ॥

सेयं शब्दविद्याविशारदस्यत्र छ्द्मत्र प्रतीयमानत्वात् प्रतीयमानछ्द्मा नाम प्रश्नोक्ति र्वाकोवाक्यम् ॥

चित्रोक्ति र्द्विधा चित्रा विचित्रा च । तयोराद्या यथा,—

लभ्यन्ते यदि वाञ्छितानि यमुनाभागीरथीसङ्गमे
देव प्रेष्यजनस्तदेष भवतो भर्त्तव्यतां वाञ्छति ।
ननु सन्मरणेन किं नु मरणं कायान्मनोविच्युतिं-
र्दीर्घं जीव मनस्तवाङ्घ्रिकमले कायोऽत्र नस्तिष्ठति ।

तदिदं सङ्कल्पितोक्तिप्रत्युक्तिभ्यां जीवतोऽपि जन्मान्तरफलावाप्तिसाधनेनाश्चर्यहेतुरिति चित्रा नाम चित्रोक्ति र्वाकोवाक्यम् ।

द्वितीया यथा,—

कोऽयं भामिनि, भूषणं कितव ते, घोषः कथं, कुङ्कमात्,
कूर्पासान्तरितः प्रिये विनिमयः, पश्चापरं कास्ति मे ।
पश्यामीत्यभिधाय सान्द्रपुलको मृद्नन् मृडान्याः स्तनौ
हस्तेन प्रतिनिर्जितेन्द्रवनितात् दूयते हसन् वो हरः ॥

अत्र उक्तिप्रत्युक्त्योरनन्तरं स्तनमर्दनवैचित्र्यादिना परिसमाप्तेर्विचित्रोक्तिसंज्ञमिदं वाकोवाक्यम् ।

प्रहेलिका सकृत् प्रश्नः सापि षोढ़ा च्युताक्षरा ।
दत्ताक्षरोभयं मुष्टि र्बिन्दुमत्यर्थवत्यपि ॥ १४८ ॥

क्रीड़ागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे।
परव्यामोहने चापि सोपयोगाः प्रहेलिकाः॥ १५०॥

तासु च्युतताक्षरा यथा,—

पयोधरभराक्रान्ता संनमन्ती पदे पदे।
पदमेकं न का याति यदि हारेण वर्जिता॥

अत्र विहङ्गिका काहारेण वर्जिता न यातीति वक्तव्ये हारेण वर्जिते-त्युक्तम्। अतः केत्यक्षरस्य च्युतत्वात् च्युतताक्षरेयम्॥

दत्ताक्षरा यथा,—

कान्तयानुगतः कोऽयं पीनस्कन्धो मदोद्धतः।
मृगाणां पृष्ठतो याति शंवरो रूढयौवनः॥

अत्र शवर इति शंवर इत्यनुस्वाराक्षरस्य दत्तत्वाद्दत्ताक्षरेयम्॥

च्युतदत्ताक्षरा यथा,—

विदग्धः सरसो रागी नितम्बोपरिसंस्थितः।
तनुङ्गयालिङ्गितः कण्ठे कलं कूजति को विटः॥

अत्र विट इत्यस्मिन् पदे विकारे च्युते घकारे दत्ते घटः कूजति इति द्वितीयोऽर्थो भवतीति सेयं च्युतदत्ताक्षरा॥

अक्षरमुष्टि यथा,—

अतिः अतिः अन्न अलं मोद्य रदत्र जद्य फद्य।
मेला मेला मेलं मेलं फस फस फस फस॥

इयमक्षराणां मुष्टिरित्यक्षरमुष्टिका। अत्र पादप्रथमचतुष्पङ्क्तिलिखितायां चतुर्भिर्मुरजबन्धैः श्लोक उपतिष्ठति। स यथा,—

अद्य मे सफला प्रीतिरद्य मे सफला रतिः।
अद्य मे सफलं जन्म अद्य मे सफलं फलम्॥

विन्दुमती यथा,—

तवावदातः मत्यञ्चि पताकाः प्रतिसङ्गरम्।

फलं मत्यद्भुतोभायं यथासि न तु न क्वचित्॥

इत्यनेन श्लोकेनोक्तार्थस्य यथास्थितस्वरानुस्वारविसर्जनीयसंयोगस्य श्लोकान्तरस्य विन्दुभिरेव सूचनाक्रम इति विन्दुमती। तद् यथा,—

़ ००ा ़ ००ा ोाोा ो़़ ो़़ ००ः।
ोा०० ोा०० ि ोः ०० ० ०० ोोः॥

निर्भेदः, उदधावुदधावाद्या सं युगे संयुगे जयः।

साहसे साहसे सिद्धिः सर्वत्र तव कीर्त्तयः॥

अर्थप्रहेलिका यथा,—

उत्तप्तकाञ्चनाभासं संदष्टदशनच्छदम्।

सरसं चुम्बसे दृष्टे दृष्टैरपि किमुज्ज्वलम्॥

सेयमपि सूचितस्यैव पक्वाम्रफलमित्यस्य द्व्यर्थपदप्रयोगेणावगतेरर्थप्रहेलिका।

क्रियाकारकसम्बन्धपादाभिप्रायवस्तुभिः।
गोपितैः षड्विधं प्राहुः गूढं गूढार्थवेदिनः॥ १५१॥

तेषु क्रियागुप्तं यथा,—

स्तन जघनभराभिराममन्दं गमनमिदं मदिरारुणेक्षणायाः।
कथमिह सहसा विलोकयन्तो मदनशरज्वरजर्जरा युवानः॥

अत्र जघनभराभिराममन्दं मदिरारुणेक्षणाया गमनं विलोकयन्तो हे युवानः कथमिव यूयं मदनशरज्वरजर्जरा न स्थ इति क्रियापदस्य स्तनशब्देन जघनसान्निध्याद् गोपितेन क्रियागूढमिदम्।

कारकगुप्तं यथा,—

पिबतस्ते शरावेण वारि कह्लारशीतलम्।
केनेमौ दुर्विदग्धेन हृदये विनिवेशितौ॥

अत्र शराविति कर्मकारकस्य गूढत्वात् कारकगूढमिदम्।

सम्बन्धगूढं यथा,—

न मयागोरसाभिज्ञं चेतः कस्मात् प्रकुप्यसि।
अस्थानरुदितैरेभिरलमालोहितेक्षणे॥

अत्र न मे आगोरसाभिज्ञं चेत इति सम्बन्धिपदस्य मयेति तृतीयाभ्रान्त्या गोपितत्वादिदं सम्बन्धगूढम्।

पादगूढं यथा,—

दूरवियद्गामिनी तारसंरावविहृतश्रुतिः।
हैमीषुमाला शुशुभे——

अत्र पूर्वार्द्धस्थिते द्वितीयप्रथमसप्तमपञ्चमैकादशनवमत्रयोदशयोडशाक्षरैश्चतुर्थपादो गूढ उत्थाप्यः। यथा, विद्युतामिव संहतिरितीदं पादगूढम्।

अभिप्रायगूढं यथा,—

जइ देअरेण भणिआ खगान्धे त्तण राउलं वच्च।
ता किं सेवअ वङ्कए हसि जाण वलोइअं सअणम्॥

अत्र निरीक्षितमनेनात्र पुरुषायितलक्षपादलाक्षादिकं तेन नियुङ्क्ते मां न कर्कणीतत्रभिप्रायेण बध्वाः शयनावलोकनमित्यभिप्रायगूढम्।

वस्तुगूढं यथा,—

पानीयं पातुमिच्छामि त्वत्तः कमललोचने।
यदि दास्यसि नेच्छामि न दास्यसि पिवाम्यहम्॥

अत्र दास्यसीति दासीलक्षणस्य वस्तुनो गूढत्वादिदं वस्तुगूढम्।

यस्तु पर्यनुयोगस्य निर्भेदः क्रियते पदैः॥
विदग्धगोष्ठ्यां वाक्यैर्वा तं हि प्रश्नोत्तरं विदुः॥ १५२॥
अन्तःप्रश्नवहिःप्रश्नवहिरन्तःसमाह्वयैः।
जातिपृष्टोत्तराभिख्यैः प्रश्नैस्तदपि षड्विधम्॥ १५३॥

तेष्वन्तः प्रश्नं यथा,—

कान्दमक्षि गुहा वक्ति प्रश्नेऽसुखिन् किमुत्तरम्।
कथमुक्तं न जानासि कदर्थयसि यत् सखे॥

फलं मत्यद्भुतोपायं यशांसि न तु न क्वचित् ॥

इत्यनेन श्लोकेनोक्तार्थस्य यथास्थितस्वरानुस्वारविसर्जनीयसंयोगस्य श्लोकान्तरस्य विन्दुभिरेव सूचनात्मक इति विन्दुमती। तद् यथा,—

ृ०००ा ृ०००ा ०ा०ा ०ॅ०ॅ०ॅ ०ॅ०ॅ०ॅ ००:।
०ा००ॅ ०ा००ॅ ि०ि: ००ॅ० ०० ०ी०ॅ०:॥

निर्भेदः, उदधावुदधावाप्ता संयुगे संयुगे जयः।
साहसे साहसे सिद्धिः सर्वत्र तव कीर्त्तयः॥

अर्थप्रहेलिका यथा,—

उत्तप्तकाञ्चनाभासं संदष्टदशनच्छदम्।
सरसं चुम्बितं दृष्टैः दंष्ट्रैरपि किमुज्ज्वलम्॥

सेयमपि सूचितस्यैव पक्वाम्रफलमित्यस्य इदर्थपदप्रयोगेणावगतेरर्थप्रहेलिका।

क्रियाकारकसम्बन्धैः पादाभिप्रायवस्तुभिः।
गोपितैः षड्विधं प्राज्ञ गूढं गूढार्थवेदिनः॥ १५१॥

तेषु क्रियागुप्तं यथा,—

स्तन जघनभराभिराममन्दं गमनमिदं मदिरारुणेक्षणायाः।
कथमिह सहसा विलोकयन्तो मदनशरज्वरजर्जरा युवानः॥

अत्र जघनभराभिराममन्दं मदिरारुणेक्षणाया गमनं विलोकयन्तो हे युवानः कथमिव यूयं मदनशरज्वरजर्जरा न स्तेति क्रियापदस्य स्तन-शब्देन जघनसान्निध्याद् गोपितेन क्रियागूढमिदम्।

कारकगुप्तं यथा,—

पिबतस्ते शरावेण वारि कह्लारशीतलम्॥
केनेमौ दुर्विदग्धेन हृदये निनिवेशितौ॥

अत्र शराविति कर्मकारकस्य गूढत्वात् कारकगूढमिदम्।

सम्बन्धगूढं यथा,—

न मयागोरसाभिज्ञं चेतः कस्मात् प्रकुप्यसि।
अस्थानरुदितैरेभिरलमालोहितेक्षणे॥

अत्र न मे आगोरसाभिज्ञं चेत इति सम्बन्धिपदस्य मयेति तृतीयान्तान्तरा गोपितत्वादिदं सम्बन्धगूढम्।

पादगूढं यथा,—

दुर्वियद्‌गामिनी तारसंरावविहतश्रुतिः।
हैमीषुमाला शुशुभे——

अत्र पूर्वार्द्धस्थितैर्द्वितीयप्रथमसप्तमपञ्चमैकादशनवमत्रयोदशषोड़शाक्षरैश्चतुर्थपादो गूढ उत्थाप्यः। यथा, विद्युतामिव संहतिरितीदं पादगूढम्।

अभिप्रायगूढं यथा,—

जइ देअरेण भणिआ खग्गान्धे त्तण राउलं वच्च।
ता किं सेवअ वड्डए हसि ऊण वलोइअं सअणम्॥

अत्र निरीक्षितमनेनात्र पुरुषायितलक्षणपादलाक्षादिकं तेन नियुङ्क्ते मां न कर्म्मणीत्यभिप्रायेण वध्वाः शयनावलोकनमित्यभिप्रायगूढम्।

वस्तुगूढं यथा,—

पानीयं पातुमिच्छामि त्वत्तः कमललोचने।
यदि दास्यसि नेच्छामि न दास्यसि पिवाम्यहम्॥

अत्र दास्यसीति दासीलक्षणस्य वस्तुनो गूढत्वादिदं वस्तुगूढम्।

यस्तु पर्यनुयोगस्य निर्भेदः क्रियते पदैः॥
विदग्धगोष्ठ्यां वाक्यैर्वा तं हि प्रश्नोत्तरं विदुः॥ १५२॥
अन्तः प्रश्नवहिःप्रश्नवहिरन्तःसमाह्वयैः।
जातिपृष्टोत्तराभिख्यैः प्रश्नैस्तदपि षड्विधम्॥ १५३॥

तेष्वन्तः प्रश्नं यथा,—

काहमस्मि गुहा वक्ति प्रश्नेऽस्मिन् किमुत्तरम्।
कथमुक्तं न जानासि कदर्थयसि यत् सखे॥

अत्र कदर्थयसीति पदं कथमुक्तं रेफयकारयुक्तं दर्थयसीति सत्रात्। असौ वाक्यान्तरे प्रश्नोत्तरस्योक्तत्वाद् अन्तः प्रश्नमिदं।

बहिः प्रश्नं यथा,—

भद्र मानवकाख्याहि कीदृशः खलु ते पिता।
वेलान्दोलितकल्लोलः कीदृशश्च महोदधिः॥

अत्र मज्जन् मकर इत्यस्य उत्तरस्य प्रश्नाद्बहिरुक्तत्वाद् बहिःप्रश्नमिदम्।

बहिरन्तः प्रश्नं यथा,—

सुभद्रां क उपायंस्त प्रश्नेऽमुष्मिन् य उत्तरः।
स कीदृक् कपिमाचष्टे व्योम्नि पर्णस्थितिः कुतः॥

अत्र वायुत इत्युत्तरेण प्रश्नाद्बहिरुक्तेन यायुतो नरो वानरो भवतीति सुभद्रोपयन्तापुच्यते। तेन तत् बहिरन्तःप्रश्नं भवति।

जातिप्रश्नं यथा,—

कीदृशा भूमिभागेन राजा श्रान्तोऽनुमीयते।
ब्राह्मणं कुरुतेत्युक्ताः किमाहुस्तदनिच्छवः॥

"हेमवारकरञ्जिना नाजिरं करवामहे" इत्युत्तराभ्यां गतप्रत्यागताभ्यां प्रश्नोत्तरजातिरभिधीयते जातिप्रश्नमिदम्।

दृष्टप्रश्नं यथा,—

को सो जोअणवाउ को दण्डाणं दुवे सहस्साइं॥
का काली का मधुरा किं शुकदष्टकाननच्छायम्॥

अत्र य एव प्रश्नाः, कः स योजनपादः को दण्डानां द्वे सहस्रे इत्यादयः, त एव कोशो योजनपादः कोदण्डानां द्वे सहस्रे इत्यादीन्युत्तराणि भवन्ति। एवं काकाली कामधुरा किं शुकदष्टकाननच्छायमित्युत्तरं किमपि दृष्टमेषस्य प्रष्टव्यमिति दृष्टप्रश्नम्॥

उत्तरप्रश्नं यथा,—

किं वसन्तसमये वनमध्यः दृष्टवान् स दृशुलोमविलेखः।
उत्तरश्च किमवापतुरेतौ काननादतितिमिरादपि काली।

अत्र प्रश्नस्य हे काननाद हे तिमिराद पिकालीत्येतदपि कालीत्येतदेव उत्तरप्रश्नमिदम्॥

यद्विधौ च निषेधे च व्युत्पत्तेरेव कारणम्।
तदध्येयं विदुस्तेन लोकयात्रा प्रवर्त्तते॥ १५४॥
काव्यं शास्त्रेतिहासौ च काव्यशास्त्रं तथैव च।
काव्येतिहासः शास्त्रेतिहासस्तदपि षड्विधम्॥ १५५॥

तेषु काव्यं यथा,—

यदि स्मरामि तां तन्वीं जीविताशा कुतो मम।
अथ विस्मृत्य जीवामि जीवितव्यसनेन किम्॥

तदिदं उक्तिप्राधान्यात् काव्यमित्युच्यते॥

शास्त्रं यथा,—

स्निग्धोन्नताग्रतनुताम्रनखौ कुमार्याः
पादौ समोपचितचारुनिगूढगुल्फौ।
श्लिष्टाङ्गुली कमलकान्तितलौ च यस्या-
स्तामुद्वहेद्यदि भुवोऽधिपतित्वमिच्छेत्॥

अत्र स्निग्धत्वादेः शब्दप्राधान्यमिति शासनाच्छास्त्रमिदम्।

इतिहासो यथा,—

हिरण्यकशिपुर्दैत्यो यां यां स्मितापुरैक्षत।
भयाद्भ्रान्तैः सुरैश्चक्रे तस्यै तस्यै दिशे नमः॥

सोऽयमतीतार्थप्राधान्यादितिहासः॥

काव्यशास्त्रं यथा,—

नान्दीपदानि रतनाटकविघ्नशान्त्या-
वाद्याक्षराणि परमाण्यथ वा स्मरस्य।
दष्टेऽधरे प्रणयिना विधुताग्रपाणि-
सीत्कारशुष्करुदितानि जयन्ति नार्याः॥

अत्र काव्येन शास्त्रमभिहितम् इतीदं काव्यशास्त्रम् ॥

काव्येतिहासो यथा,—

स सञ्चरिष्णु भुवनान्तरेषु यां यदृच्छयाशिश्रयदाश्रयः श्रियाम्।
अकारि तस्मै मुकुटोपलस्खलत्करैस्त्रिसन्ध्यं त्रिदशैर्दिशे नमः ॥

अत्र प्राणुक्तस्यैवेतिहासार्थस्य काव्येनाभिधानात् काव्येतिहासोऽयम् ॥

शास्त्रेतिहासो यथा,—

धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ॥

अत्र धर्मार्थकाममोक्षाणामितिहासे निवेशितत्वात् अयं शास्त्रेतिहासः ॥

श्रव्यं तत् काव्यमाहुर्यन्नेक्ष्यते नाभिधीयते।
श्रोत्रयोरेव सुखदं भवेत् तदपि षड्विधम् ॥ १५६ ॥
आशीर्नान्दी नमस्कारो वस्तुनिर्देश इत्यपि।
आक्षिप्तिका ध्रुवा चेति शेषो ध्येयं भविष्यति ॥ १५७ ॥

तत्राशीर्यथा,—

भूयाद्वः श्रेयसे देवः पार्वतीदयितो हरः ॥
पातु वः परमं ज्योतिरवाङ्मनसगोचरः ॥

अत्र आशंसायां लिङ् लोट् च। तदिदं वाक्यद्वयमाशीः ॥

नान्दी यथा,—

भद्दं भोदु सरस्सईअ कइणो णन्दन्तु वासाइणो
अण्णाणं पि परं पअट्टउ वरा वाणी च्छइल्लप्पिआ।
वच्छोमी तह मागही फुरउ णो सा किं च पञ्चालिआ
रीदीओ विलिहन्तु कव्वकुसला जोण्हं चओरा विअ ॥

सेयं रङ्गमङ्गलान्तस्सरात्रयनं नान्दी।

नमस्कृति यथा,—

जयति प्रभुभूः शम्भुर्वन्देमहि महेश्वरम् ॥

इदं गुरुभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे ॥

सेयं स्तुति र्नमस्क्रिया नमस्कृतिरेव भवति ॥

वस्तुनिर्देशो यथा,—

असृग्दामजटाभारभ्रान्तगङ्गाम्बुशेखरः ।
आदिदेवो हरो नाम सृष्टिसंहारकारणम् ॥

सोऽयं कथाशरीरव्यापिनो वस्तुनो नायकस्य निर्देशो वस्तुनिर्देशः ॥

आक्षिप्तिका यथा,—

पअपीडिअमहिसासुरदेहेहिं
भुअणभअलुआवससिलेहेहिं ।
सुरसुहदेत्तवलिअधवलच्छिहिं
जअइ सहास वअणु महलच्छिहिं ॥

सेयमभिधित्सितरागविशेषप्रयोगमात्रफलं वचनमाक्षिप्तिका ।

ध्रुवा यथा,—

मअवहणिमित्तणिग्गअमइंदसुसं गुरुं णिएऊण ।
लद्धावसरो गहिउण मोत्तिआइं गओ वाहो ।

सेयं पात्रप्रवेशरसानुसन्धानादिप्रयोजना ध्रुवा ।

यदाङ्गिकैकनिर्वर्त्यमुज्भितं वाचिकादिभिः ।
नर्त्तकैरभिधीयेत प्रेक्षणाचेडिकादि तत् ॥ १५८ ॥
तल्लास्यं ताण्डवं चैव छलिकं सम्पया सह ।
हल्लीसकं च रासञ्च षट्प्रकारं प्रचक्षते ॥ १५९ ॥

तेषु लास्यं यथा,—

उज्झिउवालियिअ पंथहिं जंतउ ।
पेक्खमि हत्थ होइ जइ लोअणवन्तउ ॥

तदिदं श्रृङ्गाररसप्रधानत्वात् लास्यम् ॥

ताण्डवं यथा,—

सुअवहवहूअर णिसुणिअ दारुणरोसविसट्टपहरहिरारुण ।
जलिउ जाणइ णइ रिउसंतावणुअणलसरिच्छ जे होइ महारुणु ॥

इदं वीररसप्रधानत्वात् ताण्डवम् ।

छलिकं यथा,—

णिसुणिउ पच्छा तुरअरउ भुणिउ हिं सि हसन्ति ।
णिअकन्त जाइजुअलेहिं पुणु पुणु थ थ उसन्ति ॥

इदन्तु शृङ्गारवीरप्रधानत्वाच्छलिकम् ॥

सम्पा यथा,—

बीहेमि हरिसुहि अइ होहि मं गले लेहि सइ ।
कन्दइ रिट्ठासुरमारिउ कण्ठवलिउ ण यइ ॥

तदिदं छलिकमेव किन्नरविषयं सम्पा ।

हल्लीसकं यथा,—

चन्दणधूसरअं आउलिअलोअणअं
हासपरं मुहअं णीसासकिलासिअअं ।
कुम्भणकुम्भणअं संकामिअमण्डणअं
माणिणिआणणअं किं तुज्झ करट्ठिअअं ॥

मण्डलेन तु यत् स्त्रीणां नृत्यं हल्लीसकन्तु तत् ।
तत्र नेता भवेदेको गोपस्त्रीणां हरिर्यथा ॥ १६० ॥

हल्लीसकमिदम् ॥

रासोयथा,—

अइ कुम्भणकुम्भणआ अज्ज किं णो पुच्छामि तुमं ।
ण जिविज्जइ जेण विलासो पलिहिज्जइ की स जणो

तदिदं हल्लीसकमेव तालबन्धविशेषयुक्तं रास इत्युच्यते ।

अङ्गवाक्सत्त्वजाहार्यजाः सामान्यचित्र इत्यमी ।
षडत्राभिनयास्तद्दभिनेयं वचो विदुः ॥ १६१ ॥

तेष्वाङ्गिकाभिनयवद् यथा,—

दोर्दण्डाः क्व हलाङ्कदाः क्व च शिरानद्धौ भुजौ द्वाविमौ
वक्त्राणि क्व नु कान्तिमन्ति बलिमत् क्वेदं ममेदं मुखम् ।
यावन्तः क्व जितार्णवध्वनिधनाः क्वायं वचःसंयमो
हेलाकम्पितभूधरः क्व चरणन्यासः क्व मन्दा गतिः ॥

अत्राङ्गिकाभिनयानां प्रतिपादितत्वाद् इदमाङ्गिकाभिनयम् ॥

वाचिकाभिनयवद् यथा,—

दुर्वारां मदनज्वरव्यथां वहन्त्या तन्वङ्ग्या यदभिहितं पुरः सखीनाम् ।
तद्भूयः शिशुशुकसारिकाभिरुक्तं धन्यानां श्रवणपथातिथित्वमेति ॥

अत्र वाचिकाभिनयानां प्रतिपादनादिदं वाचिकाभिनयम् ॥

सात्त्विकाभिनयवद् यथा,—

वारं वारं तिरयति दृशोरुद्गमो वाष्पपूरः
तत्संकल्पोपहितजडिमस्तम्भमभ्येति गात्रम् ।
सद्यः स्विद्यन्नयमविरतोत्कम्पलोलाङ्गुलीकः
पाणिर्लेखाविधिषु न तरां वर्त्तते किं करोमि ॥

अत्र वाष्पजाड्यस्तम्भस्वेदकम्पानां प्रतिपादितत्वादिदं सात्त्विकाभिनयम् ॥

आहार्याभिनयवद् यथा,—

चूडाचुम्बितकङ्कपत्त्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोमपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम् ।
मौर्वीमेखलया नियन्त्रितमधोवासश्च माञ्जिष्ठकम्
पाणौ कार्म्मुकमक्षसूत्रवलये दण्डोऽपरः पैप्पलः ॥

अत्राहार्याभिनयानां प्रतिपादितत्वादिदमाहार्याभिनयम् ।

सामान्याभिनयवद् यथा,—

राहोश्चन्द्रकलामिवाननचरीं दैवात् समासाद्य मे
दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम् ।

आतङ्काद् विकलं द्रुतं करुणया विक्षोभितं विस्मयात्
क्रोधेन ज्वलितं मुदा विकसितं चेतः कथं वर्त्ताम् ॥

अत्र चतुर्णामभिनयानां प्रयोगादिदं साम्यान्याभिनयम् ॥

चित्राभिनयवद् यथा,—

व्यतिकर इव भीमस्तामसो वैद्युतश्च
क्षणमुपहतचक्षुर्वृत्तिरुद्भय भ्रान्तः ।
कथमिह न वयस्यस्तत् किमेतत् किमन्यत्
प्रभवति हि महिम्ना स्वेन योगेश्वरीयम् ॥

अत्र हस्ताध्यायपदाध्याययोः कथितत्वाच्चित्राभिनयमिदम् ॥

चतस्रो विंशतिश्चैताः शब्दालङ्कारजातयः ।
शब्दसन्दर्भमात्रेण हृदयं हर्त्तुमीशते ॥ १६२ ॥

इति श्रीमहाराजाधिराजश्रीमद्भोजराजविरचिते सरस्वतीकण्ठभरणे
शब्दालङ्कारनिर्णयो नाम द्वितीयः परिच्छेदः ॥

---

अलमर्थमलङ्कर्तुं यद् व्युत्पत्त्यादिवर्त्मना ।
ज्ञेया जात्यादयः प्राज्ञैस्तेऽर्थालङ्कारसंज्ञया ॥ १ ॥
जाति विभावना हेतुरहेतुः सूक्ष्ममुत्तरम् ।
विरोधः सम्भवोऽन्योन्यं परिवृत्ति र्निदर्शना ॥ २ ॥
भेदः समाहितं भ्रान्ति वितर्कौ मीलितं स्मृतिः ।
भावः प्रत्यक्षपूर्व्वाणि प्रमाणानि च जैमिनेः ॥ ३ ॥
तेषु, नानावस्थासु जायन्ते यानि रूपाणि वस्तुनः ।
स्वेभ्यः स्वेभ्यो निसर्गेभ्यस्तानि जातिं प्रचक्षते ॥ ४ ॥
अर्थव्यक्तेरियं भेदमियता प्रतिपद्यते ।
जायमानमियं वक्ति रूपं सा सार्वकालिकम् ॥ ५ ॥

स्वरूपमाश्रयो हेतुरिति तद्भेदहेतवः।
ते संस्थानादयस्तेषु सा विशेषेण शोभते ॥ ६ ॥
तत्र स्वरूपसंस्थानमवस्थानं तथैव च।
वेशो व्यापार इत्याद्यैः प्रभेदै र्बहुधा स्थितम् ॥ ७ ॥
मुग्धाङ्गनार्भकस्तिर्यङ्नीचपात्राणि चाश्रयः।
देशः कालश्च शक्तिश्च साधनानि च हेतवः ॥ ८ ॥

तेषु संस्थानं यथा,—

स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम्।
ददर्श चक्रीकृतचारुचापं प्रहर्त्तुमभ्युद्यतमात्मयोनिम् ॥

अत्र धनुर्धरेणैवमङ्गानि सम्यग् बुद्धिपूर्वकं स्थापनीयानीति संस्थानमिदं जातिभेदः ॥

अवस्थानभेदेन यथा,—

पादावष्टम्भनम्रीकृतमहिषतनोरुल्लसद्बाहुमूलम्
शूलं प्रोल्लासयन्त्याः सरलितवपुषो मध्यभागस्य देव्याः।
विश्लिष्टस्पष्टदृष्टोन्नतविरलवलिव्यक्तगौरान्तराला-
स्तिस्रो वः पान्तु लेखाः क्रमवशविकसत्कञ्चुकप्रान्तमुक्ताः ॥

अत्र स्त्रियाः शूलप्रोल्लासनादौ व्यापारे बुद्धिकारितमपि शरीरावस्थानमीदृशं जायते इतीदमवस्थानं नाम जातिभेदः ॥

वेशो यथा,—

छणपिट्ठधूसरत्थणि मह्रमअअम्बच्छि कुवलआहरणे।
कण्ण कआ चुअमञ्जरि पुत्ति तुए मण्डिओ गामो ॥

अत्र वसन्तोत्सवे ग्रामतरुणीनामयं वेशो जनमनःप्रमोदाय जायते इति वेशो नामायं जातिभेदः ॥

व्यापारो यथा,—

अग्रे गतेन वसतिं परिगृह्य रम्या-
मापात्य सैनिकनिराकरणाकुलेन।

यान्तोऽन्यतः पुलकतस्वरमाशु दूरा-
दुद्वाङ्गनाशुङ्कविरे मुकुराश्ववर्ग्याः ॥

अत्र नाहग्व्यापारे व्याष्टतानामीदृशमेव स्वरूपं जायत इति व्यापार नामायं जातिभेदः ॥

आश्रयेषु मुग्धयुवति यथा,—

सहिमाहि भम्ममाणायणए लग्गं कुसुम्भ उप्फन्ति ।
मुद्धवहुआ हसिज्जइ पप्फोडन्ती णहसवयाइं ॥

अत्र मुग्धवध्वाश्रितक्रियास्वरूपभणनादियं मुग्धाङ्गनाश्रिता जातिः ॥

अर्भकाश्रिता यथा,—

आक्रोशन्नाह्वयन्नन्यान्नाधावन् मण्डलं रुदन् ॥
गाः कालयति दण्डेन डिम्भः शस्यावतारिणीः ।

अत्रार्भकाश्रितव्यापारस्वरूपोक्तेरियमर्भकाश्रिता जातिः ॥

तिर्यग्गाश्रया यथा,—

लीढव्यस्तविपाण्डुरायनखयोराकीर्णदीर्णं मुखम्
विन्यस्याग्रिमयो र्युगे चरणयोः सद्यो विभिन्नद्विपः ।
एतस्मिन्मदगन्धवासितसटः सावज्ञतिर्यग्वलत्-
स्कान्ताहतिधूतलोलमधुपः कुञ्जेषु शेते हरिः ॥

अत्र सिंहस्वरूपभणनादियं तिर्यग्गाश्रया जातिः ॥

नीचाश्रया यथा,—

भद्रं ते सदृशं यदध्वगशतैः कीर्त्तिस्तवोद्घुष्यते
स्थाने रूपमनुत्तमं सुकृतिना दानेन कर्णो जितः ।
इत्यालोच्य चिरं दृशा करुणया शीतातुरेण स्तुतः
पान्थेनैकपलालमुष्टिरुचिना गर्वायते हालिकः ॥

अत्र हीनपात्रहालिकस्वरूपोक्तेरियं नीचाश्रया जातिः ॥

अथ हेतवः ॥ तेषु देशो यथा,—

इमास्ता विन्ध्याद्रेः शुकहरितवंशीवनघना

भुवः क्रीड़ालोलद्विरदरदनारुग्णतरवः।
लताकुञ्जे यासामुपनदि रतक्लान्तशवरी-
कपोलस्वेदाम्भःपरिचयतुदो वान्ति मरुतः॥

अत्र विन्ध्याद्रेरीदृशेषु प्रदेशेषु इत्थम्भूता वायवो वान्तीति हेतुत्वेनोक्तत्वात् देशस्य देशहेतु र्जातिरियम्॥

कालहेतु र्यथा,—

कम्पन्ते कपयो भृशं जलकृशं गोऽजाविकं ग्लायति
श्वा चुल्लीकुहरोदरं चणमपि चिप्तोऽपि नैवोज्झति।
शीतार्त्तिव्यसनातुरः पुनरयं दीनो जनः कूर्म्मवत्
स्वान्यङ्गानि शरीर एव हि निजे निह्नोतुमाकाङ्क्षति॥

अत्र हेमन्तहेतुकतिर्य्यग्गाद्याश्रयव्यापारस्वरूपोक्तेरियं कालहेतु र्नाम जातिः॥ शक्ति र्यथा,—

बध्नन्नङ्गेषु रोमाञ्चं कुर्व्वन् मनसि निर्वृतिम्।
नेत्रे निमीलयन्नेष प्रियास्पर्शः प्रवर्त्तते॥

अत्र रोमाञ्चबन्धादिषु प्रियास्पर्शप्रवृत्ते र्निमित्तस्योक्तत्वादियं शक्तिहेतु र्नाम जातिः॥

साधनहेतु र्यथा,—

उपनिहितहलीषासार्गलद्वारमारात्
परिचकितपुरन्ध्रीसारिताभ्यर्णभाण्डम्।
पवनरयतिरश्ची र्वारिधाराः प्रतीच्छन्
विशति बलितश्रृङ्गः पामरागारमुचा॥

अत्र जायमानक्रियाहेतुभूतयोः कर्त्तृकर्म्मणोः साधनयोः स्वरूपवर्णनादयं साधनहेतु र्नाम जातिभेदः॥

प्रसिद्धहेतुव्यावृत्त्या यत् किञ्चित् कारणान्तरम्।
यत्र स्वाभाविकं वापि विभाव्यं सा विभावना॥ ८॥
शुद्धा चित्रा विचित्रा च त्रिविधा सा निगद्यते।

शुद्धा यत्रैकमुद्दिश्य हेतुरेको निवर्त्तते ॥ १० ॥
अनेको यत्र सा चित्रा विचित्रा यत्र तां प्रति ।
तयान्यया वा गौभिङ्गचा विशेषः कश्चिदुच्यते ॥ ११ ॥

तत्र कारणान्तरविभावनायां शुद्धा यथा,—

अपीतचीवकादम्बमसंसृष्टामलाम्बरम् ।
अप्रसादितसूक्ष्माम्बु जगदासीन्मनोहरम् ॥

अत्रैकं कादम्बादिकमुद्दिश्य चीवतादेः पीतत्वादिरेकैकः प्रसिद्धहेतु र्व्यावर्त्त्यते, हेत्वन्तरञ्च शरत्प्रभावो विभाव्यते । सेयं शुद्धा नाम कारणविभावनायां विभावना ।

स्वाभाविकत्वविभावनायां शुद्धा यथा,—

अनञ्जिता ऽसिता दृष्टिर्भूरनावर्जिता नता ।
अरञ्जिताऽरुणश्चायमधरस्तव सुन्दरि ॥

अत्रैकैकं दृष्ट्यादिकमुद्दिश्यासितत्वादेरञ्जितत्वादिरेकैको हेतु र्व्यावर्त्त्यते, स्वाभाविकत्वञ्चासितत्वादिदृष्ट्यादे र्विभाव्यते । सेयं शुद्धा नाम स्वाभाविकत्वविभावनायां विभावना ॥

कारणान्तरविभावनायां चित्रा यथा,—

असम्भृतं मण्डनमङ्गयष्टे रनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात् परं साऽथ वयः प्रपेदे ॥

अत्रैकमेव यथोक्तलक्षणं पदार्थमुद्दिश्याप्यनेको मण्डनादेः प्रसिद्धो हेतुः संभृतत्वादि र्व्यावर्त्त्यते, कारणान्तरञ्च स्तनोद्भेदाद्युपचयलावण्यलक्ष्मीलाभादि र्विभाव्यते । सेयं चित्रा नाम कारणान्तरविभावना ॥

सैव स्वाभविकत्वविभावनायां यथा,—

णमह अचिट्ठिअतुङ्गं अविसारिअवित्थअं अणोणअगहिरं ।
अप्पलहुअपरिसरापं अणाअपरमत्थपाअडं महुमहणं ॥

अत्रैकमेव मधुमथनमुद्दिश्यानेकस्तुङ्गत्वादेः प्रवृद्धत्वादिः प्रसिद्धो हेतु र्व्यावर्त्त्यते, स्वाभाविकत्वञ्च तं प्रत्येतपो विभाव्यते । सेयं चित्रा नाम

स्वाभाविकत्वविभावनायां विभावना।

तथैव गीर्भङ्ग्या यथा,—

वक्त्रं निसर्गसुरभि वपुरव्याजसुन्दरम्।
अकारणरिपुस्तस्या निर्निमित्तं सुहृच्च मे॥

अत्रोत्तरयो र्विरहसमागमादिकारणान्तरविभावनयोः स्वाभाविकीभ्यां प्राग्विभावनाभ्यां यथासङ्ख्यं विशेष उक्तः। सेयं विभावनयैव विभावनायां विशेषोक्तेस्तथैव गीर्भङ्ग्या विचित्रा नाम विभावना भवति॥

सैवान्यया गीर्भङ्ग्या यथा,—

वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः।
भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः॥

अत्रातैलपूराः सुरतप्रदीपा इति स्वाभाविकत्वविभावनायां शेषपदार्थैरविभावनारूपे विशेष उक्तः। सेयमन्यया गीर्भङ्ग्या विचित्रा नाम विभावना भवति॥

क्रियायाः कारणं हेतुः कारको ज्ञापकश्च सः।
अभावश्चित्रहेतुश्च चतुर्विध इहेष्यते॥ १२॥
यः प्रवृत्तिं निवृत्तिञ्च प्रयुक्तिं चान्तरा विशन्।
उदासीनोऽपि वा कुर्यात् कारकं तत् प्रचक्षते॥ १३॥

तेषु प्रवर्त्तकः क्रियाविष्टो यथा,—

अयमान्दोलितप्रौढचन्दनद्रुमपल्लवः।
उत्पादयति सर्वस्य प्रीतिं मलयमारुतः॥

सोऽयं यथोक्तो मलयमारुतः प्रीत्युत्पादनक्रियासमावेशात् प्रवर्त्तको नाम कारकहेतुभेदः।

स एव क्रियानाविष्टो यथा,—

तस्य राज्ञः प्रभावेन तदुद्यानानि जज्ञिरे।
आर्द्रांशुकप्रवालानामास्पदं सुरशाखिनाम्॥

अत्र भावः क्रियायामनिविशमान एव हेतौ तृतीयां प्रयोजयति न कर्त्तरीति क्रियायामनाविष्टोऽयं कारकहेतुभेदः ॥

निवर्त्तकक्रियाविष्टो यथा,—

चन्दनारण्यमाधूय स्पृष्ट्वा मलयनिर्झरान् ।
पथिकानां प्रमाथाय पवनोऽयमुपस्थितः ॥

अत्रैवंविधस्य पवनस्य पथिकप्रमाथसाधनक्रियायां कर्तृत्वेनावेशान्निवर्त्तको नामायमाविष्टक्रियः कारकहेतुभेदः ॥

स एव क्रियानाविष्टो यथा,—

प्रजागरात् खिलीभूतस्तस्याः स्वप्नसमागमः ।
बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥

अत्र समागमनिवृत्तावनिविशमानः प्रजागरः तृतीयार्थे पञ्चमीं प्रयोजयति । बाष्पः पुन र्दानक्रियावेशाद्दर्शनक्रियायामनाविशत् कर्मसम्बन्धात् तामप्रधानभावेन चोपगृह्णाति । इत्यनाविष्टक्रियो नाम निवर्त्तकोऽयं कारकहेतुभेदः ।

प्रयोजकः क्रियाविष्टो यथा,—

तस्मिन् जीवति दुर्द्धर्षे हतमप्यहतं बलम् ।
हनूमत्युज्झितप्राणे जीवन्तोऽपि मृता वयम् ।

अत्र बलमृत्युज्जीवनमरणक्रिययोः सप्तमीवाच्यनैमित्तिकाधिकरणकारकभावेन हनूमानाविशन् प्रयोजको भवतीति क्रियाविष्टोऽयं प्रयोजको नाम कारकहेतुभेदः ॥

स एव क्रियानाविष्टो यथा,—

मानयोग्यां करोमीति प्रियस्थाने स्थितां सखीमम् ।
बाला भ्रूभङ्गजिह्माक्षी पश्यति स्फुरिताधरा ॥

अत्र मानाभ्यासक्रियाया भ्रूभङ्गजिह्माक्षिप्रेक्षणादिरूपाया आत्मनेऽयवात्मनः समावेशो न भवतीति क्रियानाविष्टोऽयमिति शब्दाभिधेयप्रयोजको

नाम कारकहेतुभेदः ॥

द्वितीया च तृतीया च चतुर्थी सप्तमी च यम् ।
क्रियानाविष्टमाचष्टे लक्षणं नायकश्च सः ॥ १४ ॥

स द्वितीयावाच्यो यथा,—

तां प्रत्यभिव्यक्तमनोरथानां महीपतीनां प्रणयाग्रदूत्यः ।
प्रवालशोभा इव पादपानां शृङ्गारचेष्टा विविधा बभूवुः ॥

अत्र क्रियानाविष्टतयैव इन्दुमत्यां महीपतीनां शृङ्गारचेष्टा भवन्त्यो लक्ष्यन्ते । सोऽयं लक्षणहेतुः प्रतिना योगे द्वितीयामुत्पादयति ।
तृतीयावाच्यमित्थम्भूतलक्षणं यथा,—

कण्ठेकालः करस्थेन कपालेनेन्दुशेखरः ।
जटाभिः स्निग्धताम्राभिराविरासीद् वृषध्वजः ॥

अत्र कण्ठेकाल इत्यादीनि क्रियायामनिविशमानान्येव वृषध्वजं विज्ञापयन्ति, यथा जटाभिस्तापस इति ।
तृतीयावाच्य एव अङ्गविकारलक्षणं यथा,—

स बाल आसीद्वपुषा चतुर्भुजो मुखेन पूर्णेन्दुनिभस्त्रिलोचनः ।
युवा कराक्रान्तमहीभृदुच्चकैरसंशयं सम्प्रति तेजसा रविः ॥

अत्र वपुषा चतुर्भुजो मुखेन त्रिलोचनस्तेजसा रविरित्यङ्गविकारैरङ्गिनो विकृति र्लक्ष्यते, यथाक्ष्णा काण इति ॥
चतुर्थीवाच्यमुत्पातलक्षणं यथा,—

गोनासाय नियोजितागदरजाः सर्पाय बद्धौषधिः ।
कण्ठस्थाय विषाय वीर्यमहते पाणौ मणीन् बिभ्रती ।
भर्त्तुं र्भूतगणाय गोत्रजरतीनिर्दिष्टमन्त्राक्षरा
रक्षत्वद्रिसुता विवाहसमये प्रीता च भीता च वः ॥

अत्र गोत्रजरत्या विवाहमङ्गलानौचित्येनोत्पातरूपैरगदरजोनियोगादिभि र्भगवद्भूता गोनासाद्यो ज्ञाप्यन्ते । यथा वाताय कपिला विद्युत्-

दिति । ततश्चोत्पातेन ज्ञाप्यमान इति सम्बन्धस्योभयनिष्ठत्वात् तादर्थ्य इव लक्ष्यवाचिनश्चतुर्थी न लक्षणवाचिनः । तृतीयाविषयापहारः एकयैव विभक्त्या उभयगतस्यापि सम्बन्धस्य राज्ञः पुरुष इतिवदुक्तत्वात् तृतीयापि न भवति ॥

सप्तमीवाच्यं भावलक्षणं यथा,—

इति ग्रासति सेनान्यां गच्छतस्ताननेकधा ।
निषिध्य हसता किञ्चित् तस्थे तत्रान्धकारिणा ॥

अत्र सेनान्यः पलायमानगणानुशासनक्रिययान्धकारेः स्वप्रकाशनक्रिया लक्ष्यते। यथा गोषु दुह्यमानासु गत इति । उपलक्षणञ्चैतत् । तेनान्यदपि भावलक्षणं श्लाद्यभिधेयमुपलक्ष्यते यथात्रैव हसता तस्थे इति । यथा वा,

यज्वभिः संभृतं हव्यं विततेष्वध्वरेषु सः ।
जातवेदोमुखान् मायी मिषतामाच्छिनत्ति नः ॥

इत्यनादरोपाधिके भावलक्षणे षष्ठ्यपि भवतीति ।

अभावः प्रागभावादिभेदैनेह चतुर्विधः ।
घटाभावादिभेदात्तु तस्य संख्या न विद्यते ॥ १५ ॥

तेषु प्रागभावो यथा,—

अनभ्यासेन विद्यानामसंसर्गेण धीमताम् ।
अनिग्रहेण चाक्षाणां व्यसनं जायते नृणाम् ॥

अत्र विद्यानभ्यासादेः प्रागभावस्य व्यसनादिकारणत्वं ॥

प्रध्वंसाभावो यथा,—

गतः कामकथोन्मादो गलितो यौवनज्वरः ।
क्षतो मोहश्च्युता तृष्णा कृतं पुण्याश्रमे मनः ॥

अत्र कामकथोन्मादगमनादेः प्रध्वंसाभावस्य पुण्याश्रमानुसन्धानकारणत्वम् ॥

इतरेतराभावो यथा,—

वनान्यमूनि न गृहाण्येता नद्यो न योषितः।
मृगा इमे न दायादास्तन्मे नन्दति मानसम्॥

अत्र वनानि अमूनि न गृहाणीत्यादेरितरेतराभावस्त्र मनःप्रमोदकारणत्वम्॥

अत्यन्ताभावो यथा,—

अत्यन्तमसदार्य्याणामनालोचितचेष्टितम्।
अतस्तेषु विवर्द्धन्ते निर्विबन्धा विभूतयः॥

अत्रानालोचितचेष्टितस्यात्यन्ताभावो विभूतीनां निर्विघ्नवृद्धिहेतुः।
एतेनाभावाभावोऽपि व्याख्यातः॥

तत्र प्रागभावाभावो यथा,—

उद्यानसहकाराणामनुद्भिन्ना न मञ्जरी।
देयः पथिकनारीणां सतिलः सलिलाञ्जलिः॥

अत्र वस्तुन उत्पादः प्रागभावाभाव उच्यते। तेनेह सहकारमञ्जरीणामुद्भेदस्य पथिकनारीणां मरणे कारणत्वम्॥

प्रध्वंसाभावाभावो यथा,—

पीनश्रोणि गभीरनाभि निभृतं मध्ये भृशोच्चस्तनम्
पायाद्वः परिरब्धमब्धिदुहितुः कान्तेन कान्तं वपुः।
स्वावासानुपघातनिर्वृतमनास्तत्कालमीलद्दृशे
यस्मै सोऽच्युतनाभिपद्मवसतिर्वेधाः शिवं ध्यायति॥

अत्र यथोक्तेन वपुषा योऽयमालिङ्गनेऽपि विधिनिवासनाभिपद्मानुपघातः, स इह वस्तुनोऽवस्थानमेव प्रध्वंसाभावाभाव उच्यते। स चेहाच्युतनाभिपङ्कजनिवासिनो विधेर्मनोनिर्वाणकारणं भवति।

विदूरकार्य्यः सहजः कार्य्यानन्तरजस्तथा।
युक्तो न युक्त इत्येवमसङ्ख्या विहहेतवः॥ १६॥

तेऽमी प्रयोगमार्गेषु गौणवृत्तिव्यपाश्रयाः।
कार्यज्ञाः काव्येषु वैचित्र्यं यथा ते कर्त्तुमीश्वते ॥ १७ ॥

तेषु विदूरकार्यज्ञो यथा,—

अनन्नुवानेन युगोपमानमलब्धमौर्वीकिणलाञ्छनेन।
अस्पृष्टखड्गत्सरुणापि चासीद्रक्षावती तस्य भुजेन भूमिः ॥

सोऽयं बाल्य एव नवयौवनकार्यप्रकरणात् विदूरकार्यो नाम चित्र-हेतुः ॥

सहजो यथा,—

सममेव समाक्रान्तं द्वयं द्विरदगामिना।
तेन सिंहासनं पित्र्यमखिलञ्चारिमण्डलम् ॥

अत्र राज्याभिषेकरिपुमण्डलाक्रमणयो र्हेतुहेतुमद्भावेन सत्यपि पौर्वापर्ये चिप्रकारित्वात्तुल्यमेव कार्यप्रकारणभावो विवचितः। तेन सहजो नामायं चित्रहेतुः ॥

कार्यज्ञानन्तरजो यथा,—

पश्चात् पर्यस्य किरणानुदीर्णं चन्द्रमण्डलम्।
प्रागेव हरिणाक्षीणामुदीर्णो रागसागरः ॥

अत्र चन्द्रोदयलक्षणाद्धेतोः पूर्वकालमेव रागसागर उदीर्ण इति कार्यस्य उदयलाभः। स इह गुणवृत्त्याश्रयणेन हेतावतिशयं पुष्पतीत्ययं कार्यज्ञानन्तरजो नाम चित्रहेतुः ॥

युक्तो यथा,—

गुणानुरागमिश्रेण यशसा ते प्रसर्पता।
दिग्वधूनां मुखे जातमकस्मादर्द्धकुङ्कुमम् ॥

अत्र दिग्वधूमुखेषु ते गुणानुरागः कुङ्कुमं यशस्तु चन्दनमित्ययं युक्तो नाम गौणवृत्तिव्यपाश्रयचित्रहेतुः ॥

नयुक्तो यथा,—

न मीलयति पद्मानि न नभोऽप्यवगाहते ।
त्वन्मुखेन्दुर्ममासूनां हरणायैव यस्यति ॥

अत्र मुखेन्दोः पद्मनिमीलादि न युज्यते इति नयुक्तो नाम चित्रहेतुः ॥
एवं शब्दस्य प्रकारवाचित्वात् व्यधिकरणादयः प्रयुज्यन्ते यथा—

सा वाला वयमप्रगल्भवचसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत् पयोधरयुगं धत्ते सखेदा वयम् ।
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयम्
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यङ्ग तम् ॥

अत्राभिव्यक्तमेव व्यधिकरणत्वं कार्यकारणयोः प्रतीयते इतत्रयं व्यधिकरणो नाम चित्रहेतुः ॥

वस्तुनो वा स्वभावेन शक्तेर्वा हानिहेतुना ।
असतालीयकार्यः स्यादहेतुर्व्याहृतस्तु यः ॥ १८ ॥

तत्रासतकार्यो वस्तुस्वभावेन यथा,—

न विरचिता ललाटतटलास्यकरी भ्रुकुटि-
र्न परुषमुक्तेन मधुरस्मितमन्तरितम् ।
न तव निशुम्भसम्भ्रमवशादपि दारुणया
भगवति चेष्टया कलुषितं वदनाम्बुरुहम् ॥

अत्र निशुम्भसम्भ्रमस्य हेतोरनुत्पादितभ्रुकुट्यादिदारुणचेष्टाद्वारेण भगवतीमुखाम्बुरुहकालुष्यस्य करणे यदसामर्थ्यं तत्र तन्मुखाख्यस्य वस्तुनः स्वभावो निमित्तमिति स्वभावादनुत्पादितकार्योऽयमहेतुः ॥
स एव शक्तेर्हानिहेतुना यथा,—

अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिश्चित्रा तथापि न समागमः ॥

अत्रानुरागवत्त्वतत्पुरःसरत्वयोः समागमहेत्वोः सामर्थ्यविघाते दैवगतिः कारणमिति शक्तेर्हानिहेतुनायमकृतस्वकार्यो नामाहेतुः ॥

वस्तुनः स्वभावेन व्याहतो यथा,—

नीवीबन्धोच्छ्वसनशिथिलं यत्र यक्षाङ्गनानाम्
क्षौमं रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु ।
अर्चिस्तुङ्गानभिमुखगतान् प्राप्य रत्नप्रदीपान्
ह्रीमूढानां भवति विफलप्रेरणा चूर्णमुष्टिः ॥

अत्र रत्नप्रदीपनिर्वापणे चूर्णमुष्टेरपरित्यक्तस्वरूपस्यापि विघाते रत्नप्रदीपाख्यवस्तुस्वभावः कारणमित्ययं वस्तु स्वभावेन व्याहतो नामाहेतुभूतः ।

स एव शक्तेर्हानिहेतुना यथा,—

शम्भोरुद्धतनृत्यकर्मणि करे कङ्कालमाद्यं हरेः
संघट्टस्फुटितेन्दुमण्डलगलत्पीयूषसञ्जीवितम् ।
सत्काजमणते सुरद्विपि नवे दृष्ट्वा विलासं श्रियः
कुर्व्यत्कोपकषायितेन मनसा मिथ्योत्प्लुतिः पातु वः ॥

अत्र कोपकषायितमनसस्तस्योत्प्लुतिकरणसमर्थस्यापीश्वरकरग्रहणाग्निभयापदाधीयमानः प्रतीतो व्याघातः । ततोऽयं शक्तेर्हानिहेतुना व्याहतो नामाहेतुभेदः ॥

यस्तु कारणमालेति हेतुसन्तान उच्यते ।
पृथक् पृथगसामर्थ्यात् सोऽप्यहेतो र्न भिद्यते ॥ १९ ॥
एकोऽभिधीयमानेषु हेतुत्वेषु भवेत्तयोः ।
प्रतीयमानेष्वपरः कारणत्वेषु जायते ॥ २० ॥

तयोराद्यो यथा,—

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणाधिके पुंसि जनोऽनुरज्यते जनानुरागप्रभवाश्च सम्पदः ॥

अत्र जितेन्द्रियत्वादीनामुत्तरोत्तरं प्रति हेतुभूतानामपि सम्पदुत्पत्तौ पूर्वपूर्वसव्यपेक्षायां समुदितानामेव कारणत्वं साधनादिपदैरभि-

धीयत इति सोऽयमभिधीयमानहेतुत्वं कारणमालेतरहेतुभेदः॥

द्वितीयो यथा,—

पीणत्तणदुग्गेज्जं जस्स भुरत्राअन्त णिट्ठुरपरिग्गाहिअं,

रिट्ठस्स विसमवलिअकंठं दुक्खेण जीवीअं वो लीणं॥

अत्र जीवितदुःखातिक्रमणे कण्ठस्य वलनं वलनस्य निष्ठुरग्रहणं निष्ठुरग्रहणस्यापि पीनत्वं दुर्विगाह्यत्वे हेतुरिति प्रतीयमानकारणत्वं कारणमालेत्यहेतुभेदः॥

इङ्गिताकारलक्ष्योऽर्थः सूक्ष्मः सूक्ष्मगुणात्तु सः।
सूक्ष्मः पुनश्च तः सूक्ष्मो ऽपुनश्च इति भिद्यते॥ २१॥
वाच्यः प्रतीयमानश्च सूक्ष्मोऽत्र द्विविधो मतः।
इङ्गिताकारलक्ष्यत्वं लक्ष्यसामान्यमेतयोः॥ २२॥

तत्रेङ्गितलक्ष्यमभिधीयमानसूक्ष्मं यथा,—

तां प्रत्यभिव्यक्तमनोरथानां महीपतीनां प्रणयाग्रदूत्यः।

प्रवालशोभा इव पादपानां शृङ्गारचेष्टा विविधा बभूवुः॥

अत्र स्वयंवरमिलितानां राज्ञां राजपुत्रीं प्रति प्राप्तिलक्षणस्य मनोरथस्याभिधीयमानस्य शृङ्गारचेष्टात्मकेनेङ्गितेन व्यक्तत्वादयमिङ्गितलक्ष्योऽभिधीयमानः सूक्ष्मभेदः॥

तदेवाकारलक्ष्यं यथा,—

सा यूनि तस्मिन्नभिलाषबन्धं शशाक शालीनतया न वक्तुम्।

रोमाञ्चलक्ष्येण स गात्रयष्टिं भित्त्वा निरक्रामदरालकेश्याः॥

अत्राभिलाषबन्धो रोमाञ्चलक्ष्येण गात्रयष्टिं भित्त्वा निरक्रामदित्यनेनाभिधीयमान आकारलक्ष्यः सूक्ष्मभेदोऽभिहितः॥

तदेवोभयलक्ष्यं यथा,—

तदर्पितहृशस्तस्या गीतगोष्ठ्यामवर्द्धत।

उद्दामरागपिशुना च्छाया कापि मुखाम्बुजे॥

अत्र सदर्पितहृत्स्य इतीङ्गितं, छाया कापि मुखाम्बुज इत्याकारः। ताभ्या-मुद्दामरागपिशुनेत्यनेनाभिधीयमानस्याननरागस्य सूक्ष्मरूपतयालक्ष्य-माणत्वादयमभिधीयमानोभयलक्ष्यः सूक्ष्मभेदः ॥

प्रतीयमानमिङ्गितलक्ष्यं यथा,—

वाहित्ता पडिवअणं ण देइ रूसेइ एक्कमेक्कम्मि ।

अज्जा वज्जेण विणा पइप्पमाणे णईकच्छे ॥

अत्र प्रतिवचनादानपरिजनप्रकोपाभ्यां प्रदीप्यमाने नदीकच्छ इति हेतुना प्रत्याय्यमानः सङ्केतकुञ्जाङ्गदाहोद्भववधूमनस्तापो वाक्यार्थत्वेन लक्षित इत्ययमिङ्गितलक्ष्यः प्रतीयमानः सूक्ष्मभेदः ॥

प्रतीयमानमेवकारलक्ष्यं यथा,—

सामाइ सामलीए अद्धच्छिपलोअमुहसोहा ।

जम्बूदलकअकण्णावअंसे भमिरे हलिअउत्ते ॥

अत्राद्धाक्षिप्रलोकनमुखश्यामताभ्यामाकाराभ्यां जम्बूदलकल्पितावतंस इत्यनेन प्रत्याय्यमानः सङ्केतगमनभ्रंशसम्भवः श्यामाया मनस्तापो लक्ष्यते इत्ययमाकारलक्ष्यः प्रतीयमानः सूक्ष्मभेदः ॥

सदैवोभयलक्ष्यं यथा,—

प्रयच्छतोच्चैः कुसुमानि मानिनी विपक्षगोत्रं दयितेन लम्भिता ।

न किञ्चिदूचे चरणेन केवलं लिलेख बाष्पाकुललोचना भुवम् ॥

अत्र चरणेन भूमिलिखनमिङ्गितं इयो र्बाष्पाकुलत्वमाकारस्ताभ्यां गोत्रस्खलनोद्भवो मानिन्या मनस्तापः प्रतीयमानो लक्ष्यते इत्ययं प्रतीय-मानमिङ्गिताकारलक्ष्यःसूक्ष्मभेदः ॥

पदार्थानान्तु यः सारस्तदुत्तरमिहोच्यते ।

सधर्मधर्मिरूपाभ्यां व्यतिरेकाच्च भिद्यते ॥ २३ ॥

तेषु धर्मस्वरूपं यथा,—

दानं वित्तादृतं वाचः कीर्त्तिधर्म्मौ तथायुषः ।

परोपकरणं कायादसारात् सारमुद्धरेत् ॥

अत्र दानसत्यकीर्त्त्यादीनां वित्तादिधर्मवस्तुधर्माणां सारभूतानामुद्धारादयं धर्मरूपः सारः ॥

धर्मिरूपो यथा,—

मधुविकचसितोत्पलावतंसं शशिकरपल्लवितश्च हर्म्यपृष्ठं।
मदनजनितविभ्रमा च कान्ता सुखमिदमर्थवतां विभूतयोऽन्याः ॥

अत्र मधुप्रभृतीनां विभूतिभ्यः सारभूतानामुद्धरणादयं धर्मिरूपः सारः ॥

अथ व्यतिरेकेण धर्मरूपो यथा,—

पोढमहिलाण जं जं सुसिक्खिअं तं रए सुहावेइ।
जं जं असिक्खिअं णववहूण तं तं रइं देइ ॥

अत्र प्रौढानां सुशिचितं सुरतकर्म्म अप्रौढस्त्रीणां पुनरशिचितं सुखयतीति कर्म्मान्तरलक्षणेभ्यो धर्मेभ्यः सुशिचिताशिचितरतकर्मलक्षणा धर्माः स्त्रीधर्माव्यतिरेकेण प्रतिपद्यत इति धर्मव्यतिरेकरूपोऽयं सारः ॥

व्यतिरेकेण धर्मिरूपो यथा,—

राज्ये सारं वसुधा वसुधायां पत्तनं पुरे सौधम्।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्व्वस्वम् ॥

अत्र वसुधादयो धर्मिण उत्तरोत्तरक्रमेण पूर्वतः पूर्वतो व्यतिरिच्यन्त इत्ययं धर्मिव्यतिरेकः सारः। एतेन धर्मधर्मिस्वरूपोऽपि व्याख्यातः। स द्विधा सामान्यतो विशेषतश्च। तत्र सामान्यतो यथा,—

गीतशीतांशुताम्बूलकर्पूरवनितादिभिः।
असारोऽप्ययं संसारः सारवानिव लक्ष्यते ॥

अत्र गीतादीनां जगतः सारभूतानामविशेषेणैव सर्वेषामुपादानाद्धेतुहेतीयान्ततया च संसारसारवत्त्वाङ्गभावादयं सामान्यतो धर्मधर्मिरूपः सारः।

विशेषतो यथा,—

अवैमि पूतमात्मानं द्वयेनैव द्विजोत्तमाः ।
मूर्द्धि गङ्गाप्रपातेन धौतपादाम्भसा च वः ॥

अत्र गङ्गाप्रपातमहर्षिपादोदकयो र्विशेषेण सारभूतयोरुपमानाद्विम-वतः पूतत्वे चाङ्गभूतत्वादयं विशेषतो धर्मधर्मिरूपः सारः ॥

विरोधस्तु पदार्थानां परस्परमसङ्गतिः ।
असङ्गतिः प्रत्यनीकमधिकं विषमश्च सः ॥ २४ ॥

तेषु विरोधः शुद्धो ग्रथितश्च । तयोराद्यो यथा,—

क्व युवतिमार्दवं क्व च महाहवदारुणता
क्व च वलयी करः क्व करिदन्तजमुष्टिरसिः ।
क्व च नवयौवनं क्व कुसुमायुधनिःस्पृहता
तव ललनाविचेष्टितविरुद्धमहो ललितम् ॥

अत्र युवतिमार्दवादीनां महाहवदारुणतादीनाञ्च शुद्धानामेव परस्पर-सङ्गतत्वादयं शुद्धविरोधः ।

द्वितीयो यथा,—

दिग्वासा यदि तत् किमस्य धनुषा शस्त्रस्य किं भस्मना
भस्माथास्य किमङ्गना यदि च सा कामं परिद्वेष्टि किम् ।
इत्यन्योन्यविरुद्धचेष्टितमिदं पश्यन्निजस्वामिनो
भृङ्गी सान्द्रशिरावनद्धपरुषं धत्तेऽस्थिशेषं वपुः ॥

अत्र दिग्वासस्त्वादीनामुत्तरोत्तरग्रथनादन्योन्यासङ्गतादयं ग्रथितना-मा विरोधभेदः ।

असङ्गति र्यथा,—

सा उ पउिं गोट्ठ उद्दिणो कवीकवि विसगंठि ।
भिडियन्ते ष्विउ सो मरइ जम्म ण लगाइ कंठि ॥

अत्रायं विषग्रन्थि र्यस्य कण्ठे न लगति स म्रियत इतीत्रतयोः परस्परमस-ङ्गतेरयमसङ्गति र्नाम विरोधभेदः ॥

प्रत्यनीकं यथा,—

उत्कण्ठा सन्तापो रणरणको जागरस्तनोस्तनुता।
फलमिदमहो मयाप्तं सुखाय मृगलोचनां दृष्ट्वा॥

अत्र मृगलोचनादर्शनस्य किल निर्वृतिः फलं मया तु तां दृष्ट्वा अन्तस्तापादिकं प्राप्तमिति प्रतनीकफलत्वादयं प्रत्यनीकाख्यो विरोधः॥

अधिको यथा,—

एको दाशरथिः कामं यातुधानाः सहस्रशः।
ते तु यावन्त एवाजौ तावद्भा ददृशे स तैः॥

अत्रैकस्य दाशरथेरनेकसङ्ख्यै र्यातुधानै र्यत् समरकर्म तत्र तैरसत्र तावद्धा, दृश्यमानत्वे नैकसङ्ख्याविरुद्धमाधिक्यं गम्यते इत्ययमधिकाख्यो विरोधः।

विषमं यथा,—

दिशामलीकालकभङ्गतां गतस्त्रयीवधूकर्णतमालपल्लवः।
चकार यस्याध्वरधूमसञ्चयो मलीमसः शुक्लतरं भवद्यशः॥

अत्र मलीमसाध्वरधूमसञ्चयेन यद् यशसः शुक्लीकरणं तद् यादृशादेव जायते तत्तादृगेव भवतीति प्रसिद्धे वैषम्यात् परस्परमसङ्गतेरयं विषमाख्यो विरोधः॥

प्रभूतकरणालोकात् सत्रादेवमिति सम्भवः।
स विधौ वा निषेधे वा हये वा न हयेऽपि वा॥ २५॥

एषु विधिविषयो यथा,—

त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचौरे
तस्याः सिन्धोः पृथुमपि तनुं दूरभावात् प्रवाहम्।
प्रेक्षिष्यन्ते गगणगतयो नूनमावर्ज्य दृष्टी-
रेकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम्॥

अत्र त्वयि जलमादातुमवनते सति तस्याः सरितः प्रवाहो मध्यनिविष्टे

इन्द्रनीलमणिमुक्तागुण इव गगणगतिर्मेखलीयो भविष्यतीति विधेः संभाव्यमानत्वादयं विधिविषयः सम्भवः॥

निषेधविषयो यथा,—

परस्त्र भूयान् विवरेऽभियोगः प्रसह्य संरक्षणमात्मरन्ध्रे।
भीष्मेऽप्यसम्भाव्यमिदं गुरौ वा न संभवत्यत्र वनेचरेषु॥

अत्रेदं भीष्मद्रोणयोरसम्भाव्यमानं धनुर्वेदकौशलमस्मिन् वनेचरे न सम्भवतीति निषेधविषयः सम्भवः॥

विधिनिषेधविषयो यथा,—

उत्पश्यामि द्रुतमपि सखे मत्प्रियार्थं यियासोः
कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते।
शुक्लापाङ्गैः सजलनयनैः स्वागतीकृत्य केकाः
प्रत्युद्यातः कथमपि भवान् गन्तुमाशु व्यवस्येत्॥

अत्र द्रुतमपि यियासोः कालक्षेपं तवोत्पश्यामि इति विधिरूपं, कथमपि भवान् गन्तुमाशु व्यवस्येदिति निषेधरूपस्तदेवं विधिनिषेधयोरसम्भाव्यमानत्वादयमुभयविषयः सम्भवः॥

अनुभयविषयो यथा,—

तस्याः पातुं सुरगज इव व्योम्नि पूर्वार्द्धलम्बी
त्वञ्चेदच्छस्फटिकविशदं तर्कयेस्तिर्य्यगम्भः।
संसर्पन्त्याः सदसि भवतः स्रोतसि छायया सा
स्यादस्थानोपगतयमुनासङ्गमेनाभिरामा॥

अत्र यदि त्वमेवं कुर्य्यास्तदेवं स्यादिति विधिनिषेधयोरनवगतेरयमनुभयविषयः सम्भवः। एतेन विधिनिषेधयोर्विकल्पविषयोऽपि व्याख्यातः॥ यथा,—

यदि भवति मुखानां वाक्पटूनां सहस्रम्
निरुपममवधानं जीवितं चातिदीर्घम्।
कमलमुखि तथापि क्ष्मापतेस्तस्य कर्त्तुम्

सकलगुणविचारः प्रक्ष्यते वा नयेति ॥

सदेतच्छिगदेनैव व्याख्यातम्।

द्रोणस्य सम्भवः खार्य्यां शते पञ्चाशतो यथा।
तथानेय सम्भवं प्राहुः सोऽनुमानान्न भिद्यते ॥ २६ ॥

भिद्यते तु, यद्यनिश्चयः स्यात् यथा,—

खञ्जापाङ्गप्रसरमलकैरञ्जनस्नेहशून्यम्
प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम्।
त्वय्यासन्ने नयनमुपरिस्पन्दि शङ्के मृगाक्ष्याः
मीनक्षोभाकुलकुवलयश्रीतुलामेष्यतीति ॥

अत्र यथा खार्य्यां द्रोण शते पञ्चाशदिति नियमः नैवं। विप्रलम्भे अलकानामकल्पनमनञ्जनमक्ष्णो मधुनो वा पूतप्रादेशः, सुहृद्वन्तलाभारम्भे वा नयनस्पन्दनानि सम्भाव्यन्ते च प्रभूतकारणालोकादित्ययोऽपि विधिरूप एव सम्भवः।

अन्योन्यमुपकारो यस्तदन्योन्यं त्रिधा च तत्।
वाच्यं प्रतीयमानञ्च तृतीयमुभयात्मकम् ॥ २७ ॥
अन्योन्यचूड़िकान्योन्यभ्रान्तिरन्योन्यमेकता।
अन्योन्यालङ्कृतेरन्नाद्मयमेतद्दिश्यते ॥ २८ ॥

तेष्वभिधीयमानमन्योन्यमिह यथा,—

कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य।
अन्योन्यशोभाजननाद् बभूव साधारणो भूषणभूष्यभावः ॥

अत्रान्योन्यशोभाजननेनेत्यादिना उपकार्य्योपकारकभावस्य द्वयोरप्यभिहितत्वादभिधीयमानमिदमन्योन्यम्।

प्रतीयमानं यथा,—

उद्धच्छो पिअइ जलं जह जह विरलङ्गुली चिरं पहिओ।
पाआवालिआवि तह तह धारं तेणुअं पि तणुएइ ॥

अत्र पथिकप्रपापालिकयोर्मिथोऽनुरागे यदेकस्य विरलाङ्गुलिना करेण पानीयपानमन्यस्याः सुतरां वारिधारानन्नकरणं तेन परस्परमुपकार्योपकारकभावात् प्रतीयमानमिदमन्योन्यम्॥

प्रतीयमानाभिधीयमानं यथा,—

गोलाविसमोआरच्छलेण अप्पा उरम्मि से मुक्को।

अणुअम्पाणिद्दोसं तेणवि सा गाढ़मुपऊढ़ा॥

अत्र गोदावरीविषमावतारव्याजेन तया तस्योरसि आत्मा क्षिप्तः तेनापि अनुकम्पानिर्दोषा सा गूढ़मुपगूढ़ेतत्रभिधीयमानः परस्परानुरागाद्रुपकार्य्योपकारकभावः प्रतीयते इत्युभयात्मकमिदमन्योन्यम्।

अन्योन्यचूड़िका यथा,—

शशिना च निशा निशया च शशी शशिना निशया च यथा गगनम्।

भवता च सभा सभया च भवान् सभया भवता च तथा भुवनम्॥

अत्र निशाशशिनोः सभाभवतोश्च परस्परमुपकार्य्योपकारकभावे वर्त्तमानयोर्यदिदं गगनं जगतीञ्च प्रति द्वयोरुपकारकत्वं चूड़िकेवोपर्य्युपरि लभ्यते सेयमन्योन्यचूड़िका।

अन्योन्यभ्रान्ति र्यथा,—

जम्बूनां कुसुमोत्करे नवमधुन्यारब्धपानोत्सवाः

कीराः पक्कफलाशया मधुकरीश्चुम्बन्ति मुञ्चन्ति च।

एतेषामपि नीलकिंशुकदलैरेभिः समानत्विषाम्

पुष्पभ्रान्तिभिरापतन्ति सहसा चञ्चुषु भृङ्गाङ्गनाः॥

अत्र जम्बूकुञ्जस्थितमधुकरीषु शुकशकुन्तानां या पक्वजम्बूफलभ्रान्तिर्या च मधुकरीणां शुकचञ्चुषु किंशुककुसुमभ्रान्तिः सेयमन्योन्यभ्रान्तिरन्योन्यादुष्पद्यतेव।

अन्योन्यात्मकता यथा,—

प्रफुल्लतापिच्छनिभैरभीषुभिः शुभैश्च सप्तच्छदपांशुपाण्डुभिः।

परस्परेण च्छुरितामलच्छवी तदेकवर्णाविव तौ बभूवतुः॥

अत्र श्यामपाण्डुतयोः परस्परव्यतिरेकेणैकवर्णकरणादन्योन्यमेकता नाम भ्रान्तिभेदोऽन्योन्यादृष्टयैव ।

व्यत्ययो वस्तुनो यस्तु यो वा विनिमयो मिथः ।
परिवृत्तिरिहोक्ता सा काव्यालङ्कारलक्षणे ॥ २९ ॥
सा त्रिधा व्यत्ययवती तथा विनिमयात्मिका ।
तृतीया चोभयवती निर्दिष्टा काव्यसूरिभिः ॥ ३० ॥

त्रिधापि चासौ मुख्यामुख्यभेदाद्द्विधाभूय षोढ़ा संपद्यते ।
तासु व्यत्ययवती मुख्या यथा,—

कुमुदवनमपश्रि श्रीमदम्भोजपण्डम्
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्तम्
हतविधिललितानां हा विचित्रो विपाकः ॥

अत्र यत् कुमुदवनादीनामपश्रीकत्वादिकं यच्चाम्भोजपण्डादीनां श्रीमत्त्वादिकं मुख्यमेव प्रातरुपलभ्यते सेयं व्यत्ययवती मुख्या नाम परिवृत्तिः ।
व्यत्ययवत्यमुख्या यथा,—

जो तीअ अहरराउ रत्तिं उव्वासिओ पिअअमेण ।
सोच्चिअ दीसइ गोसे सवत्तिणअणेसु संकन्तो ॥

अत्र प्रियतमेन रात्रावुद्वासितस्याधररागस्य येयं सपत्नीलोचनेषु संक्रान्तिः प्रातरमुख्या तेनेयममुख्या व्यत्ययवती परिवृत्तिः ।
विनिमयवती मुख्या यथा,—

प्रस्त्रोतन्मदसुरभीणि निम्नगायाः
क्रीडन्तो गजपतयः पयांसि कृत्वा ।
किञ्जल्कव्यवहितताम्रदानलेखै-
रुत्तेरुः सरसिजगन्धिभिः कपोलैः ॥

अत्र करिकपोलमदामोदस्याम्भोजरजःपरिमलस्य च सरित्सलिलद्विप-

कपोलपाल्योर्मुख्यत्वेनैव परस्परोपकारकरणादियं विनिमयवती मुख्या नाम परिवृत्तिः।

विनिमयवत्यमुख्या यथा,—

तस्य च प्रवयसो जटायुषः स्वर्गिणः किमिह शोच्यते ऽधुना।
येन जर्जरकलेवरव्ययात् क्रीतमिन्दुकिरणोज्ज्वलं यशः॥

अत्र जर्जरकलेवरं दत्त्वा शशिकिरणशुभ्रं यशः क्रीतमित्यमुख्ययैव वृत्त्या विनिमयोक्तेरमुख्येयं विनिमयवती परिवृत्तिः।

उभयवती मुख्या यथा,—

लोचनाधरकृताहृतरागा वासिताननविशेषितगन्धा।
वारुणी परगुणात्मगुणानां व्यत्ययं विनिमयञ्च वितेने॥

अत्र वारुण्या यदधराद्रागोऽपहृतस्तच्चक्षुषोर्निक्षिप्तः तेनेयं व्यत्ययवती यच्च मुखामोदवासितया स्वामोदेन मुखामोदो विशेषितस्तेन विनिमयवती तदियमुभययापि मुख्यवृत्त्यैवोक्तेति मुख्येयमुभयवती परिवृत्तिः।

उभयवत्यमुख्या यथा,—

किं चित्रं यदि देवेन भूभृतः करदीकृताः।
देवोऽपि दापितः किं तैर्न पुनः पृष्ठतः करम्॥

अत्र भूभृतामकरदानां यत् करप्रदानं जिगीषोश्च यत् पृष्ठे हस्तनिक्षेपः स एव द्रव्यगुणादीनां स्थानादिपरिवृत्तौ व्यत्ययः। यच्च देवेन भूभृतः करदीकृताः देवोऽपि तैः पृष्ठतः करं दापित इति सोऽयं दानप्रतिपादनलक्षणो विनिमयः। एतदुभयमपीह श्लिष्टपदाभिधेयत्वादमुख्यवृत्त्यैवोच्यमानमुपलभ्यते इत्युभयवतीयममुख्या परिवृत्तिः।

दृष्टान्तः प्रोक्तसिद्धैत्र यः सिद्धैऽर्थे तन्निदर्शनम्।
पूर्वोत्तरसमत्वे तद्दृजु वक्रञ्च कथ्यते॥ ३१॥

तेषु पूर्वमृजु यथा,—

उद्यन्नेव सविता पद्मेष्वर्पयति श्रियम्।
विभावयति भूतीनां फलं सुहृदनुग्रहः॥

अत्र ऋजूक्त्यैव पूर्वं दृष्टान्तः पश्चाद्दार्ष्टान्तिकं प्रदर्शितमित्येदमृजुपूर्वस्य निदर्शनं सूर्यदृष्टान्तेन विभूतीनां सुहृदनुग्रहः फलमिति विज्ञापयति।

तदेव वक्रं यथा,—

या ण उद्दीय विजलि ऊण उग्रवहो जलइ जस्स वाडम्मि।
णङ्क तो परिहरिश्वविसमदसासंठिश्रा पुरिसा॥

अत्रापि पूर्वं दृष्टान्तः पश्चाद्दार्ष्टान्तिकं किन्तु यथा पूर्वत्रोद्दीयमान सविता सुहृत्पद्मेषु श्रियमर्पयतीति तुल्येतिवृत्तता ऋजूक्त्या शब्देनैवाभिधीयते नैवमत्र। किं तर्हि ज्वलनेतिवृत्तेन तुल्यं तत्तु सत्पुरुषाणामितिवृत्तशब्दयुक्तिचातुर्यात् प्रतीयते तदिदं पूर्वस्य वक्रस्य निदर्शनम्।

उत्तर मृजु यथा,—

चिश्रश्र तिरच्छीयइ समुहयच्छागइ अकडक्स।
पडिश्र एक्कज्जे गोरडीणं च उद्द उवच्छ॥

अत्र ऋजूक्त्या शब्दत एवाभिधीयमानसाधर्म्यं दार्ष्टान्तिकमभिधायोत्तरकालं दृष्टान्तोऽभिहितः तदिदमुत्तरमृजुनिदर्शनम्।

तदेव वक्रं यथा,—

उपरि घनं घनपटलं दूरे दयिता किमेतदापतितम्।
हिमवति दिव्यौषधयः कोपाविष्टः फणी शिरसि॥

अत्रापि दार्ष्टान्तिकमभिधायोत्तरकालमेव दृष्टान्तो निहितस्तदिदमुत्तरमृजुनिदर्शनम्। किन्तु यथा पूर्वस्मिन् हृदये तिर्यग्गितादिभिः शब्द एव ऋजूक्त्या साधर्म्याभिधानं नैवमत्र तथापि तु किमेतदापतितमिति उक्तिचातुर्येण विपर्ययेण च लिङ्गसङ्ख्या यथासङ्ख्यानां तदेतदुत्तरवक्रस्य निदर्शनम्।

सममृजु यथा,—

याति चन्द्रांशुभिः स्पृष्टा ध्वान्तराजी पराभवम्।
सद्यो राजविरुद्धानां दर्शयन्ती दुरन्तताम्॥

अत्र राजविरुद्धानामिति श्लिष्टपदेन दर्शयन्तीति वर्त्तमानकाललक्षणात् सद्य इति सन्निहितेन समकालमेव दृष्टान्तदार्ष्टान्तिकयोः शब्दत ऋजूक्तै वोक्तत्वादिदमृजु समञ्च निदर्शनम्।

तदेव वक्रं यथा;—

ण उण वरकोअण्डदण्डए सुतिमाणुसेवि एमेअ।
गुणवज्जिए ण जाअइ वंसुप्पस्से वि टङ्कारो॥

अत्र न केवलं कोदण्डदण्डके मानुषेऽप्येवमेव इतीतरयोगवक्रतया युगपदभिधानं गुणवर्जितवंशोत्पन्नेऽपि टङ्कारो न जायत इति श्लिष्टपदत्वेऽपि व्यतिरेकमुखेन गुणवत्तया चाभिधानाद्वनुषीव मानुषेऽपि गुणवतैव महान् शब्दो भवतीति वक्रोक्त्या साधर्म्यावगतिः। तदिदमशब्दत्वादिभिः पूर्वोद्भिद्यमानं समं वक्रञ्च निदर्शनम्।

शब्दोपात्ते प्रतीते वा सादृश्ये वस्तुनोर्द्वयोः।
भेदाभिधानं भेदश्च व्यतिरेकश्च कथ्यते॥ ३२॥
स्वजातिव्यक्त्युपाधिभ्यामेकोभयभिदा च सः।
सादृश्याद्वैसादृश्याच्च भिन्नः षोढ़ाभिजायते॥ ३३॥

तत्र शब्दोपात्तसादृश्ये स्वजातिव्यतिरेको यथा,—
अरत्नालोकसंहार्य्यमवार्यं सूर्यरश्मिभिः।
दृष्टिरोधकरं यूनां यौवनप्रभवं तमः॥

अत्र यौवनप्रभवस्य तमसस्तमोजात्या सह दृष्टिरोधकरमिति सादृश्यमुक्त्वा अरत्नालोकसंहार्य्यमवार्यं सूर्यरश्मिभिरिति व्यतिरेको विहितः। सोऽयं स्वजातिव्यतिरेकः।

प्रतीयमानसादृश्ये स्वव्यक्तिव्यतिरेको यथा,—
अणुणेहि सुचरिअ सअहिँ षणुदिणवट्ठि अमाण।

आप्पण विणड्ड मज्ज पिग्र हज प्पाणेण समाण ॥

अत्र प्रतीयमानोपमानसादृश्योपचरितभेदादात्मव्यक्तेरन्यैरन्यैश्च सुचरितशतैः स्वव्यक्तित एव भेदोऽभिहितः सोऽयं स्वव्यक्तिव्यतिरेकः।

शब्दोपात्तसादृश्य एको व्यतिरेको यथा,—

प्रेयानेव पृथुस्तथापि सततं भूतिस्तथापि स्थिरा
दुर्गाया भवतापि भूधरभुवः सम्यग् गृहीतः करः॥
निर्व्याजं परमेश्वरत्वमियता नोपास्ति वक्तुं जनै-
र्हेलोल्लासितवाहिनीभ्रमथने यन्नो विषादी भवान्॥

अत्र प्रियदृपत्वादिभिरभिहितसादृश्ययोरुपमानोपमेययोरुपमेयस्यैव यथोक्तसादृश्यविषये विषादितुयुक्तमितेत्रकव्यतिरेकोऽयम्।

स एव प्रतीयमानसादृश्यो यथा,—

सकलङ्केन जडेन च साम्यं दोषाकरेण ते कीदृक्।
अभुजङ्गः समनयनः कथमुपमेयो हरेणासि।

अत्र प्रतीयमानसादृश्यस्य पूर्वार्द्धे चन्द्रोपमानस्य सकलङ्कत्वादिभिरुत्तरार्द्धेन वर्णनीयोपमेयस्याभुजङ्गत्वादिरेकस्यैव भेदकः स्वधर्मोऽभिहितः सोऽयमप्येत्रकव्यतिरेक एव॥

शब्दोपात्तसादृश्ये उभयव्यतिरेको यथा,—

अभिन्नवेलौ गम्भीरावम्बुराशिर्भवानपि।
असावञ्जनसङ्काशस्त्वञ्च चामीकरद्युतिः॥

अत्र द्वयोरप्यभिधीयमानसादृश्यमुपन्यस्योभयोरपि पृथक् पृथग् भेदकः स्वधर्मोऽभिहितः सोऽयमभिधीयमानसादृश्ययोरुभयव्यतिरेकः।

स एव प्रतीयमानसादृश्ययो र्यथा,—

त्वन्मुखं पुण्डरीकञ्च द्वयोरप्यनयोर्भिदा।
कमलं जलसंरोहि त्वन्मुखं त्वदुपाश्रयम्॥

तदेतस्मिन्नदेनैव व्याख्यातम्। सोऽयं प्रतीयमानसादृश्ययोरुभयव्यतिरेकः।

अभिधीयमानसादृश्ययोः सदृशव्यतिरेको यथा,—

त्वन्मुखं पुण्डरीकञ्च फुल्ले सुरभिगन्धिनी ।
भ्रमद्भ्रमरमम्भोजलोलदृष्टिमुखं तु ते ॥

अत्र मुखाम्भोजयोः फुल्ले सुरभिगन्धिनी इति पदाभ्यामभिधीयमानसादृश्ययोः सदृशमेव । भ्रमद्भ्रमरत्वं लोलदृष्टित्वञ्च भेदकमुपन्यस्तमिति सोऽयं शब्दोपात्तसादृश्ययोः सदृशव्यतिरेकः ।

स एव प्रतीयमानसादृश्ययो र्यथा,—

चन्द्रोऽयमम्बरोत्तंसो हंसोऽयं तोयभूषणम् ।
नभो नक्षत्रमालीदमिदमुत्कुमुदं पयः ॥

अत्र पूर्व्वार्द्धे चन्द्रहंसयोः प्रतीयमानसादृश्ययोरम्बरोत्तंसत्वतोयभूषणत्वे उत्तरार्द्धेन तु नभःपयसोर्नक्षत्रमालित्वोत्कुमुदत्वे सदृशे एव भेदके सोऽयं प्रतीयमानसादृश्ययोः सदृशव्यतिरेकः ।

अभिहितसादृश्ययोरसदृशव्यतिरेको यथा,—

अशाक दृष्टिं मेघानामुत्सङ्गे तस्य भूभृतः ।
विरराम न रामस्य धारासन्ततिरश्रुणः ॥

अत्र भूभृदित्यनेन साक्षादुपात्तसादृश्ययो रामम्माल्यवतोर्योऽयमुत्सङ्गे समस्ताश्रुधारापातो यश्च मेघदृष्टेरभावस्तदिदमुभयोरसदृशमेव भेदकं सोऽयमभिधीयमानसादृश्ययोरसदृशव्यतिरेकः ।

स एव प्रतीयमानसादृश्ययो र्यथा,—

भ्रूविलासमसृष्टमदरागं मृगेक्षणम् ।
इदन्तु नयनद्वन्द्वं तव तद्गुणभूषितम् ॥

अत्र कान्तामृगेक्षणयोः प्रतीयमानसादृश्ययोर्भ्रूविलासमदरागौ तद्भावौ च विसदृशौ भेदकाविति सोऽयं प्रतीयमानसादृश्ययोरसदृशव्यतिरेकः ।

सदृशासदृशव्यतिरेकाभ्यामेव तदुभयव्यतिरेको यथा,—

निर्मलेन्दु नभो रेजे विकचाब्जं बभौ सरः ।

परं पर्य्यश्रुवदनौ मम्लतु र्भ्रातरावुभौ ॥

अत्र नभःसरसोः प्रतीयमानसादृश्ययो र्निर्मलेन्दुत्वं विकचाब्जत्वं च प्राग्वदेव सदृशे भेदके। ताभ्यां च मुखचन्द्रमुखकमलाभ्यां मनोहराह्लादकत्वाभ्यां च प्रतीयमानसादृश्ययोरेव रामलक्षणयो र्येयं मुखपर्य्यश्रुता तनौ च म्लानिः निर्मिलेन्दुताविराजमानत्वयो र्विकचाब्जत्वशोभमानत्वयोश्च सा विसदृशीति सोऽयं सदृशासदृशभेदकत्वकृतभेद एव तदुभयव्यतिरेकः। एतेनैव व्यतिरेकादिसम्भेदोऽपि व्याख्यातः। यथा,—

मिथ्या देव भुजेन तेऽल्पविभवः कल्पद्रुमः स्पर्द्धते
नह्येष त्रिभुवनत्रयाभयमहासत्त्रो कृपाणोऽस्यति।
तुल्यस्तत्र भवान् प्रयागविटपी यस्यैतदेकार्णवे
कायान्तर्विनिवेश्य विश्वमखिलं शाखासु शेते हरिः॥

अत्र वर्णनीयबाहुकल्पद्रुमयोरभिमतफलदायित्वादिभिः प्रतीतसादृश्ययोर्भुवनत्रयाभयप्रदायी वर्णनीयबाहौ कृपाणो भेदक इति एकव्यतिरेकः। तथा वर्णनीयबाह्वोः प्रयागवटस्य च प्राग्वदेव प्रतीयमानसादृश्ययोरेकस्य भुवनत्रयाभयमहासत्त्रो कृपाणः स शाखासु शेते अन्यस्य तु महाप्रलयेस्वकार्यान्तर्निवेशिताखिलविश्वो वैकुण्ठः। ताविमौ तयोः सदृशावेव भेदकौ हरिकृपाणयोर्वा श्यामतादिभिः प्रतीयमानसादृश्ययोरिमावेव धर्म्मौ भेदकौ सोऽयमेवंप्रकारो व्यतिरेकसङ्कर उन्नेयः। स्वजातिव्यतिरेके प्रतीयमानसादृश्यस्ववक्तिव्यतिरेके चाभिधीयमानसादृश्यं यदुदाहरणं दृश्यते सम्भवति वा तदा तदप्युदाहार्य्यम्।

कार्य्यारम्भे सहायाप्ति र्दैवाद्दैवकृतेह या।
आकस्मिकी बुद्धिपूर्व्वोभयी वा तत् समाहितम्॥ ३४॥

तत्राकस्मिकी दैवकृता यथा,—

मानमस्या निराकर्त्तुं पादयोर्मे पतिष्यतः।

आकस्मिकी बुद्धिपूर्व्वा दैवकृता यथा,—

सा कौमुदी नयनयोर्भवतः सुजन्मा
तस्या भवानपि मनोरथबन्धबन्धुः।
तत्सङ्गमं प्रति सखे न हि संशयोऽस्ति
यस्मिन् विधिश्च मदनश्च कृताभियोगः॥

अत्र माधवस्य योऽयं मालतीं प्रति समागमाभिलाषः तत्रेयं मालत्या आकस्मिकी बुद्धिपूर्व्वा च तथा प्रवृत्तिः सोभयत्रापि दैवकृता च सहायास्मिः समाहितभेदः।

आकस्मिकी बुद्धिपूर्व्वा चादैवकृता यथा,—

दृष्टिं वन्दनमालिका स्तनयुगं लावण्यपूर्णौ घटौ
शुभ्राणां प्रकरः स्मितं सुमनसां वक्त्रप्रभा दर्पणः।
रोमाञ्चोद्गम एव सर्षपकणाः पाणी पुनः पल्लवौ
स्वाङ्गैरेव गृहं प्रियस्य विशतस्तन्व्याकृतं मङ्गलम्॥

अत्र गच्छतः प्रियस्येयं वन्दनमालिकादिमङ्गलक्रिया मनःपरितोषहेतुस्तस्यास्तन्वङ्ग्या इङ्गिताकारैरेव यन्निवर्त्तनं सोऽयमाकस्मिकः स्वबुद्धिपूर्व्वकश्च तत्सहकारिकारणत्वाददैवकृतश्च समाहितभेदः।

भ्रान्तिर्विपर्ययज्ञानं द्विधा सापि प्रयुज्यते।
अतत्त्वे तत्त्वरूपा च तत्त्वे चातत्त्वरूपिणी॥ ३५॥
अतत्त्वे तत्त्वरूपा या त्रिविधा सापि पठ्यते।
अबाधिता बाधिता च तथा कारणबाधिता॥ ३६॥

तत्रातत्त्वे तत्त्वरूपाऽबाधिता यथा,—

मोहविरमे सरोसं थोरत्थणमण्डले सुरवहूणाम्।
जेण करिकुम्भसम्भावणाइ दिट्ठी परिट्ठविआ॥

अत्र सुरवधूस्तनमण्डले करिकुम्भत्वेन गृहीते तत्त्वरूपे यन्मिथ्यैव तत्त्वारोपणं नचानन्तरं बाधकोपन्यासकृतस्तेनेयमबाधिता असत्ये तत्त्वरूपा

भ्रान्तिः।

अतत्त्वे तत्त्वरूपा बाधिता यथा,—

हसिम्र सहत्थतालं सुक्खवडं उपगएहि।
पहिएहि पत्तपफलसारिच्छे उड्डीणे पूसवन्दम्मि॥

अत्र यत्र फलितोऽयं न्यग्रोध इत्यतत्त्वरूपे तत्त्वबुद्धावुत्पन्नायां य उत्तरकालमपवतानिष्फलताप्रत्ययस्तेनेयमतत्त्वे तत्त्वरूपाख्या बाधिता भ्रान्तिः।

अतत्त्वे तत्त्वरूपा कारणबाधिता यथा,—

कनककलशस्वच्छे राधापयोधरमण्डले
नवजलधरश्यामामात्मद्युतिं प्रतिबिम्बिताम्।
असितसिचयप्रान्तभ्रान्त्या मुहुर्मुहुरुत्क्षिपन्
जयति जनितव्रीडाहासः प्रियाहसितो हरिः॥

अत्र श्यामायामात्मद्युतावसितसिचयप्रान्तबुद्धिरतत्त्वे तत्त्वरूपा प्रियाहसितेन च कारणेन बाधिता। सैषा अतत्त्वे तत्त्वरूपा कारणबाधिता भ्रान्तिः।

अतत्त्वरूपा तत्त्वे या सापि द्वैविध्यसिद्धये।
हानोपादानयोर्हेतुरुपेयायाश्च जायते॥ ३७॥

तत्र तत्त्वेऽतत्त्वरूपा हानहेतुर्यथा,—

सो मुद्धमिओ मअतण्हिआहिं तह दूणो हआसाहिं।
जह सब्भावमईवि णईए परम्मुहो जाओ॥

अत्र पारमार्थिकीष्वपि नदीषु मृगतृष्णाप्रतारितः सन् यत्र मृगः पयः पातुं प्रतिपद्यते स तत्र त्यजति तेनेयं तत्त्वेऽप्यतत्त्वरूपा हानहेतुर्भ्रान्तिः। तत्त्वे अतत्त्वरूपोपादानहेतुर्यथा,—

समर्थये यत् प्रथमं प्रियां प्रति क्षणेन तन्मे परिवर्त्ततेऽन्यथा।
अतो विनिद्रे सहसा विलोचने करोमि न स्पर्शविभावितप्रियः॥

अत्राङ्गीकृतलताकरूपोर्वशीपरिष्वङ्गसुखनिमीलिताक्षस्य पुरूरवसः आपा-

न्ताविर्भूतसत्यरूपायामपि तस्यां येयं पूर्वानुभूतैवं विधाने कविप्रलम्भसम्भावनया नयनयोरनुन्मीलनबुद्धिः सेयं तत्त्वेऽप्यतत्त्वरूपोपादानहेतुर्भ्रान्तिः।

तत्त्वेऽप्यतत्त्वरूपोपेक्षाहेतुर्यथा,—

चिक्रंसया कृत्रिमपत्रिपंक्तेः कपोतपालीषु निकेतनानाम्।
मार्जारमप्यायतनिश्चलाङ्गं यस्यां जनः कृत्रिममेव मेने॥

अत्र तत्त्वरूपेऽपि मार्जारे कृत्रिमोऽयमिति बुद्धौ जातायां तस्यां प्रयोजनत्वेन यदुपेक्षणं सेयं तत्त्वेऽप्यतत्त्वरूपोपेक्षाहेतुर्भ्रान्तिः।

भ्रान्तिमान् भ्रान्तिमाला च भ्रान्तेरतिशयश्च यः।
भ्रान्त्यनध्यवसायश्च भ्रान्तिरेवेति मे मतम्॥ ३८॥

तत्र भ्रान्तिमान् यथा,—

कपाले मार्जारी पय इति करान् लेढि शशिन-
स्तरुच्छिद्रे प्रोतान् बिसमिति करी संकलयति।
रतान्ते तल्पस्थान् हरति दयितापत्रंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विभ्रमयति॥

अत्रेन्दुमरीचिषु पयःप्रभृतिभ्रान्तिभूस्त्वाय भ्रान्तिमान् नाम भ्रान्तेरेव भेदः।

भ्रान्तिमाला यथा,—

नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे
पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तया गण्डयोः।
लीयन्ते कवरीषु बान्धवजनव्यामोहजातस्पृहा
दुर्वारा मधुपाः कियन्ति तरुणि स्थानानि रक्षिष्यसि॥

अत्र युवत्यवयवेषु नयनादिषु मधुव्रतानां येयं नीलोत्पलादिबुद्धिः सेयं मालाक्रमेणोपजायमाना भ्रान्तिमाला भ्रान्तेरेव भेदः। भ्रान्त्यतिशयो द्विधा वितर्कहेतुर्विपर्ययहेतुश्च। तयोः पूर्वमुपमाभ्रान्तिमाचक्षते द्वितो-

यत्तु भ्रान्त्यतिशयमेव। तत्रोपमाभ्रान्ति र्यथा,—

स्तनोष्ठरागैर्नयनोदबिन्दुभि र्निमग्ननाभे र्निपतद्भिरङ्कितम्।
च्युतं रुषा भिन्नगतेरसंशयं शुकोदरश्याममिदं स्तनांशुकम्॥

अत्र शाद्वलेऽपि समुत्पन्नस्तनांशुकभ्रमस्य पुरूरवसो योऽयं सादृश्यातिशयदितो वितर्कः सेयमुपमाभ्रान्तिः।

भ्रान्त्यतिशयो यथा,—

दिश्याद्वो जटिजूटकोटिसरिति ज्योत्स्नालवोद्भासिनी
शम्भोश्चन्द्रकलिका जलभ्रमिवशाद् द्रागुद्दृष्टदृष्टा मुदम्।
यां चञ्चच्छफरीभ्रमेण मुकुलीकुर्वन् फणाली मुहु-
र्मुह्यन् लक्ष्यमहि र्जिहीर्षति तमामाकुञ्चनमाश्वनैः॥

तत्र गङ्गाम्भःप्रतिफलितां रजनिकरकलामालोकयतो वासुकेर्योयं शफरीभ्रमेण मुकुलीकुर्वन् फणाली शफरीयमित्यध्यासिता विपर्ययबुद्धिः सोऽयं भ्रान्त्यतिशयो नाम भ्रान्तेरेव भेदः।

भ्रान्त्यनध्यवसायोऽपि द्विधा सालम्बनो निरालम्बनश्च। तयोः सालम्बनो यथा,—

विरहिणिहिअअकअं तहिं णिसाअइ
तरुखणिक्काइज्जइ अलिणिवहेहिं चित्ते ण चूअवणे।
अहरासुविमअरन्दे हिअो रंदाणि अइ
जइ ण कलम्ब ण अम्ब ण जम्बू जाणिअइ॥

अत्र न कदम्बो नाम्बो न जम्बूरिति ज्ञायते इति त्रयाणामेवावलम्बनभूतत्वात् सालम्बनो नामायं भ्रान्त्यनध्यवसायो भ्रान्तिभेदः।

निरालम्बनो यथा,—

स्थौ रस्मामस्मातुपरि विपरीतौ कामकयो-
रदूर्द्ध रङाश्मस्थलमथ दुरूह किमपि यत्।
ततः कुम्भौ पश्चात् विसकिसलये कन्दलमये
तदभिन्दाविन्दीवरमधुकराः किं पुनरिदम्॥

अत्रोर्वादिषु युवत्यवयवेषु उत्पन्नरम्भास्तम्भभ्रान्तो योऽयमतत्समुदाये किमिदमित्यालम्बनं विना सतोऽनध्यवसायः स एष निरालम्बनो नाम भ्रान्त्यनध्यवसायो भ्रान्तेरेव भेदः।

ऊहो वितर्कः सन्देहनिर्णयान्तरधिष्ठितः।
द्विधासौ निर्णयान्तश्चानिर्णयान्तश्च कीर्त्त्यते ॥ ३८ ॥
तत्त्वानुपात्यतत्त्वानुपाती यश्चोभयात्मकः।
स निर्णयान्त इतरो मिथ्यामिथ्योभयात्मकः ॥ ३९ ॥

तेषु निर्णयान्तस्तत्त्वानुपाती यथा,—

मैनाकः किमयं रुणद्धि गगने मन्मार्गमव्याहतं
शक्तिस्तस्य कुतः स वज्रपतनाद् भीतो महेन्द्रादपि।
तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावणम्
आ ज्ञातं स जटायुरेष जरसा क्लिष्टो वधं वाञ्छति ॥

अत्र निरूपितलक्षणो वितर्को जटायुरेष इति तत्त्वानुपाती निर्णयान्तो वितर्कः।

स एवातत्त्वानुपाती यथा,—

"अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकनिधिः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोरममिदं रूपं पुराणो मुनिः ॥

अत्र किमिदं रूपं निर्मातुं यथोक्तः पुराणो मुनिः प्रभवेदतश्चन्द्रादिष्वन्यतमेन प्रजापतिना भवितव्यमित्यतत्त्वानुपातित्वादतत्त्वानुपात्ययं निर्णयान्तो वितर्कः।

स एवोभयात्मको यथा,—

चित्ते निवेश्य परिकल्पितसत्त्वयोगा-
द्रूपोच्चयेन रचिता मनसा कृता तु।

स्मीरत्नचटिरपरा प्रतिभाति सा मे
धातु विंभुवमग्रुदिन्तत्र यत्र्च तस्याः ॥

सोऽयं तत्वानुपातित्वाच्चोभयात्मा निर्णयान्तो वितर्कः ।

अनिर्णयान्तो मिथ्याकृपो यथा,—

अद्रेः शृङ्गं हरति पवनः किं स्विदित्युन्मुखीभि-
र्दृष्टोच्छ्रायश्चकितचकितं मुग्धसिद्धाङ्गनाभिः ।
स्थानादस्मात् सरसनिचुलादुत्पतोदङ्मुखः खम्
दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान् ॥

अत्र किमिदमद्रेः शृङ्गं पवनो हरतीति मेघं प्रति कल्पनाया मिथ्या त्वाद्वस्तुनश्चानिर्णयादनिर्णयान्तो मिथ्याकृपो वितर्कः ।

स एवामिथ्याकृपो यथा,—

अयमसौ भगवानुत पाण्डवः स्थितमवाङ्मुनिना शशिमौलिना ।
समधिरूढ़मनेन नु जिष्णुना स्विदिति वेगवशान्मुमुहे गणैः ॥

अत्र भगवत्पार्थयोरमिथ्याकृपत्वेन वेगवत्वादिकस्यानिर्णयान्तोऽमिथ्याकृपो वितर्कः ।

अनिर्णयान्त उभयात्मा यथा,—

मायास्विदेषा मतिविभ्रमो वा ध्वस्तं नु मे वीर्यमुताहमन्यः ।
गाण्डीवमुक्ता हि यथा पुरा मे पराक्रमन्ते न शराः किराते ॥

अत्र मायादीनां विकल्पनामिथ्याकृपत्वान्मम शराः किराते न पराक्रमन्त इत्यस्यामिथ्याकृपत्वादनिर्णयान्तत्वाच्चायमनिर्णयान्त उभयकृपो वितर्कः ।

वस्त्वन्तरतिरस्कारो वस्तुना मीलितं स्मृतं ।
पिहितापिहिते चैव तद्गुणातद्गुणौ च तत् ॥ ४० ॥

अत्र मीलितमभिधीयमानगुणेन प्रतीयमानगुणेन च वस्तुना सम्भवति । तयोराद्या यथा,—

एतो वि ण सङ्घविओगो से पस रत्तमअिवारुणच्छाओ ॥
मज्जणतंवेसु मओ तओ मइतंवेसु लोअणेसु अमरिसो ॥

अत्र मज्जनताम्रयोर्लोचनयोर्मदरागः मदाताम्रयोः कोपानुरागः साक्षादभिधीयमानेनैव गुणेन तिरस्क्रियमाणो निर्दर्शित इत्यभिधीयमानेन वस्तुनैतन्मीलितम्।

प्रतीयमानेन यथा,—

पियदंसणेण सुहरसमुउलियाइं जरिवेण होन्ति णअणाइं।
ता कैणकस्सरइअं लक्खिज्जइ कुवलअं तिस्सा ॥

अत्र प्रियदर्शनसुखेन मुकुलितयोरेव लोचनयोस्तस्याः कर्णकुवलयं लक्ष्यते नत्वमुकुलितयोरिति वस्तुना वस्त्वन्तरतिरस्कारः प्रतीयमानगुणतयोपपादित इति प्रतीयमानगुणेन वस्तुना मीलितमिदम्।

पिहितं यथा,—

पाअडिअणेहसब्भावविब्भमं तीअ जइ तुमं दिट्ठो।
संवरणवावडाए अण्णो वि जणो तह च्चेअ ॥

अत्र प्रकटितस्नेहविभ्रमं तया त्वमवलोकितः नैतदन्यजनो जानात्विति सर्वत्र स्निग्धदृष्टिपातेन पिहितमथैतन्मीलितभेद एव।

अपिहितं यथा,—

दिट्ठाइ जं ण दिट्ठो आलविआए वि जण आलविओ।
उवआरो जण कओ तं च्चिअ कलिअं छइल्लेहिं ॥

अत्र दृष्ट्या यन्न दृष्टः,सम्भाषितया यन्न सम्भाषितः न चाभ्यागतोपचारो विहितस्तेन तदनुरागः परं न पिहितः प्रत्युत च्छादनेन छेकानां प्रकटित इत्यपिहिताख्योऽयं मीलितभेदः।

तद्गुणो यथा,—

गोरङ्गउ तरुणीअण जोण्हाइ अहिसरइ
सिअणेवच्छपडिच्छिअवसहवट्टरइ।
तच्छाअहिं पुण चल्लिअउ सामलगत्ति

पीलमैत्तयडूतिचि मप्पणुमंतिअडिं ॥

अत्र गौराङ्गस्तरुणीजनः सितनेपथ्यो ज्योत्स्नायां श्यामस्तु नीलनेपथ्यस्तथा: छायासु गच्छतीति तद्गुणाख्यं मीलितमिदम्।

अतद्गुणो यथा,—

कर्कन्धूफलमुच्चिनोति शवरी मुक्ताफलाकाङ्क्षिणी
कुद्दोलूककदम्बकस्य पुरतः काकोऽपि हंसायते।
कीर्त्त्या ते धवलीकृते त्रिभुवने क्ष्मापाललक्ष्मीः पुरः
कृष्णं वीक्ष्य बलोऽयमित्युपचितव्रीडं शनैर्जल्पति ॥

अत्र कर्कन्धूफलानामपगतनिजगुणत्वाद् तद्गुणाख्यं मीलितमिदम्

सदृशादृष्टचिन्तादेरनुभूतार्थवेदनम्।
स्मरणं प्रत्यभिज्ञानस्वप्नावपि न तद्बहिः ॥ ४१ ॥

तत्र सदृशार्थं यथा,—

अदृश्यन्त पुरस्तेन खेलाः खञ्जनपङ्क्तयः।
अस्मर्यन्त विनिःश्वस्य प्रियानयनविभ्रमाः ॥

अत्र खञ्जनपङ्क्तिदर्शनात् तत्सदृशप्रियानयनविभ्रमस्मरणात् तत्सदृशदर्शनजं स्मरणमिदम्।

अदृष्टाद् यथा,—

मुनिसुताप्रणयस्मृतिरोधिना मम वियुक्तमिदं तमसा मनः।
मनसिजेन सखे प्रहरिष्यता धनुषि चूतशरश्च निवेशितः ॥

अत्र मुनिसुताप्रणयस्मृतिरोधिना तमसा मे मनो वियुक्तमित्यदृष्टकृतं स्मरणमिदम्।

चिन्तया यथा,—

पुरा यत्र स्रोतः पुलिनमधुना तत्र सरिताम्
विपर्यासं जातो घनविरलभावः क्षितिरुहाम्।
बहोर्दृष्टं कालादपरमिव जातं वनमिदम्

निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥

अत्र प्रत्यक्षेष्वपि स्रोतस्तरुविपिनादिषु स्मरणस्य चिन्ताजन्यत्वादिदं चिन्तोद्भूतं स्मरणम्।

परप्रयत्नाद्यथा,—

दर्शनपथमायाता साक्षादिव तन्मयेन हृदयेन।
स्मृतिकारिणा त्वया पुनरपि चित्रीकृता कान्ता।

अत्र परकृतात् प्रयत्नविशेषाच्चिन्तायाः प्रवृत्तत्वादिदमपि स्मरणमेव।

स्वप्नाद् यथा,—

जाने स्वप्नविधौ ममाद्य चुलुकोत्सेकैः पुरस्तादभूत्
प्रह्वप्रपे परिवेषमण्डलमिव जत्रोत्स्नाप्रसन्नं महः।
तस्यान्तर्नखनिस्तुषीकृतशरच्चन्द्रप्रभैरङ्गकै-
र्दृष्टा काप्यबला बलात्कृतवती सा मन्मथं मन्मथम् ॥

अत्र स्वप्नस्य चिन्ताजन्यत्वात् स्वप्नस्मृतिरपि स्मरणमेव।

प्रत्यभिज्ञानं यथा,—

गृहीतो यः पूर्वं परिणयविधौ कङ्कणधरः
सुधामूर्त्तेः पादैरमृतशिशिरैर्यः परिचितः।
स एवायं तस्यास्तदितरकरौपम्यसुभगो
मया लब्धः पाणिर्ललितलवलीकन्दलनिभः ॥

अत्र गृहीतो यः पूर्वं स एवायं तस्याः पाणिरिति प्रत्यभिज्ञानमपि स्मरणमेव।

अभिप्रायानुकूल्येन प्रवृत्तिर्भाव उच्यते।
सोद्भेदोऽथ निरुद्भेदश्चैकतश्चाभितश्च सः ॥ ४२ ॥

तत्रैकतः सोद्भेदो यथा,—

गेण्ह पलोएह इमं विअसिअवअणा पिअस्स अप्पेइ।
घरिणी सुअस्स पढमुब्भिण्णदन्तजुअलं किअं वोरं ॥

अत्र सुतस्य दन्तोन्नमादृक्सुपभोगयोश्यास्तीति गृहिण्या एवमभिप्रायः प्रकर्षविकाशिनयनतयोद्भिद्यते न पुनः पतुत्ररितेत्रकृतः सोद्भेदोऽयंभावः।

अभिहितः सोद्भेदो यथा,—

सालोए च्चिय सूरे घरिणी घरसामिअस्स घेत्तूण।
णेच्छन्तस्सवि पाए धुअइ हसन्ती हसन्तस्स॥

अत्र सालोक एव सूर्ये गृहपतेर्गृहागमनं गृहिण्याश्च यत् पादधावनं तदावाभ्यामद्य वेश्मनो न निर्गन्तव्यमिति भावः स च द्वयोरपि हासेनाभिहितः उद्भिद्यत इत्यभिहितः सोद्भेदोऽयं भावः।

एकतो निरुद्भेदो यथा,—

सालिवणगोविआए उच्चोवन्तो अपूसविदाइं।
सव्वङ्गसुन्दरीएवि पहिआ अच्छीइ पेच्छन्ति॥

अत्रातिसौन्दर्येण देवीभ्रान्त्या शालिवनगोपिकामालोकयतां पथिकानां तदक्षिनिरीक्षणे अयमभिप्रायः शालिवनतिरस्कारेण देवमानुषयोर्विशेषभूतः पक्ष्मणामेव भूमिस्पर्शो भूस्पर्शो वा न लक्ष्यते इति तदक्षिणी एव पश्यामः यदीयं निमिषति तदा मानुषीयं यदि न निमिषति तदा देवीयमिति सर्वाङ्गसुन्दर्यत्रा अपि पथिकानामेव जायमानो नेह केनचित् कर्मणोद्भिद्यत इत्येकतो निरुद्भेदश्चायं भावः।

अभितो निरुद्भेदो यथा,—

गोलाअडट्ठिअं पेच्छिऊण गहवइसुअं हलिअसोण्हा।
आढत्ता उत्तरिउं दुक्खुत्ताराइ पअवीए॥

अत्रागच्छन्तीं हालिकस्नुषां दृष्ट्वा गृहपतिसूनोर्गोदावरीतटे यदवस्थानं यच्च तमवलोक्य तस्या दुरुत्तरमार्गेणावतरणारम्भस्तलायं तयोरभिप्रायः हस्तावलम्बदानेनावयोरङ्गसङ्गमः सम्पद्यतामिति स चाभितः द्वयोरपि जायमानो नेह केनचित् कर्मणोद्भिद्यत इत्यभितो निरुद्भेदश्चायं भावः।

हृदयं स्वल्पश्च भिद्येत न हि भावात् कथञ्चन।
हृदयोदाहरणं तत्र तैरिदं प्रतिपाद्यते ॥ ४३ ॥

हिअए रोसुव्भिण्णं पाअप्पहरं सिरेण पत्थन्तो।
णह उदयोमाणं सिणीअयोरंसुअं देसं ॥

अत्र हृदये उद्भूर्णपादप्रहारं यदयं शिरसा प्रार्थितवान् यच्च तयासौ न ताड़ितस्तत्र हृदये वल्लभा वसतीति भावः। स च प्रार्थनारोदनाभ्यामुन्नियमानः सोद्भेदो भावः हृदय इत्युच्यते।

निरुद्भेदस्तु यो भावः स सूक्ष्मस्तै निंगद्यते।
इङ्गिताकारलक्ष्यात् स सूक्ष्मात् सप्राद् भूमिकान्तरम् ॥ ४४ ॥

यथा,—कदासौ सङ्गमो भावीत्याकीर्णे वक्तुमक्षमम्।
अवेत्य कान्तमबला लीलापद्मं न्यमीमिलत् ॥

अत्र वक्तुमक्षमतायामिङ्गिताकारयोरप्रतीयमानत्वाद्भावगतेर्भूमिकान्तरमिदं भवति।

पद्मसंमीलनाद्यात्र सूचितो निशि सङ्गमः।
आश्वासयितुमिच्छन्त्या प्रियमङ्गजपीड़ितम् ॥

अत्रानुकार्यप्रानुकरणे अपि भूमिकान्तरिते एव भवत इति सोऽयं निरुद्भेदो भाव एव सूक्ष्म इत्युच्यते।

प्रत्यक्षमक्षजं ज्ञानं मानसञ्चाभिधीयते।
स्वानुभूतिभवञ्चैवमुपचारेण कथ्यते ॥ ४५ ॥

तत्राक्षजं द्विधा युगपदेकशश्च तयोर्युगपद् यथा,—

कान्तकान्तवदनप्रतिविम्बे भग्नबालसहकारसुगन्धौ।
स्वादुनि प्रणिहितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः ॥

अत्र मदिराश्रयाणां मुखप्रतिविम्बसौगन्ध्यस्वादुताश्रव्यत्वशैत्यानां दृग्घ्राणरसनश्रवणत्वगिन्द्रियप्रत्यक्षता प्रतीयते।

एकशो यथा,—

मन्दमन्दविगलत्तृपमीपच्चतुरक्षसितपक्ष्म दधत्या।
वीचरते स्म भवनेऽनवबध्वा कामिनो मुखमधोमुखयैव॥

तदेतच्चाक्षुषम्। एवं श्रावणादीन्यप्युदाहरणीयानि।

मानसमपि द्विधा सुखादिविषयमनुभूतार्थविषयञ्च तयोः सुखादिविषयं यथा,—

अशोकविस्मयमपि स्मृतपूर्वरक्तमुद्ध्रुतनूतनभयज्वरजर्जरं नः।
एकवणलुटितसंघटितप्रमोदमानन्दशोकप्रवललमुपैति चेतः॥

एतन्निगदेनैव व्याख्यातम्। अनुभूतार्थविषयं यथा,—

पिहिते वासागारे तमसि सूचीमुखाग्रसंभेद्ये।
मयि च निमीलितनयने तथापि कान्तामुखं व्यक्तम्।

इदमपि नातिदुर्बोधमिति न व्याख्यातम्।

स्वानुभूतिभवं द्विधा मिथ्यात्मकममिथ्यात्मकञ्च तयोर्मिथ्यात्मकं यथा,—

अथ दीर्घतरं तमः प्रवेक्ष्यन् सहसा रुग्णरयः स संभ्रमेण।
निपतन्तमिवोष्णरश्मिमुर्वीं वलयीभूततरं धराश्च मेने॥

तदिदमिन्द्रियेषु मनसि चानवतिष्ठमानमात्मन्येवावतिष्ठते।

अमिथ्यात्मकं यथा,—

मनः प्रत्यक्चित्ते सविधमवधायात्तमरुतः
प्रहृष्यद्रोमाणः प्रमदसलिलोत्सङ्गितदृशः।
यदालोक्याह्लादं ह्रद इव निमज्ज्यामृतमये
दधत्यन्तस्तत्त्वं किमपि यमिनस्तत् किल भवान्॥

अस्यात्मविषयता व्यक्तैव योगिभिरङ्गीयते।

लिङ्गाद्गुरलिङ्गिनो ज्ञानमनुमानं तदुच्यते।
पूर्ववच्छेषवच्चैव दृष्टं सामान्यतश्च यत्॥ ४६॥
फलसामर्थ्यभेदेन द्विधैतद् भिद्यते पृथक्।
उदाहरणमेवैषां रूपव्यक्तिर्भविष्यति॥ ४७॥

तेषु यत्र कारणं दृष्ट्वा कार्य्यमनुमीयते तत् पूर्ववत् यथा,—

अविरलविलोलजलदः कुटजार्जुननीपसुरभिवनवातः।
अयमायातः कालो हन्त हताः पथिकगेहिन्यः॥

अत्र वर्षर्त्तोः कारणभूतात् कार्य्यभूतविरहिणीनां मरणमनुमीयते तेनैतत् पूर्वं कारणमिहास्तीति पूर्ववदुच्यते।

यत्र कार्य्यं दृष्ट्वा कारणमनुमीयते तच्छेषवत् यथा,—

सावज्ञमागमिष्यन्नूनं पतितोऽसि पादयोस्तस्याः।
कथमन्यथा ललाटे यावकरसतिलकपङ्क्तिरियम्॥

अत्र यावकरसतिलकपङ्क्तेः कार्य्यभूतायाः कारणभूतं पादपतनमनुमीयते तेनैतच्छेषः कार्य्यमिहास्तीति शेषवदुच्यते।

यत्र न कार्य्यं न कारणं केवलमविनाभावमात्रं प्रतीयते तत् सामान्यतोदृष्टं यथा,—

गज्जन्ते खे मेहा फुल्ला णीवा पणच्चिआ मोरा।
णट्ठो चन्दुज्जोओ वासारत्तो हलायत्तो॥

अत्र वर्षर्त्तुरविनाभूतैर्मेघगर्ज्जितादिभिः सामान्येनैवानुमीयते इति सामान्यतोदृष्टमिदम्। तान्येतानि भावसाधनेऽनुमानशब्दे फलपक्षे उदाहरणानि भवन्ति। यदा पुनः करणसाधनोऽनुमानशब्दः तदानुमीयते अनेनेत्यनुमानशब्देन यथोक्तं लिङ्गमुच्यते। यदाह।

अनुमेयेन सम्बद्धं प्रसिद्धञ्च तदन्विते।
तदभावे च यन्नास्ति तल्लिङ्गमनुमापकम्॥ ४८॥

तत् पूर्ववति यथा,—

अह्व सहि वकुल्ला विरिञ्छहिहिसि गोत्तस्स मलए कारम्।
अद्धन्तदन्तदिट्ठेण सामिवलिएण हसिएण।

अत्रैवंप्रकारया वक्रोक्त्या एवंविधेन हसितेनोपलक्षिता त्वमग्रतो गोत्रं दूषयिष्यसीति कारणतो यत्र कार्य्यानुमानं तदिदं सामग्रीपक्षे पूर्वव-

दितुपचर्यते।

शेषवति यथा,—

दीसइ ण चूअमउलं अत्ता ण अ वाइ मलअगन्धवहो।

एन्तं वसन्तमासं सहि जं उक्कण्ठिअं चेअं॥

अत्रोत्कण्ठालक्षणेन कार्येण वसन्तः कारणभूतोऽनुमीयत इति सामग्री-पक्षे इदं शेषवदितुपचर्यते।

सामान्यतोदृष्टं यथा,—

आविर्भवन्ती प्रथमं प्रियायाः सोच्छ्वासमन्तःकरणं करोति।

सन्तापदग्धस्य शिखण्डिय्नो दृष्टिः पुरस्तादचिरप्रभेव॥

सेयं विद्युदिव दृष्टिं कामन्दक्यपि प्रथमत उपलभ्यमाना अविनाभावेन मालत्या गमनं गमयतीति सामग्रीपक्षे सामान्यतो दृष्टमेतत्।

यदाप्तवचनं तद्धि ज्ञेयमागमसंज्ञया।

उत्तमं मध्यमञ्चाथ जघन्यञ्चेति तत्त्रिधा॥ ४८॥

तत्रोत्तमं द्विधा विधिरूपं निषेधरूपञ्च तयोर्विधिरूपं यथा,–

दमं दानं दयां शिक्षेः स्तनयित्नुर्वदत्यसौ।

ददद इति वाग्देवी दयध्वं दत्त दाम्यत॥

अत्र च एषा दैवी वागनुवदति यत् स्तनयित्नुः ददद इति द दाम्यतेति तदेतत् त्रयं शिक्षेत दमं दानं दयामिति श्रुतेस्तदेतत् विधिरूपमाप्तवचनम्।

निषेधरूपं यथा,—

निवार्यतामालि किमप्ययं वटुः पुनर्विवक्षुः स्फुरितोत्तराधरः।

न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक्॥

अत्रोत्तरार्धोक्तनिषेधानुवादवर्धितव्रतपक्षे यस्याया योऽयमपवदमान-वटुनिवारणोपदेशः तस्य महान्तो नापभाषितव्या इति वाक्यार्थतात्-पर्यत्वादयं निषेधरूप आगमः। तदेतदुभयमप्यवश्यानुष्ठेयत्वादुत्तमम्।

प्रथमं द्विधा निर्दिष्टवक्तृकमनिर्दिष्टवक्तृकञ्च। तयोराद्यं यथा,—

कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे।
एति जीवन्तमानन्दो नरं वर्षशतादपि॥

अत्र जीवन्नरः पश्यति भद्रमिति अयमेवार्थो निर्दिष्टवक्तृकः। तदेतत् सर्ववाक्यानां विधिनिषेधयोः पर्य्यवसानात् प्राणैषणायां पतितव्यमिति विधिरूपमाप्तवचनम्।

द्वितीयं यथा,—

अक्षे वसति पिशाचः पिचुमन्दे दिनपति र्वटे यक्षः।
विश्राम्यति पद्मे श्रीस्तिष्ठति गौरी मधूकतरौ।

तदिदमनिर्दिष्टवक्तृकमनादिलोकप्रसिद्धिपरम्परायातमैतिह्यं। अत्रापि सर्ववाक्यानां विधिनिषेधयोः पर्य्यवसानात् तस्मादक्षं न सेवेत, पिचुमन्दं न निक्रन्तेत, वटं न छिन्द्यात्, पद्मं न मूर्द्धि बिभृयात्, मधूकं न पदा स्पृशेत् इत्यध्याहारो भवति। सोऽयं निषेधरूप आगमः। उभयमप्येतन्नावश्यानुष्ठेयमिति प्रथमम्।

जघन्यं द्विधा काम्यं निषिद्धञ्च। तयोः काम्यं यथा,—

मुंडइ आचुपाकसाअसाहिअं माणपापणविहूणं।
तेम्न पलिअत्यणीएं विकुणेइ पिणुए यणए॥

तदेतत् पूर्ववत् विधिरूपं काम्यमाप्तवचनम्।

निषिद्धं यथा,—

वयं बाल्ये बालांस्तरुणिमनि यूनः परिणता-
वपीच्छामो वृद्धान् परिणयविधानस्थितिरियम्।
त्वयारब्धं जन्म क्षपयितुमकाण्डेन विधिना
न नो गोत्रे पुत्रि क्वचिदपि सतीलाञ्छनमभूत्॥

तदेतन्निषेधरूपं निषिद्धमेवाप्तवचनं उभयमपि चैतदलङ्कारिभिः संमृजेत इत्यादिदोषान्नानुष्ठेयमिति जघन्यम्॥

सदृशात् सदृशज्ञानमुपमानं द्विधेह तत्।

तत्रादेकमनुभूतेऽर्थेऽननुभूते द्वितीयकम् ॥ ५० ॥

तयोरनुभूतार्थविषयं यथा,—

सद्यः प्राणप्रवणमघवन्मुक्तमाहत्य वक्ष-
स्तत्संघट्टाद्विघटितबृहत्खण्डमुच्चण्डरोचिः ।
एवं वेगात् कुलिशमकरोद्व्योम विद्युत्सहस्रै-
र्भर्त्तुर्यं ज्वज्ज्वलनकपिशास्ते च रोमाट्टहासाः ॥

अत्र रामकराकृष्यमाणभग्नधूर्जटिधनुर्विमुक्तज्योतिश्छटासहस्रसंकुलमाकाशं पश्यतो रावणदूतस्येयं स्वयं दृष्टेषु प्रभुवक्षःस्थलविदीर्णवज्रशकलविस्फूर्जथुषु तद्रोमाट्टहासेषु वियद्व्यापिषु तत्सादृश्यबुद्धिः । तदिदमनुभूतविषयं नामोपमानं मीमांसका वर्णयन्ति ।

अननुभूतविषयं यथा,—

तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले ।
समूहस्तारकाणां यः शकटाकारमाश्रितः ॥

अत्र यथाविधः शकटाकारस्तथाविधो रोहिणीतारकासमूहाकार इत्येवमवधारिताप्तोपदेशस्य तदाकारतारकचक्रदर्शनादिदं तद्रोहिणीशकटमित्येति येयं संज्ञासंज्ञिसम्बन्धप्रतिपत्तिस्तदिदमननुभूतविषयमुपमानं नैयायिकाः समुन्नयन्ति ।

तथाभूतार्थविज्ञानजनकत्वेन हेतुना ।
नाट्यादभिनयालेख्यमुद्राबिम्बादयः पृथक् ॥ ५१ ॥

तेष्वभिनयो यथा,—

करविवरगलन्तदलो एरण्डो साहइव्व तरुणा ।
या एत्थ घरे हलिअवहू एद्दहमेत्तत्थणी वसइ ।

अत्र पयोधरातिपरिणाहसूचकोत्तानप्रसारिताङ्गुलिकाभिनयसंनिभेरण्डदलच्छिद्रोपदर्शनात् स्वयमदृष्टेऽपि हालिकवधूस्तनपरिणाहे पूर्वानुभू-

तैवंविधस्तनेषरिणाहसम्बन्धप्रतिपत्तिः तदिदमनुभूतार्थविषयमुपमानमेवाभिनयद्वस्तुत्तमं चत्रते ।

आलेख्यं यथा,—

तवालेख्ये कौतूहलतरलतनौविरचिते
विधायैका चक्रं रचयति सुपर्णासुतमधः ।
अथास्विद्यत्पाणि त्वरितमपमृज्यैतदपरा
करे पौष्पं चापं मकरमुपरिष्टाच्च लिखति ॥

अत्र यदानुभूतनायकसन्दर्शनाया: स्वरूपालेख्यप्रदर्शनाद् एवम्भूतः स इति वितानमुत्पद्यते गोपनार्थञ्च तथाभूतयोरेव देवकुलादिदृष्टविष्णुकामयोः प्रतीतिर्भवति तदेतदनुभूतार्थविषयं भवति। यदा पुनरननुभूतनायकादिसंदर्शनाया इत्यमाप्तोपदेशः एवंभूतः सुपर्णकेतुश्चक्रपाणिर्विष्णुर्भवति एवम्भूतो मकरध्वजः पुष्पचापः कामो भवति। योऽदृशाविमौ तादृशश्च स ते मनोरथभूमिः केवलमस्य गरुत्मदादयो न विद्यन्ते तदा तदुत्तरकालमालेख्यागततदाकारदर्शनात् सोऽयं मम प्रेयानिति मद्विधया कयापि लिखितो भविष्यतीति तद्गोपयाम्यनेन विष्णुचिह्नाभ्यामिति गरुत्मच्चक्रेऽधः प्रदृष्टहस्तयोः केतुहस्तयोर्निवेशयति। अपरा प्रतिविधित्सुर्गोपायन्ती प्रकाशयन्ती च प्रत्यासन्नोपमानं सम्याकारमाचिख्यासुः करे पौष्पं चापं मकरमुपरिष्टाच्च लिखति। अत्राकृतौ पदार्थे या इमास्तयोर्लोकानां सोऽयमिति विष्णुरिति काम इति च संज्ञासंज्ञिसम्बन्धप्रतिपत्तयः। तदिदमनुभूतार्थविषयमुपमानमालेख्यमाख्यायते।

मुद्रा यथा,—

सचकितमिव विस्मयाकुलाभिः
शुचिसिकतास्वतिमानुषाणि ताभिः ।
चितिषु ददृशिरे पदानि जिष्णो-
रुपहितकेतुरथाङ्गलाञ्छनानि ॥

अत्र चक्रध्वजाङ्कितजिष्णुपादमुद्रादर्शनात् येयमस्मानुषी पादमुद्रा भवतीति संस्कारसंस्थिसम्बन्धप्रतिपत्तिः । तदिदमननुभूतार्थविषयमुपमानमेव मुद्रेत्युच्यते । यदपि चादृष्टेऽपि जिष्णुपदे मृगीदृशामीदृशः स इत्यनुमानज्ञानं तदप्युपमानार्थनिबन्धनमेव ।

अपि चास्त्यनुमानेऽपि सादृश्यं लिङ्गलिङ्गिनोः ।
पदेन यत्र कुब्जेन कुब्जः पादोऽनुमीयते ॥

प्रतिबिम्बं यथा,—

दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः ।
वीक्ष्य बिम्बमनुबिम्बमात्मनः कानि कान्यपि चकार लज्जया ॥

यदा तावदेव सम्बन्धग्रहः कीदृशं स्वं मुखं यादृशमादर्शे प्रतिबिम्बं तदालोकनाददृष्टेऽपि स्वमुखे येयमीदृशं मे मुखमिति प्रतिपत्तिः । तदिदमननुभूतार्थविषयम् । यदा पुनरित्थमाप्तोपदेशाद् यादृशं वस्तु तादृशमादर्शादौ प्रतिबिम्बं तदापि प्रियप्रतिबिम्बालोकनादिदं तन्मम प्रियप्रतिबिम्बमितीयं संस्कारसंस्थिसम्बन्धप्रतिपत्तिस्तदप्यननुभूतार्थविषयम् । यदा तु चित्रादिष्वनुभूतस्वमुखदर्शनायाः प्रतिबिम्बदर्शनादनेन सदृशं मे मुखमिति प्रतिपत्तिर्दृष्टप्रियतमाकारायाश्च प्रतिबिम्बाकारदर्शनादेतदाकारो मम प्रेयानिति प्रतिपत्तिः प्रतिबिम्बसन्निधौ प्रतिबिम्बोदयो दृष्टस्तदिह सन्निहितेन तेन भवितव्यमिति यो व्रीडाविकारभूतस्तदानुभूतविषयमेतदुपमानं प्रतिबिम्बमित्याचक्षते ।

प्रत्यक्षादिप्रतीतोऽर्थो य स्तथा नोपपद्यते ।
अर्थान्तरस्य गमयत्यर्थापत्तिं वदन्ति ताम् ॥ ५२ ॥
सर्वप्रमाणपूर्वत्वादेकशोऽनेकशश्च सा ।
प्रत्यक्षपूर्विकेत्यादिभेदैः षोढा निगद्यते ॥ ५३ ॥

तासु प्रत्यक्षपूर्विका एकशो यथा,—

निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि।

अन्यथाऽनुपपत्त्यैव पयोधरभरस्थितेः॥

अत्र स्तनभरनितम्बयो र्मध्यं नोपलभ्यते स्तनभारावस्थानञ्च दृश्यते तत्र येयं पयोधरस्थितिः सान्यथानुपपद्यमानाधारकं मध्यमनुपलभ्यमानं बोधयति सेयं प्रत्यक्षपूर्विकार्थापत्तिरेकाग्र एवेह विवक्षिता। इदमपि स्त्वेवं बहुधा भवति यत्तदर्थापत्तिलब्धं मध्यं तदपि धारणशक्तिमन्तरेण तत् कर्मासमर्थमिति तस्यापि शक्तिः कल्प्यते। सेयमर्थापत्तिपूर्विकार्थापत्तिः। यश्चायमर्थापत्तिविकल्पस्य मध्यस्योपलम्भाभावः सोऽपि प्रकारान्तरेणासम्भवत्कान्तिकार्थत्रयो स्तत्कर्षं ब्रूते साचेयमभावपूर्विकाऽनुपपत्ति र्भवति। न चैतदिह शाब्दमपि तु वाक्यार्थसामर्थ्याद् गम्यते।

प्रत्यक्षादिपूर्विकानेकशो यथा,—

एतदालोक्य लोलाक्षि रूपमप्रतिमं तव।

कल्पयामः कलातत्त्वगुरुतामादिवेधसः॥

अत्रेदं रूपमप्रतिमं तवेति प्रत्यक्षपूर्वता अभावपूर्वता च व्यक्तमेव प्रतीयते तेनेयमनेकशः। अत्रापि येयं रूपस्याप्रतिमतान्यथानुपपद्यमाना कलातत्त्वगुरुविनिर्मितत्वमात्मनोऽवस्थापयति सोर्वश्यादिरूपोपमानज्ञानपूर्विका या तत्कर्त्तुरर्थापत्तिकल्पिता कलातत्त्वगुरुता सापि तथाविधशक्तिकल्पनापूर्विकेति उपमानपूर्विकार्थापत्तिपूर्विका चेयमर्थापत्तिः सापि तत्कर्त्तुं र्वेधसः कलातत्त्वगुरुता तथाभूतशक्त्याधारता वा साध्यनुमानत आगमतो वा तस्य कल्प्यत इत्यनुमानपूर्विका चेयमर्थापत्तिः। न चैतच्चतुष्टयमिहापि शाब्दमपि तु वाक्यार्थसामर्थ्याद् गम्यते। एकशोऽनुमानपूर्विका यथा,—

कपोलपुलकेनास्याः सूचितो मदनज्वरः।

मनो निरन्तरासक्तं सख्यः कथयति प्रिये॥

तत्र योऽयं कपोलपुलकेनानुमीयमानो मनोभवज्वरः स मनसः प्रिये

अत्र चक्रध्वजाङ्कितजिष्णुपादमुद्रादर्शनात् येयममानुषी पादमुद्रा भवतीति संज्ञासंज्ञिसम्बन्धप्रतिपत्तिः । तदिदमननुभूतार्थविषयमुपमानमेव मुद्रेत्युच्यते । यदपि चादृष्टेऽपि जिष्णुपदे नूनमीदृशमीदृशः स इत्यनुमानज्ञानं तदप्युपमानार्थनिबन्धनमेव ।

अपि चास्त्यनुमानेऽपि सादृश्यं लिङ्गलिङ्गिनोः ।

पदेन यत्र कुञ्जेन कुञ्जः पादोऽनुमीयते ॥

प्रतिबिम्बं यथा,—

दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः ।

वीक्ष्य बिम्बमनुबिम्बमात्मनः कानि कान्यपि चकार लज्जया ॥

यदा तावदेव सम्बन्धग्रहः कीदृशं स्वं मुखं यादृशमादर्शे प्रतिबिम्बं तदालोकनाददृष्टेऽपि स्वमुखे येयमीदृशं मे मुखमिति प्रतिपत्तिः । तदिदमननुभूतार्थविषयम् । यदा पुनरित्थमाप्तोपदेशाद् यादृशं वस्तु तादृशमादर्शादौ प्रतिबिम्बं तदापि प्रियप्रतिबिम्बालोकनादिदं तन्मम प्रियप्रतिबिम्बमितीयं संज्ञासंज्ञिसम्बन्धप्रतिपत्तिस्तदप्यननुभूतार्थविषयम् । यदा तु चित्रादिष्वनुभूतस्वमुखदर्शनायाः प्रतिबिम्बदर्शनादनेन सदृशं मे मुखमिति प्रतिपत्तिर्दृष्टप्रियतमाकारायाश्च प्रतिबिम्बाकारदर्शनादेतदाकारो मम प्रेयानिति प्रतिपत्तिः प्रतिबिम्बसन्निधौ प्रतिबिम्बोदयो दृष्टस्तदिह सन्निहितेन तेन भवितव्यमिति यो व्रीडाविकारभूतस्तदानुभूतविषयमेतदुपमानं प्रतिबिम्बमित्याचक्षते ।

प्रत्यक्षादिप्रतीतोऽर्थो य स्तथा नोपपद्यते ।

अर्थान्तरस्य गमयत्यर्थापत्तिं वदन्ति ताम् ॥ ५२ ॥

सर्वप्रमाणपूर्वत्वादेकशोऽनेकशश्च सा ।

प्रत्यक्षपूर्विकेत्यादिभेदैः षोढा निगद्यते ॥ ५३ ॥

तासु प्रत्यक्षपूर्विका एकशो यथा,—

निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि।
अन्यथाऽनुपपत्त्यैव पयोधरभरस्थितेः॥

अत्र स्तनभरनितम्बयो मध्यं नोपलभ्यते स्तनभारावस्थानञ्च दृश्यते तत्र येयं पयोधरस्थितिः साऽन्यथाऽनुपपद्यमानाधारकं मध्यमनुपलभ्यमानं बोधयति सेयं प्रत्यक्षपूर्विकार्थापत्तिरेकश एवेह विवक्षिता। इयमपि द्धेव बहुशो भवति यत्तदर्थापत्तिलब्धं मध्यं तदपि धारणशक्तिमन्तरेण तत् कर्मासमर्थमिति तस्यापि शक्तिः कल्प्यते। सेयमर्थापत्तिपूर्विकार्थापत्तिः। यश्चायमर्थापत्तिविकल्पस्य मध्यस्योपलम्भाभावः सोऽपि प्रकारान्तरेणासम्भवत्कान्तिकार्श्यरयो स्तत्कथं ब्रूते साचेयमभावपूर्विकाऽनुपपत्ति र्भवति। न चैतदिह शाब्दमपि तु वाक्यार्थसामर्थ्याद् गम्यते।

प्रत्यक्षादिपूर्विकानेकशो यथा,—

एतदालोक्य लोलाक्षि रूपमप्रतिमं तव।
कल्पयामः कलातत्त्वगुरुतामादिवेधसः॥

अत्रेदं रूपमप्रतिमं तवेति प्रत्यक्षपूर्वता अभावपूर्वता च व्यक्तमेव प्रतीयते तेनेयमनेकशः। अत्रापि येयं रूपस्याप्रतिमतान्यथानुपपद्यमाना कलातत्त्वगुरुविनिर्मितत्वमात्मनोऽवस्थापयति सौवर्ण्यहल्यादिरूपोपमानज्ञानपूर्विका या तत्कर्त्तुरर्थापत्तिकल्पिता कलातत्त्वगुरुता सापि तथाविधशक्तिकल्पनापूर्विकेति उपमानपूर्विकार्थापत्तिपूर्विका चेयमर्थापत्तिः सापि तत्कर्त्तुर्वेधसः कलातत्त्वगुरुता तथाभूतशक्त्याधारता वा साप्यनुमानत आगमतो वा तस्य कल्प्यत इत्यनुमानपूर्विका चेयमर्थापत्तिः। न चैतच्चतुष्टयमिहापि शाब्दमपि तु वाक्यार्थसामर्थ्याद् गम्यते। एकशोऽनुमानपूर्विका यथा,—

कपोलपुलकेनास्याः सूचितो मदनज्वरः।
मनो निरन्तरासक्तं सख्यः कथयति प्रिये॥

तत्र योऽयं कपोलपुलकेनानुमीयमानो मनोभवज्वरः स मनसः प्रिये

निरन्तरासक्तिमन्तरेणानुपपन्न इत्यनुमानपूर्विकेयमर्थापत्तिः। अनेकत्र उपमानादिपूर्विका यथा,—

त्वदास्येन्दू समौ दृष्ट्वा तदिदं कल्पयामहे।
अन्योन्यगामि लावण्यमनयोरेव केवलम्॥

अत्र त्वदास्येन्दू समौ दृष्ट्वेत्युपमानपूर्वकता अर्थापत्तेः प्रत्यक्षपूर्वता च शब्दत एव प्रतीयते। या च मिथः सादृश्यानुपपत्तिलभ्या लावण्यान्योन्यगामिता सापि तथाविधं विधातारमन्तरेण न संगच्छत इत्यादीन्यपि पूर्ववद्वाक्यार्थसामर्थ्यतोऽवगन्तव्यम्।

एकशोऽभावपूर्विका यथा,—

एतदासन्नं विना हासन्नं निवेदयति सुभ्रुवः।
प्रियापराधदण्डानां मनो भाजनतां गतम्॥

अत्र सुभ्रुव इत्यनेन विलासवत्याः समस्तप्रशस्तलक्षणयोगो लक्ष्यते। तथाविधायाश्च वक्त्रे विलासहासस्याभावोऽनुपपद्यमानः शोकव्यतिरिक्तमात्मकारणं कल्पयतीति अभावपूर्विकेयमर्थापत्तिः।

अनेकशोऽर्थापत्त्यादिपूर्विका यथा,—

दृष्ट्वा विभ्रमिणीमेतां विद्मो लीलागृहं स्मरम्।
स्मरश्च मृगशावाक्ष्या मनसस्तस्याः कृतास्पदः॥

अत्र विभ्रमिणीति प्रशंसायां मत्वर्थीयस्तेन विभ्रमाणामुत्कर्षो लक्ष्यते। ते चान्योपदेशादसम्भवन्तो सम्मयमुपाध्यायं बोधयन्ति। तस्याग्रतः पार्श्वतो वानुपलभ्यमानस्य तन्मनस्यवस्थानं लक्ष्यते। सेयमाद्यप्रत्यक्षपूर्विका द्वितीया चार्थापत्तिपूर्विकार्थापत्तिर्भवति। अयमेव च मनोभूर्मनसि कामिनीनां सम्भवतीति आप्तोपदेशादागमपूर्विकापि भवति।

असत्ता या पदार्थानामभावः सोऽभिधीयते।
प्रागभावादिभेदेन स षड्विध इहेष्यते॥ ५४॥

तेषु प्रागभावो यथा,—

सग्गं अपारिजाअं कोत्थुहलच्छीविरहिअं महुमहस्स उरं।
सुमरामि महणपुरओ अमुद्धअंदं च हरं अगवभारं॥

प्रध्वंसाभावो यथा,—

धृतिरस्तमिता गतिश्च्युता विरतं गेयमृतु र्निरुत्सवः।
गतमाभरणप्रयोजनं परिशून्यं शयनीयमद्य मे॥

इतरेतराभावो यथा,—

कर्णोत्पलं न चक्षुर्न न चक्षुः श्रवणोत्पलम्।
इति जानन्नपि जनो मन्यते नेत्रदीर्घताम्॥

अत्यन्ताभावो यथा,—

जं जस्स होइ सारं तं सो देइत्ति किमत्थ अच्छरिअं।
अणहो हंपि छुदि सांतइदो हरगं सवत्तीणं॥

अन्ये पुनरन्ययात्यन्ताभावमाचक्षते यथा,—

प्रसीद सद्यो मुञ्चेमं चण्डि मानं मनोगतम्।
दृष्टमात्रेऽपि ते तत्र रोषः खकुसुमायते॥

सामर्थ्याभावो यथा,—

मानुषीषु कथं वा स्यादस्य रूपस्य सम्भवः।
न प्रभातरलं ज्योतिरुदेति वसुधातले॥

त एते षडपि निगदेनैव व्याख्याताः। अभावाभावोऽप्यभाव एव। तत्र प्रागभावप्रध्वंसो यथा,—

उद्यानसहकाराणामनुद्भिन्ना न मञ्जरी।
देयः पथिकनारीणां सतिलः सलिलाञ्जलिः॥

प्रध्वंसप्रागभावो यथा,—

न मर्त्यलोकस्त्रिदिवात् प्रहीयते म्रियेत नाम्ना यदि वल्लभो जनः।

प्रध्वंसप्रध्वंसो यथा,—

निवृत्तमेव त्रिदिवप्रयोजनं मृतः स चेज्जीव(वि)त एव जीवति।

प्रध्वंसप्रागभावप्रध्वंसो यथा,—

नामिलितमस्ति किञ्चित् काञ्चीदेशस्य सर्वथा नाथ।
प्रसरतु करलावायं प्रकृतिसमे मध्यदेशेऽपि॥

प्रध्वंसप्रध्वंसस्य प्रध्वंसो यथा,—

एषा प्रवासं कथमप्यतीत्य याता पुनः संशयमन्यथैव।
को नाम पाकाभिमुखस्य जन्तो द्वाराणि दैवस्य पिधातुमीष्टे॥

इतरेतराभावाभावो यथा,—

शासनेऽपि गुरुणि व्यवस्थितं कृत्यवस्तुनि नियुङ्क्ष्व कामतः।
तत् प्रयोजनधनं धनञ्जयादन्य एष इति मां च मावगाः॥

अत्यन्ताभावस्य सामर्थ्याभावस्य च प्रध्वंसाभावो यथा,—

अनाप्तपुण्योपचयैर्दुरापा फलस्य निर्द्धूतरजाः सवित्री।
तुल्या भवद्दर्शनसम्पदेषा वृष्टेर्दिवो वीतवलाहकायाः॥

एते नातिदुर्बोधा इति न व्याख्याताः।

अर्थालङ्कृतयोऽप्येवमेताश्चतुर्विंशतिसङ्ख्यया।
कथिताः काव्यवित्तानां चित्तप्रह्लादहेतवे॥ ५५॥

इति श्रीमहाराजाधिराजश्रीमद्भोजराजविरचिते सरस्वतीकण्ठाभरणे अर्थालङ्कारनिर्णयो नाम तृतीयः परिच्छेदः॥

---

शब्देभ्यो यः पदार्थेभ्य उपमादिः प्रतीयते।
विशिष्टोऽर्थः कवीनां स उभयालङ्क्रिया मता॥ १॥
उपमा रूपकं साम्यं संशयोक्तिरपह्नुतिः।
समाध्युक्तिः समासोक्तिरुत्प्रेक्षाऽप्रस्तुतस्तुतिः॥ २॥
तुल्ययोगितोल्लेखः ससन्देहः समुच्चयः।
आक्षेपोऽर्थान्तरन्यासः सविशेषा परिष्कृतिः॥ ३॥

दीपकक्रमपर्यायातिशयस्तु प्रभाविकाः।
संसृष्टिरिति निर्दिष्टास्ता श्चतुर्विंशति र्बुधैः॥ ४॥

तत्र,—प्रसिद्धे रनुरोधेन यः परस्परमर्थयोः।
भूयोऽवयवसामान्ययोगः सेहोपमा मता॥ ५॥
एकाभिधीयमाने स्यात् तुल्ये धर्म्मे पदार्थयोः।
प्रतीयमानेऽप्यपरा द्विविधापि च सा त्रिधा॥ ६॥
पदवाक्यप्रपञ्चाख्यै र्विशेषै रुपपद्यते।
पृथगष्टविधत्वेन ताश्चतुर्विंशतिः पुनः॥ ७॥
समासात् प्रत्ययाच्चैव द्विविधा स्यात् पदोपमा।
या समासोपमा तत्र चतुर्धा साभिपद्यते॥ ८॥
इवार्थान्तर्गतेरेका सामान्यान्तर्गतेः परा।
अन्तर्भूतोभयार्थान्या सान्या सर्वसमासभाक्॥ ९॥

तास्वन्तर्भूतेवार्था यथा,—

मुखमिन्दुसुन्दरं ते विसकिसलयकोमले भुजालतिके।
जघनस्थली च सुन्दरि तवशैलशिलाविशालेयम्॥

अत्रेन्दुरिव सुन्दरमिन्दुसुन्दरमितीवार्थः, उपमानानि सामान्यवचनैरिति समासेनैवोक्तः। एवं विसकिसलये इव कोमले, शैलशिलेव विशालेति। सेयमन्तर्गतेवार्था नाम समासोपमासु पदोपमाभक्तिः।

अन्तर्भूतसामान्या यथा,—

चन्दसरिसं मुह से अमअसरिच्छो अ मुहरसो।
विद्मोसकअग्गाहरदसुज्ज्वलचुम्बणं सरिसं सा।

अत्र चन्द्रेण सदृशं चन्द्रसदृशं मुखं, अमृतेन सदृशोऽमृतसदृशो मुखरस इति समासे सुन्दरमधुरादिसामान्यशब्दप्रयोगो न श्रूयते प्रतीयते च सदृशादे र्यौगिकादिति सामान्यधर्मस्तत्र सौन्दर्यमाधुर्यादेः उपमानप्रसिद्धस्य उपमेये समासेनैव प्रतिपादितत्वादियमन्तर्भूतसामान्यानाम समासोपमासु पदोपमाभक्तिः।

अन्तर्भूतोभयार्थो यथा,—

कमलकरा रम्भोरू कुवलयनयना मिन्दुवदना सा ।
कह णु णवचंपअंगी मुणालबाहुपि आतव इव ॥

अत्र कमलमिव ताम्रौ रम्भेव पीवरौ कुवलयमिव श्यामे मृगाङ्क इव प्रेक्षणीयं नवचम्पकमिव गौरं मृणालमिव कोमलौ करावुरू नयने वदनमङ्गंयस्याः सा तयोक्तेत्यन्यपदार्थेन समासेनैव द्योतकसामान्ययोरुक्तत्वादियमन्तर्भूतवसामान्या नाम समासोपमासु पदोपमाभक्तिः ।

सर्वसमासा यथा,—

शरदिन्दुसुन्दरमुखी कुवलयदलदीर्घलोचना सा मे ।
दहति मनः कथमनिशं रम्भागर्भाभिरामोरुः ॥

अत्रोपमानोपमेयधर्माणामिन्दुसुन्दरादिशब्दैरिवार्थस्य समासेनैवाभिधानं सर्वं समासे स्यादिति सर्वसमासोपमेयं समासोपमासु पदोपमाभक्तिः ।

या प्रत्ययोपमेतुक्ता काव्यविद्भिः पदोपमा ।
चतुर्धा भिद्यते सापि प्रत्ययार्थप्रभेदतः ॥ १० ॥
प्रत्ययो ह्युपमेये स्यादुपमानेऽपि कश्चन ।
तत् सामान्ये भवेत् कश्चिदिवार्थे कश्चिदिष्यते ॥ ११ ॥
तेषां वशात्तदुपमा भवेत्तद्व्यपदेशभाक् ।
उदाहरणमेवास्या रूपव्यक्तौ निदर्श्यते ॥ १२ ॥

तत्र प्रत्ययस्योपमेयस्यार्थे यथा,—

हंसो ध्वाङ्क्षविरावी स्यादुष्ट्रक्रोशी च कोकिलः ।
खरनादी मयूरोऽपि त्वञ्चेद्वदसि वाग्मिनि ॥

अत्र कर्त्र्युपमाने इत्यनेन यदोपमाने उपपदे ध्वाङ्क्ष इव विरौतीति सामानाधिकरण्येन कर्त्तर्येव प्रत्ययः तदोपमेयस्यार्थो भवति । एवमुष्ट्रक्रोशी खरनादीत्यत्रयोरपि द्रष्टव्यम् । सेयमुपमेयार्थप्रत्यया नाम प्रत्ययोपमासु पदोपमाभक्तिः ।

प्रत्ययस्त्रोपमानार्थे यथा,—

पूर्णेन्दुकल्पवदना मृणालीदेश्यदोर्लता ।
चक्रदेशीयजघना सा स्वर्गेऽपि न दृश्यते ॥

अत्र पूर्णेन्दुरिव पूर्णेन्दुरित्याद्रिकयोपचारदृत्त्या यद्यपि पूर्णेन्दु-प्रभृतय उपमानशब्दा अमुत्रपमेयेषु वदनादिषु वर्त्तन्ते तेभ्यश्च यद्यपि स्वार्थे एव स्वार्थिकाः कल्पबादयो भवन्ति तथापि ते शब्दशक्तिस्वा-भाव्याद् गुणभूतमुपमानार्थमात्रं ब्रुवते। यथा शुक्लादिभ्यस्तरबादयः तथा ह्ययञ्च शुक्लोऽयमनयोः शुक्लतर इत्युक्ते शौक्ल्यस्यैव प्रकर्षो गम्यते न शौक्ल्यवतः सेयमुपमानार्थप्रत्यया नाम प्रत्ययोपमासु पदो-पमाभक्तिः ।

सामान्यार्थप्रत्ययेन यथा,—

स्वर्गायति सुधारश्मि र्मन्मथोऽतिमृतायते ।
मृतस्य कान्ताविरहे स्वर्गोऽपि नरकीयति ॥

अत्रोपमानादाचारादिभिः स्वर्गादिभ्यः क्यजादय आचारलक्षणक्रिया-विशेष उत्पद्यमाना उपमानोपमेययोः सामान्य एवोत्पद्यन्त इति सेयं सामान्यार्थप्रत्यया नाम प्रत्ययोपमासु पदोपमाभक्तिः ।

इवार्थप्रत्ययेन यथा,—

एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥

अत्र तेन तुल्यक्रिया चेद्वतिरित्यनेन चन्द्रशब्दाच्चन्द्रेण तुल्यं दृश्य त इतीवार्थे एव प्रत्ययो ननु तुल्यक्रियार्थे अन्यथा दृश्यत इति इवार्थे इव तुल्यक्रियाप्रयोगोऽपि न स्यात् । तदप्रयोगेऽपि च गौरिव गवयं इत्यादौ वतिः प्रसज्येत । सेयमिवार्थप्रत्यया नाम प्रत्ययोपमासु पदोपमाभक्तिः ।

वाक्योपमा तु या तत्र द्वैविध्यं सापि गच्छति ।
एका पदार्थयोः साम्ये परा वाक्यार्थयो र्मिथः ॥ १३ ॥

आद्या पूर्णा च लुप्ता च लुप्तपूर्णा तथैव च ।
पूर्णलुप्तेति चाख्याता कविमुख्यैश्चतुर्विधा ॥ १४ ॥

तत्र, पूर्णा सामान्यधर्मस्य प्रयोगे द्योतकस्य च ।
उपमानस्य च भवेदुपमेयस्य चैव हि ॥ १५ ॥

यथा, कमलमिव चारुवदनं मृणालमिव कोमलं भुजायुगलम् ।
अलिमालेव सुनीला तथैव मदिरेक्षणे कबरी ॥

अत्र कमलमृणालालिमालादीनामुपमानद्योतकतुल्यधर्मोपमेयवाचकानां चतुर्णामपि पदानां पृथक् पृथक् प्रयोगे पदार्थयोः सादृश्याभिधीयमानत्वादियं पूर्णा नाम पदार्थोपमासु वाक्योपमाभक्तिः ।

लोपे सामान्यधर्मस्य द्योतकस्य च योपमा ।
प्रतीयमानसादृश्ये द्वयो लुप्तेति तां विदुः ॥ १६ ॥

यथा, न पद्मं मुखमेवेदं न मृगौ चक्षुषी इमे ।
न केसराणि कान्ताया इमास्ता दन्तपङ्क्तयः ॥

अत्र कान्तामुखादावुपमेये पद्मादिविपर्ययज्ञानप्रत्याख्यानेन इवादीनामभावेऽपि कान्त्यादिलुप्तधर्मप्रतीतेर्लुप्ता नामेयं पदार्थोपमासु वाक्योपमाभक्तिः ।

लोपे सामान्यधर्मस्य लुप्तपूर्णेति गद्यते ।

यथा, राजीवमिव ते वक्त्रं नेत्रे नीलोत्पले इव ।
रम्भास्तम्भाविवोरू च करिकुम्भाविव स्तनौ ॥

अत्र सामान्यधर्मे लुप्ते प्रतीयमानसादृश्यत्वेन पदार्थयोरुपमानोपमेयभावस्य परिपूर्णत्वे लुप्तपूर्णा नामेयं पदार्थोपमासु वाक्योपमाभक्तिः ।

द्योतकस्य तु लोपे या पूर्णा लुप्तेति सा स्मृता ॥ १७ ॥

यथा, त्वन्मुखं पुण्डरीकश्च फुल्ले सुरभिगन्धिनी ।
कोमलापाटलौ तन्वि पल्लवश्चाधरश्च ते ॥

अत्र तत्तत्य सदृशयोरनभिधानात् सादृश्यस्य पुनरुपमानोपमेयभाव-

विवक्षा तेन स्वपदतोऽन्यत्वे सतीतरेतरयोगेनोपमानोपमेययोरेकश्लेषेण च तद्विशेषणयोः समुदायेनाभिधानादिवादिमन्तरेणापि उपमानादीनां चतुर्णामपि पूर्णत्वे सत्यक्षार्थत्वादिवादिलुप्यत इति पूर्णलुप्ता नामेयं पदार्थोपमासु वाक्योपमाभक्तिः ।

यापि वाक्यार्थयोः सापि चतुर्धैकेवशब्दिका ।
नैकेवशब्दिकेवादिशून्या वैधर्म्यवत्यपि ॥ १८ ॥

तास्वेकेवशब्दा यथा,—

पाण्डरोऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन ।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः ॥

अत्र हिमवत्पाण्डरयोर्निर्झरहारयोर्बालातपहरिचन्दनयोश्च परस्परमुपमानोपमेयविवक्षायां विशेषणविशेष्यभावपरिकल्पनेन वाक्यार्थयोर्द्वयोरपि कल्पितत्वादेकेनैव इवशब्देन तयोः परस्परमुपमानोपमेयभावोऽभिहितः इतीयमेकेवशब्दा नाम वाक्यार्थोपमासु वाक्योपमाभक्तिः ।

अनेकेवशब्दा यथा,—

दिने दिने सा परिवर्धमाना लब्धोदया चान्द्रमसीव लेखा ।
पुपोष लावण्यमयान् विशेषान् ज्योत्स्नान्तराणीव कलान्तराणि ॥

अत्र क्रियापदस्यावाक्यार्थद्वयैकतापत्तिहेतोः सकर्मकत्वात् कर्तुः कर्मणश्चोपमानात् पृथगिवशब्दप्रयोग इति सेयमभिधीयमानसादृश्याऽनेकेवशब्दा नाम वाक्यार्थोपमासु वाक्योपमाभक्तिः ।

अनिवादिशब्दा यथा,—

दिवो जागर्ति रक्षायै पुलोमारिर्भुवो भवान् ।
असुरास्तेन हन्यन्ते सावलेपा नृपा त्वया ॥

अत्र पुलोमारिवर्णनीययोर्द्यावाभूम्योरसुराणामवलिप्तपार्थिवानाञ्च तुल्यक्रियासमावेशादिवादिमन्तरेणापि वाक्यार्थानां परस्परमुपमानोपमेयभावोऽवगम्यते इतीयमनिवादिशब्दा नाम वाक्यार्थोपमासु वाक्योपमाभक्तिः ।

वैधर्म्यवती यथा,—

6, 52 | प्रहितः प्रधनाय माधवानहमाकारयितुं महीभृता।
| न परेषु महौजसश्छलादपकुर्वन्ति मलिम्लुचा इव॥

अत्र शत्यपुत्रपमाने सत्यपुत्रपमेये सत्यपि चेदशब्दे महौजसां मलिम्लुचानाञ्च योऽयं छलापकरणं नाम वस्तुधर्मः स उपमान एव न नियम्यत इति वैधर्म्यवती नामेयं वाक्यार्थोपमासु वाक्योपमाभक्तिः।

यत्रोक्तिभङ्ग्या वाक्यार्थसादृश्यमवगम्यते।
वाक्यार्थयो विस्तरतः सा प्रपञ्चोपमेष्यते॥ १९॥
सा तु प्रकृतरूपा स्याद्रूपेण विकृता तथा।
तयोः प्रकृतरूपा सा विज्ञेया च चतुर्विधा॥ २०॥
तत्रात् समस्तोपमा तद्वदेकदेशोपमा परा।
मालोपमा तृतीया तत्राचतुर्थी रसनोपमा॥ २१॥

तासु समस्तोपमा यथा,—

अलिवलयैरलकैरिव कुसुमस्तवकैः स्तनैरिव वसन्ते।
भान्ति लता ललना इव पाणिभिरिव किशलयैरधिकम्॥

अत्र वसन्तलक्ष्मीपरिसंस्कृतानां लतानां ललनानाञ्च प्रतीयमानसादृश्यानामुपमानोपमेयभावविवक्षायां येयमलिवलयादिभिरलकादीनां प्रतीयमानसादृश्यानामेव पृथक् पृथगिवशब्दप्रयोगवर्तीति विस्तारेणावयविनोऽवयवानाञ्चेति सामस्त्येन वाक्यार्थयोरौपम्योक्तिभङ्गिः सेयं समस्तोपमा नाम प्रकृतरूपोपमासु प्रपञ्चोपमा भक्तिः।

एकदेशोपमा यथा,—

कमलदलैरधरैरिव दशनैरिव केशरैर्विराजन्ते।
अलिवलयैरलकैरिव कमलैर्वदनैरिव नलिन्यः॥

अत्र नलिनीनां विलासिनीनाञ्च परस्परमुपमानोपमेयभावे वक्तव्ये विलासिनीलक्षणमुपमानार्थमेवावयवान्तराणि च यानि स्तनादुपमेयानि तानि परित्यज्य कमलमेवैकं तदवयवैर्दलादिभिः सहाधरा-

दिभिरुपमानैः पृथक् पृथगिव प्रयोगाद्विस्तरेणोपमितं तेनेयमेकदेशोपमा नाम प्रकृतरूपोपमासु प्रपञ्चोपमाभक्तिः।

मालोपमा यथा,—

सोहव्व लक्खणमुहं वणमालव्व विअडाइ विरहस्स उरं।
किंतिव्व पवणतणआ राघवलाइसे विलपाइ दिट्ठ॥

अत्र रामदृष्टे लक्ष्मणमुखादिविनिवेशिन्याः शोभाद्युपमानमालया प्रतीयमानसादृश्यया विस्तरेणोपमिते मालोपमा नामेयं प्रकृतरूपोपमासु प्रपञ्चोपमाभक्तिः।

रसनोपमा यथा,—

चन्द्रायते शुक्लरुचाय हंसो हंसायते चारुगतेन कान्ता।
कान्तायते स्पर्शसुखेन वारि वारीयते स्वच्छतया विहायः॥

अत्र चन्द्रादीनां शौक्ल्यादिभिरभिधीयमानसादृश्ये येयं रसनाक्रमेण पश्चाद्वलनया विस्तरवती हेतुमती च प्रतत्योपमापङ्क्तिः तयैवैक-वाक्यताकरणेन शरद्रमणीयतोपवर्णनमिति सेयं रसनोपमा नाम प्रकृतरूपोपमासु प्रपञ्चोपमाभक्तिः।

इतीमास्तास्तत्त्वतोऽपि रूपेण प्रकृतेन याः।
उपमानास्ततस्त्वोऽन्या विकृतेन प्रचक्ष्महे॥ २२॥
विपर्यासोपमा तासु प्रथमाथोभयोपमा।
अथोत्पाद्योपमा नाम तुरीयानन्वयोपमा॥ २३॥

तासु विपर्यासोपमा यथा,—

यत्त्वन्नेत्रसमानकान्तिसलिले मग्नं तदिन्दीवरम्
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी।
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता
स्तत् सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते॥

अत्र नेत्रादीनामुपमेयत्वमिन्दीवरादीनामुपमानत्वमिति प्रसिद्धौ येय-मत्यनुरागान्नेत्रादिष्वाधिक्यबुद्धिं नीतत्रनुरागादिन्दीवरादिषु तदनु-

कार्यबुद्धिस्थयेह रामेण विरह्विणा अभिधीयमानसादृश्यानामनयोः परस्परमुपमानोपमेयभावः प्रसिद्धे विपर्यासेन कल्पित इति सेयं विपर्यासोपमा नाम विकृतरूपोपमासु प्रपञ्चोपमाभक्तिः। उभयोपमा यथा,—

तवाननमिवाम्भोजमम्भोजमिव ते मुखम् ।
निलीनां नलिनीषण्डे कथं नु त्वां लभेमहि ॥

अत्राप्यत्यन्तसादृश्यात् एकस्मिन् पक्षे प्रसिद्धे विपर्यास इति सेयं प्रतीयमानसादृश्योभयोपमा नाम विकृतरूपोपमासु प्रपञ्चोपमाभक्तिः। उत्पाद्योपमा यथा,—

उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम् ।
तदोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥

अत्रोपमानार्थमुत्पाद्योपमेयेन प्रतीयमानमभिधीयमानञ्च सादृश्यमभिहितमिति सेयमुत्पाद्योपमा नाम विकृतरूपोपमासु प्रपञ्चोपमाभक्तिः। अनन्वयोपमा यथा,—

त्वन्मुखं त्वन्मुखमिव त्वद्दृशौ त्वद्दृशाविव ।
त्वन्मूर्त्तिरिव मूर्त्तिस्ते त्वमिव त्वं कृशोदरि ॥

अत्र त्वमेवेदृशी नान्या तत्सदृशीत्यनन्वये सति उपमानोपमेयभावविवक्षयैकस्यापि वस्तुनोऽभेदमुपकल्प्य प्रतीयमानसादृश्यमौपम्येनाभिहितमिति सेयमनन्वयोपमा नाम विकृतरूपोपमासु प्रपञ्चोपमाभक्तिः।

यदोपमानशब्दानां गौणवृत्तिव्यपाश्रयात् ।
उपमेये भवेद्वृत्तिस्तदा तद्रूपकं विदुः ॥ २४ ॥
शब्दार्थोभयभूयिष्ठभेदात्त्रेधा तदुच्यते ।
शब्दभूयिष्ठमेतेषु प्रकृतं विकृतं तथा ॥ २५ ॥
अर्थभूयिष्ठमप्याङ्गः प्राधान्येनाङ्गिनो द्विधा ।
द्विधैवोभयभूयिष्ठं शुद्धसंकीर्णभेदतः ॥ २६ ॥
चतुर्धा प्रकृतं तेषु शब्दभूयिष्ठमुच्यते ।
समस्तं व्यस्तमुभयं सविशेषणमित्यपि ॥ २७ ॥

तेषु समस्तं यथा,—

पाणिपद्मानि भूपानां सङ्कोचयितुमीशते ।
त्वत्पादनखचन्द्राणामर्चिषः कुन्दनिर्मलाः ॥

अत्रोपमितव्याघ्रादिभिः सामान्याप्रयोग इति समासे पद्मानीव पद्मानि चन्द्रा इव चन्द्रा इत्यभेदोपचारेणात्यन्तसादृश्यात् पाणीनां नखानाञ्च पद्मचन्द्रादिभिरभिधाने सामान्येवादिशब्दाप्रयोगादुपमानार्थस्तिरोभूत इति सोऽयं गौणशब्दव्यपाश्रयः समासहेतुकः समस्तरूपं नाम प्रस्तरूपकेषु शब्दभूयिष्ठरूपकभेदः ।

व्यस्तं यथा,—

अङ्गुल्यः पल्लवान्यासन् कुसुमानि नखार्चिषः ।
बाहू लते वसन्तश्रीस्त्वं नः प्रत्यक्षचारिणी ॥

अत्रापि पूर्ववत् पल्लवकुसुमलतावसन्तश्रीशब्दानां गुणवृत्त्याश्रयेणाङ्गुलीनखार्चिर्बाहुवर्णनीयनायिकाभिः सह सामानाधिकरण्यात् सामान्येवादिशब्दाप्रयोगाच्च तिरोभूतेऽप्युपमानार्थे समासो न कृत इत्यसमस्तरूपं नाम प्रस्तरूपकेषु शब्दभूयिष्ठरूपकभेदः ।

समस्तव्यस्तं यथा,—

स्मितं मुखेन्दो ज्योत्स्ना ते प्रभाम्बु कुचकुम्भयोः ।
दोर्लतापल्लवे पाणौ पुष्पं सखि नखार्चिषः ॥

अत्र मुखेन्दोः स्मितमेव ज्योत्स्ना कुचकुम्भयोः प्रभैवाम्बु दोर्लतयोः पल्लवभूते पाणौ नखार्चिष एव पुष्पमिति समस्तानामसमस्तानाञ्च गौणशब्दानामुपमातिरस्कारेण दर्शितत्वादिदं समस्तव्यस्तं नाम प्रस्तरूपकेषु शब्दभूयिष्ठरूपकभेदः ।

सविशेषणं यथा,—

हरिपादः शिरोलग्नजह्नुकन्याजलांशुकः ।
जयत्यसुरनिःशङ्कसुरानन्दोत्सवध्वजः ॥

अत्र यथोक्तविशेषणविशिष्टो यो हरिपादः यश्च हरिहतासुरेभ्यो निःश-

द्धानां सुराणामानन्दोत्सवध्वजस्तयोः सविशेषणयोरेव प्रतीयमान-साहश्ययोः परस्परमुपमानोपमेयभाव इति सविशेषणं नाम प्रकृतरूपकेषु शब्दभूयिष्ठरूपकभेदः। तदेतच्चतुष्टयमपि प्रकृतसमासादिशब्दैर्निर्वृत्तमिति प्रकृतमुच्यते।

चतुरो विकृतस्यापि प्रभेदान् प्रतिजानते।
परम्परा च रशना माला रूपकरूपकम्। २८।

तेषु परम्परा यथा,—

ववसाअरइपओसो रोसगइन्ददिढसिंखलापडिबन्धा।
कह कह वि दासरहिणो जअकेसरिपञ्जरो गओ घणसमओ॥

अत्र दाशरथिसम्बन्धिनो व्यवसायस्य रविणा रोषस्य गजेन्द्रेण जयस्य केशरिणा सहोपमानोपमेयभावकल्पनया यदेकं रूपणम् अथैतत्सम्बन्धितया प्रदोषशृङ्खलाप्रतिबन्धपञ्जराणां द्वितीयं ततस्त्रयाणामपि घनसमयेन तृतीयं तेनेयं रूपकपरम्परा नाम विकृतरूपकेषु शब्दभूयिष्ठरूपकभेदः।

रशना यथा,—

किशलयकरैर्लतानां करकमलैर्मृगदृशां जगज्जयति।
नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितां मदनः॥

अत्र किशलयकरैः करकमलैः कमलमुखैर्मुखेन्दुभिरिति रशनाक्रमेण शब्दानां संदर्भे उपलभ्यमानहृदयानां मनोभुवो जगद्विजये लतादिसम्बन्धात् करणाभावमगमयतीति रशना नामैतद् विकृतरूपकेषु शब्दभूयिष्ठरूपकभेदः।

माला यथा,—

स्वामी दुर्नयवारणव्यतिकरे शौर्यप्रोपदेशे गुरु-
र्विस्रम्भे हृदयं नियोगसमये दासो भये चाश्रयः।
दाता सप्तसमुद्रसीमरशनादामाङ्किताया: चितेः
सर्वाकारमहो रूदकरुरूहत् को वा न कर्णो मम॥

अत्र खाम्यादीनां मालाक्रमेण निरूपितत्वात् मालारूपकं नाम विकृतरूपकेषु शब्दभूयिष्ठरूपकभेदः ॥

रूपकरूपकं यथा,—

मुखपङ्कजरङ्गेऽस्मिन् भ्रूलता नर्तकी तव ।
लीलानाट्यामृतं दृष्टौ सखि यूनां निषिञ्चति ॥

अत्र मुखमेव पङ्कजं तदेव रङ्गः भ्रूरेव लता सैव नर्तकी लीलैव नाट्यं तदेवामृतमिति रूपितानामपि रूपणेन समासेन रूपकरूपकं नामायं विकृतरूपकेषु शब्दभूयिष्ठरूपकभेदः। तदेतच्चतुष्टयमपि परम्परादिभि विकृतसमासादिशब्दै निबद्धमिति विकृतमुच्यते ।

समस्तञ्चासमस्तञ्च युक्तञ्चायुक्तमेव च ।
चतुर्धाङ्गिप्रधानं स्यादर्थभूयिष्ठरूपकम् ॥ २८ ॥

तेषु समस्तं यथा,—

ताम्राङ्गुलिदलश्रेणि नखदीधितिकेशरम् ।
ध्रियते मूर्ध्नि भूपालैर्भवच्चरणपङ्कजम् ॥

अत्र समस्तोपमायामिव पादाख्यः पङ्कजाख्यश्चावयवी परस्परमुपमानोपमेयभूतः प्रतीयमानाभिधीयमानसादृश्यै रङ्गुलिश्रेणिनखदीधितिभि र्दलश्रेणिकेशरैश्च सह सामस्त्येन रूपितस्तद्योग्यस्थानविन्यासेन चार्थस्य प्राधान्यमभिहितमिति समस्तं नाम रूपकमिदमङ्गिप्रधानरूपकेष्वर्थभूयिष्ठरूपकभेदः। न चैतद्वाचत्र पाणिपद्मानि भूपानामित्यादेरुदाहरणादिदं न भिद्यते इति। तत्र हि वाक्ये नखार्चिषां क्रियासमावेशेन प्राधान्यमवगम्यते न नखचन्द्राणां तस्य न रूपकं। पाणिपद्मानीत्यस्य तु यद्यपि सङ्कोचक्रियायामस्ति समावेशस्तथापि न तानि वर्णनीयत्वेन उपन्यस्तानि अपि तु जिगीषुभाववर्णनाङ्गतया। अतः समावेशमात्रभणनान्न तत्र पाणिपद्मानां नापि नखचन्द्राणामर्थप्राधान्यमपि तु शब्दप्राधान्यमेव। इह तु चरणपङ्कजताम्राङ्गुलिदलश्रेण्यादिविशेषणविशिष्टस्य भूपालमौलि-

विनिवेशनेन प्राधान्यं प्रतीयत इति उभयमपि निरवद्यम्।

असमस्तं यथा,—

अकस्मादेव ते चण्डि स्फुरिताधरपल्लवम्।
मुखं मुक्तारुचो धत्ते घर्माम्भःकणमञ्जरीः॥

अत्रापि एकदेशोपमाक्रमेण अधरपल्लवस्वेदाम्बुकणमञ्जरीणां सहजाहार्यावयवानामभिधानादुपमानावयविनश्चानभिधानादिदमसमस्तं नाम रूपकमङ्गिप्रधानेष्वर्थभूयिष्ठरूपकभेदः। अत्रापि च मुख्यवस्तुनः स्फुरिताधरपल्लवमिति विशेषणविशिष्टस्य घर्माम्भःकणमञ्जरीधारणक्रियासमावेशः प्राधान्यं स्थापयति।

युक्तं यथा,—

स्मितपुष्पोज्ज्वलं लोलनेत्रभृङ्गमिदं मुखम्।
न कस्य नन्दनं सुभ्रु सुरभिश्वसितानिलम्॥

अत्र स्मितपुष्पोज्ज्वलं लोलनेत्रभृङ्गं सुरभिश्वसितानिलं ते मुखं न
कस्य नन्दनमिति पुष्पभृङ्गादीनां परस्परं युक्ततयोपपत्तेर्युक्तं नामाय- ९
मङ्गाङ्गिप्रधानरूपकेष्वर्थभूयिष्ठो रूपकभेदः। अत्र यद्यपि नन्दनमिव
नन्दनमिति गौणवृत्तिव्यपाश्रयः शब्द एव समस्तविशेषणैः परिष्क्रियते
तथापि नन्दयतीति नन्दनमिति क्रदभिहितक्रियासमावेशे मुखाख्यस्यैव
वस्तुनः प्राधान्यमवगम्यते, तस्य त्वपक्रियत इत्यर्थप्रधानमेवैतत्।

अयुक्तं यथा,—

इदमार्द्रस्मितज्योत्स्नं स्निग्धनेत्रोत्पलं मुखम्।
जगन्नेत्रेन्दुरस्माकं कथं तापाय कल्पते॥

अत्र शय्योत्स्नोत्पलयोरयोगाज्जगन्नेत्रेन्दोश्च मुखस्य सन्तापकारणमिदमयुक्तं नामाङ्गिप्रधानरूपकभेदेष्वर्थभूयिष्ठरूपकभेदः। अत्रापि पूर्ववन्मुखाख्यस्य वस्तुनो विशेषणैः परिष्करणमिति तस्यैव प्राधान्यमवगम्यते।

भेदानङ्गप्रधानस्य चतुरोऽवयवाश्रयान्।

सहजाहार्यतद्योगतद्वैपम्यैः प्रपद्यते ॥ ३० ॥

तेषु सहजावयवं यथा,—

पप्फुरिअउट्ठदलअं तक्खणविगलिअरुहिरमहुविच्छरम् ।
उक्खुडिअकण्ठणालं पडिअं फुडदसणकेसरं मुहकमलम् ॥

अत्रौष्ठादीनां दलादीनाञ्च मुखाम्भोजावयवानां स्फुरितविगलितोत्खण्डितस्फुटविशेषणविशिष्टानां परस्परमुपमानोपमेयभावरूपितानां मुखपक्षे कमलपक्षे च सहजत्वं गम्यत इति सहजावयवो नामायमङ्गप्रधानरूपकेष्वर्थभूयिष्ठरूपकभेदः । नैतद्वाचंत्र ताम्राङ्गुलिदलश्रेणीत्यादेरर्थप्रधानभेदादिदं न भिद्यते । तत्र हि भूपालमौलिधारणक्रियासमावेशेनावयविनः प्राधान्यं विवक्षितमिह तु पतनक्रियायामवयवानाम् । अतएव ते तत्र स्फुरितादिविशेषणै र्विशिष्यन्ते ।

आहार्यावयवं यथा,—

तो कुम्भअण्णपडिवअणदण्डपडिघट्टिआमरिसघोरविसो ।
गलिअंसुअणिम्मोओ जाओ भीसणअरो दसाणणभुअओ ॥

अत्र कुम्भकर्णप्रतिवचनममर्षोऽश्रुकमिति दशाननपक्षे दण्डो घोरविषं निर्मोक इति भुजगपक्षे ये अवयवास्तेषामाहार्यत्वादिदमाहार्यावयवं नाम रूपकमङ्गप्रधानरूपकेष्वर्थभूयिष्ठरूपकभेदः । अत्रापि कुम्भकर्णसम्बन्धपरिघट्टितगलितविशिष्टानामवयवानामेव दशाननभुजगभीषणतरीकरणक्रियायां प्राधान्यमवगम्यते ।

उभयावयवं यथा,—

यस्या बीजमहङ्कृति गुरुतरो मूलं ममेति ग्रहो
नित्यत्वस्मृतिरङ्कुरः सुतसुहृद्भृत्यादयः पल्लवाः ।
स्कन्धो दारपरिग्रहः परिभवः पुष्पं फलं दुर्गतिः
सा मे त्वच्चरणार्हणापरशुना तृष्णालता लूयताम् ॥

अत्र बीजं मूलमङ्कुरः पुष्पं फलमिति लतापक्षे सहजाः तृष्णापक्षे पुनरहङ्कृत्यादयः आहार्यावयवा इति तदिदं सहजाहार्याणामवयवानां

परस्परमुपमानोपमेयभावरूपणेनोभयावयवं नाम रूपकमिदमङ्गप्रधान-रूपकेष्वर्थभूयिष्ठरूपकभेदः । अत्रापि चाङ्गाररसमनाश्रौव्याहरणसुता-दिदारपरिग्रहपराभवदुर्गतीनामवयवानामेव बीजादिरूपेण रूपितानां भगवदाराधनकुठारेण तृष्णालता लूयतामिति प्रार्थनक्रियया समावेशेन प्राधान्यमवगम्यते ।

विषमावयवं यथा,—

मदरक्तकपोलेन मन्मथस्त्वन्मुखेन्दुना ।
नर्तितभ्रूलतेनालं मर्दितुं भुवनत्रयम् ॥

अत्रेन्दुना मुखावयवी रूपितः भ्रुवौ च तदवयवौ लतावयविभ्यां मद-रक्तौ तु कपोलौ न केनापीति सर्वतो वैषम्याद्विषमावयवं नाम रूपक-मिदमङ्गप्रधानरूपकेष्वर्थभूयिष्ठरूपकभेदः । अत्रापि मदरक्तनर्तितयोः कपोलभ्रुवोरेव मन्मथस्य जगत्त्रितयमर्दनक्रियायां प्राधान्यं साधकत-मत्वमवगम्यते ।

आधारवन्निराधारं केवलं व्यतिरेकि च ।
इति शब्दार्थभूयिष्ठं शुद्धमाद्यचतुर्विधम् ॥ ३१ ॥

तेष्वाधारवद् यथा—

सोहइ विसुद्धकिरणो गअणसमुद्दम्मि रअणिवेलालग्गो ।
तारामोत्तापअरो फुडविहडिअमेहसिप्पिसम्पुडविमुक्को ॥

अत्र समुद्रत्वेन रूपितं गगनमाधारं परिकल्प्य रजनिमेघतारकौघानां वेलाशुक्तिमुक्ताफलप्रकाराणां च प्रतीयमानाभिधीयमानसादृश्यानां शब्दप्राधान्यतोऽर्थप्राधान्यतश्च रूपणं कृतमिति आधारवन्नाम रूपक-मिदं शुद्धरूपकेषु शब्दार्थभूयिष्ठरूपकभेदः ।

निराधारं यथा,—

वणराइकेसहत्था कुसुमाउहसुरहिसंचरन्तधम्मेल्ला ।
ससिअरमुक्कतमेहा तमपडिहत्था विणेन्ति धूमुप्पीडा ॥

अत्र धूमोत्पीडानां वनराजिकेशहस्तत्वेन कुसुमायुधसुरभिसञ्चरद्-

नपटत्वेन भ्रमिकरमुञ्चत्तेमेषत्वेन समःप्रतिहस्तत्वेन च रूपितानां निराधाराणामेव शब्दप्राधान्यमर्थप्राधान्यञ्चावधार्यते इति निराधारं नाम रूपकमिदं शुद्धरूपकेषु शब्दार्थभूयिष्ठरूपकभेदः।

केवलं यथा,—

वेल्लितभ्रु गलद्धर्मजलमालोहितेक्षणम्।
विवृणोति मदावस्थामिदं वदनपङ्कजम्॥

अत्रावयविन एव केवलस्य वदनपङ्कजमियेति रूपणादस्य शब्दप्राधान्यं वेल्लितभ्रुप्रभृतिविशेषणोपादानाच्चार्थप्राधान्यमेव लक्ष्यते तेन केवलं नाम रूपकमिदं शुद्धरूपकेषूभयभूयिष्ठरूपकभेदः।

व्यतिरेकवद् यथा,—

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधु नवमनास्वादितरसम्।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघम्
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः॥

अत्र पुष्पकिसलयरत्नमधुपुण्यफलानामनाघ्रातमित्यादिविशेषणापादित-व्यतिरेकाणां प्रतीयमानसादृश्येन शकुन्तलारूपेण रूपणादर्थतः शब्दतश्च प्राधान्यमवधार्यत इति व्यतिरेकवन्नाम रूपकमिदं शुद्धरूपकेषूभय-भूयिष्ठरूपकभेदः।

अथ सङ्कीर्णभेदानां चतुष्टयमिहोच्यते।
स्यात् सावयवसङ्कीर्णं तथा नावयवाह्वयम्॥ ३२॥
तथैवोभयसङ्कीर्णं श्लेषोपहितमित्यपि।
सैषा रूपकभेदानां विंशतिश्चतुरुत्तरा॥ ३३॥

तेषु सावयवसङ्कीर्णं यथा,—

रइअरकेसरणिवहं सोहइ धवलदलसहस्सपरिगअम्।
महुमहदंसणजोग्गं पिआमहुप्पत्तिपङ्कअं व णहअलम्॥

अत्र पितामहोत्पत्तिपङ्कजमिव नभस्तलं शोभत इत्युपमानोपमेय-

भावेनावयविनोरभेदमात्रविवक्षायामुपमेयं न रूपकम्। रविकरधवलाभ्रदलसहस्त्रयोः फेनरनिकरदलसहस्त्रयोश्च प्रतीयमानाभिधीयमानसादृश्ययोश्च सहजाहार्यावयवभूतयोरभेदोपचारेण रूपणमिति सावयवरूपेणोपमायाः संकीर्णत्वादिदं सावयवसङ्कीर्णं नाम सङ्कीर्णरूपकेषूभयभूयिष्ठरूपकभेदः।

निरवयवसङ्कीर्णं यथा,—

दीहो दिअहभुअङ्गो रइबिम्बफणामणिप्पहं विअसन्तो।
अवरसमुद्दमुवगओ मुञ्चन्तो कंचुअधम्मअणिवहं॥

अत्र दिवसावयविनो भुजङ्गावयविनश्चाभिधीयमानप्रतीयमानदैर्घ्यदारुणादिधर्मयोरभेदोपचारेण रूपणमवयवानां चतुर्णां रविबिम्बातपफणामणिनिर्मोकाणां सत्यामप्यभेदोपचारयोग्यतायां द्वयोरिवशब्दप्रयोगेनोपमायां द्वयोस्तत्ररूपणेऽपि असामानाधिकरण्यान्नावयवावयविभावो विभाव्यते इति निरवयवसरोपमायां सङ्कीर्णत्वान्निरवयवसङ्कीर्णं नाम सङ्कीर्णरूपकेषु उभयभूयिष्ठरूपकभेदः।

उभयसङ्कीर्णं यथा,—

धुअमेहमहुअराओ घणसमआअड्ढिओ ण अ विसुक्काओ।
णहपाअवसाहाओ णिअअट्ठाणं व पडिगआ दिसाओ॥

अत्र पादपरूपेण रूपितस्य नभसो यदेतद्दिशां शाखारूपेण रूपणं मेघानाञ्च मधुकरमकरेण तदुभयमप्यन्यपदार्थषष्ठीसमासयोरभिधीयमानेन सावयवं निरवयवञ्चेति उत्प्रेक्षया च सङ्कीर्यमाणमुभयसङ्कीर्णरूपकव्यपदेशं लभते सोऽयं सङ्कीर्णरूपकेषूभयभूयिष्ठरूपकभेदः।

श्लेषोपहितं यथा,—

पीणपओहरलग्गं दिसाणयणसत्तजलअसमअविद्धम्।
सोहग्गपढमइण्हं पधाअइ सरसणहपअं व इन्दहणुम्॥

अत्र सरसनखपदाकारस्येन्द्रधनुष उत्प्रेक्षासादृश्यादभेदोपचारेण रूपणे योऽयं सरसे नभसि पदमस्येति बुवत्पत्त्या श्लिष्टरूपेण

सद्विशेषणप्रकारः यच्च शोभायाः प्रथममग्रं चिह्नं सौभाग्यस्य च प्रथमं चिह्नं पीनपयोधरे मेघे स्तने वा लग्नमित्यादिविशेषणविशेष्यभावः तेनेदं श्लेषेणोपधीयत इति श्लेषोपहितं नाम सङ्कीर्णरूपकेषूभयभूयिष्ठरूपकं भेदः।

द्वयोर्यत्रोक्तिचातुर्यादौपम्यार्थोऽवगम्यते।
उपमारूपकान्यत्वे साम्यमित्यामनन्ति तत्॥ ३४॥
तदानन्त्येन भेदानामसङ्कटं तस्य वृत्तयः।
दृष्टान्तोक्तिः प्रपञ्चोक्तिः प्रतिवस्तूक्तिरेव च॥ ३५॥
तत्र वादेः प्रयोगेन दृष्टान्तोक्तिं प्रचक्षते।
इवादेरप्रयोगेण प्रपञ्चोक्तिं मनीषिणः॥ ३६॥
वस्तु किञ्चिदुपन्यस्य न्यसनात्तत्सधर्मणः।
साम्यप्रतीतिरस्तीति प्रतिवस्तूक्तिरुच्यते॥ ३७॥
तत्र क्रियाजातिगुणद्रव्ययोगादिहेतुके।
साम्येन पूर्वादिभेदेन दृष्टान्तोक्तिर्विधीयते॥ ३८॥

सा क्रियायोगनिमित्तसाम्या दृष्टान्तोक्तिः सामान्यतः पूर्वा यथा,—

स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबन्धधीरः।
जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत्॥

अत्र दृष्टान्तदार्ष्टान्तिकयोरनाविष्टलिङ्गत्वादवस्थाभिधेयत्वाच्च स्थित इत्यादिषु न लिङ्गभेददोषः। अभिधीयमानस्थानादिक्रियायोगजनितं साम्यं समस्तमूर्तिमत् साधारणञ्च पूर्वमेव छायादृष्टान्तः सेयं क्रियायोगनिमित्तसाम्या सामान्यतः पूर्वा नाम दृष्टान्तोक्तिः साम्यभेदः। सैव क्रियागुणयोगनिमित्ता विशेषतः पूर्वा यथा,—

सअलुज्जोइअवसुहे समत्थजीअलोअवित्थरन्तपआवे।
ठाइ ण चिरं रविम्मि व विहाणपडिदा वि मइलदा सप्पुरिसे॥

अत्र जगदुद्योतनक्रियाप्रतापगुणयोगहेतुसाम्यमसाधारणञ्च सूर्यदृष्टान्त इति विशेषतः क्रियागुणयोगनिमित्तेयं पूर्वा नाम दृष्टान्तोक्तिः साम्य-

भेदः । गुणयोगनिमित्तसाम्या सामान्येन उत्तरा यथा,—

रूपं तदोजस्वि तदेव वीर्यं तदेव नैसर्गिकमुन्नतत्वम् ।
न कारणात् स्वाद्विभिदे कुमारः प्रवर्तितो दीप इव प्रदीपात् ॥

अत्र रूपादिगुणयोगजन्मजनितं साम्यं सामान्यरूपञ्च पश्चात् प्रदीपदृष्टान्त इति सामान्यतो गुणयोगनिमित्तेयमुत्तरा नाम दृष्टान्तोक्तिसाम्यभेदः । सैव क्रियागुणद्रव्ययोगनिमित्ता विशेषतो यथा,—

अव्वोच्छिन्नपसरिओ अहिअं उद्धाइफुरिअसूरच्छाओ ।
उच्छाहो सुहगाणं विसमक्खलिओ महाणईण व सोत्तो ॥

अत्राव्यवच्छिन्नप्रसर इति क्रियायोगनिमित्तं स्फुरितशौर्यच्छाय इति गुणयोगनिमित्तं स्फुरितसूर्यच्छाय इति द्रव्ययोगनिमित्तञ्च साम्यं सामान्यविशेषरूपञ्च विषमस्खलितमहानदीस्रोतोदृष्टान्त इति विशेषतः क्रियादियोगनिमित्तेयमुत्तरा नाम दृष्टान्तोक्तिः साम्यभेदः । द्रव्यजातिनिमित्तसाम्या सामान्यतः पूर्वा दृष्टान्तोक्ति र्यथा,—

विसवेओ व्व पसरिओ जं जं अहिलेइ वहलधूमुप्पीड़ो ।
सामलइज्जइ तं तं रुहिरं व महोअहिस्स विद्दुमवेदं ॥

अत्र धूमविषयो र्विद्रुमरुधिरयोश्च द्रव्यजातियोगकृतं प्रतीयमानं श्यामलायस इति धूमविषद्रव्ययोगजनितमभिधीयमानं सामान्यरूपञ्च साम्यं सेयं दृष्टान्तस्त्र पूर्वमेवोपन्यासाद् द्रव्यजातियोगनिमित्तसाम्या सामान्यतः पूर्वा नाम दृष्टान्तोक्तिः साम्यभेदः । सैव द्रव्ययोगनिमित्तसाम्या विशेषतो यथा,—

सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥

अत्र दीपशिखादिद्रव्ययोगकृतं साम्यं सामान्यविशेषरूपौ सञ्चारिणी दीपशिखेति च राजमार्गाट्ट इति च दृष्टान्तौ पूर्वमेवोपन्यस्तौ सेयं विशेषतो द्रव्ययोगनिमित्तसाम्या पूर्वा नाम दृष्टान्तोक्ति साम्यभेदः । द्रव्ययोगनिमित्तसाम्यैव सामान्यत उत्तरा यथा,—

उज्ज्वलालोकया स्निग्धा त्वया त्यक्ता न राजते।
मलीमसमुखी वर्त्तिः प्रदीपशिखया यथा,—

अत्र द्रव्ययोगकृतं साम्यं सामान्यरूपश्च प्रदीपः पश्चात् प्रदीपशिखावर्त्ति दृष्टान्तः सेयं यथोक्तरूपोत्तरा नाम दृष्टान्तोक्तिः साम्यभेदः। सैव क्रियागुणयोगनिमित्तसाम्या विशेषतो यथा,—

तो ताण हअच्छाअं णित्तललोअणसिहं पउत्थपआवं।
आलेक्खपईवाणं व णिअअं पअइ चटुलत्तणं पि विअलिअं॥

अत्र हतच्छायमित्यादीनामन्तर्गतगुणत्वेन क्रियाविशेषणत्वात् क्रियागुणयोगनिमित्तं निजं प्रकृतिचटुलत्वमपि विगलितमिति गुणयोगनिमित्तं च साम्यं सामान्यविशेषरूपश्चालेख्यप्रदीपदृष्टान्त इति क्रियागुणयोगनिमित्तेयं विशेषत उत्तरा नाम दृष्टान्तोक्तिः साम्यभेदः। अथ दृष्टान्तोक्तेर्दृष्टान्तालङ्कारस्य च को विशेषः। उच्यते लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्त इत्यर्थं प्रति न कश्चिद्विशेषः उक्तिं प्रति पुनरनेको विद्यते तद्यथा। दृष्टान्तदार्ष्टान्तिकयोर्भिन्ने वाक्ये निर्देशो दृष्टान्तालङ्कारः, एकवाक्ये निर्देशो दृष्टान्तोक्तिः। साधर्म्यप्रसिद्धये दृष्टान्तालङ्कारः, साधर्म्यप्रसिद्धये दृष्टान्तोक्तिः। इवाद्यप्रयोगे दृष्टान्तालङ्कारः, इवादिप्रयोगे तु दृष्टान्तोक्तिः। अत एवेयमुभयालङ्कारः स पुनरर्थालङ्कार इति साम्योत्कर्षापकर्षोक्तेरुपमानोपमेययोः प्रकृता विकृता चेति प्रपञ्चोक्तिः प्रदर्श्यते। सोपमानोपमेययोः साम्येन प्रकृता यथा,—

अरणवीजाञ्जलिदानलालितास्तथा च तस्यां हरिणा विशश्वसुः।
यथा तदीयैर्नयनैः कुतूहलात् पुरः सखीनाममिमीत लोचने॥

अत्र मृगलोचनोपमानानां तल्लोचनोपमेययोश्च साम्यमविकृतानामेव प्रतीयते सेयं सामान्येन प्रकृता नाम प्रपञ्चोक्तिः साम्यभेदः। प्रकृतेयोपमानोत्कर्षेण यथा,—

गर्भमसंबाधमिमं लोचनयुगलेन वहसि किं मुग्धे।
सन्तीदृशानि दिशि दिशि सरःसु ननु नीलनलिनानि॥

अत्र तव द्वे लोचनोत्पले एव सरसी पुनर्धत्ते नीलोत्पलानीत्युपमानोत्कर्षः प्रस्तुत एव प्रतीयते । सेयमुपमानोत्कर्षेण प्रस्तुता नाम प्रपञ्चोक्तिः साम्यभेदः । सैवोपमानापकर्षेण यथा,—

अन्यतो नय मुहूर्तमाननं चन्द्र एष सरले कलामयः ।
मा कदाचन कपोलयोर्मलं संक्रमय्य समतां नयिष्यति ॥

अत्रोपमानस्य मलिनतास्तोऽपकर्षः प्रस्तुत एव प्रतीयते । सेयमुपमानापकर्षेण प्रस्तुता नाम प्रपञ्चोक्तिः साम्यभेदः । सैवोपमानस्य किञ्चिदुत्कर्षेण यथा,—

आपातमात्ररसिके सरसीरुहस्य
किं बीजमर्पयितुमिच्छसि वापिकायाम् ।
कालः कलिर्जगदिदं न कृतज्ञमज्ञे
स्थित्वा हरिष्यति तवैव मुखस्य शोभाम् ॥

अत्रोपमानस्योपमेयादीषदुत्कर्षः प्रस्तुत एव प्रतीयते । सेयमीषदुत्कर्षेण प्रस्तुता नाम प्रपञ्चोक्तिः साम्यभेदः ।

उपमानोपमेययोः साम्यापत्त्या विस्तृता यथा,—

धरिणीए महाणसकम्मलग्गमसिमइलिएण हत्थेण ।
छित्तं मुहं हसिज्जइ चन्दावत्थं गअं पइणा ॥

अत्रोत्कृष्टोपमेयस्य मषीमालिन्यवैकृतेनोपमानसाम्यमापादमानं प्रतीयते सेयमुपमानोपमेययोः साम्यापत्त्या विस्तृता नाम प्रपञ्चोक्तिः साम्यभेदः । विस्तृतैवोपमेयस्योत्कर्षापत्त्या यथा,—

रत्तुप्पलदलसोहा तीअ वि चलणम्मि सुरहिवारुणीभरिए ।
मअतंबेहि मणहरपडिमापडिएहि लोअणेहि लद्धइआ ॥

अत्रोपमेयस्य मधुमदाताम्रत्ववैकृत उत्कर्षः प्रतीयते सेयमुपमेयोत्कर्षेण विस्तृता नाम प्रपञ्चोक्तिः साम्यभेदः । सैवोपमेयापकर्षापत्त्या यथा,—

मृगं मृगाङ्कः सकलं सदाङ्के बिभर्ति तस्यास्तु मुखं कदाचित् ।
कपोलदेशे मृगनाभिपत्त्रमियात् सखे तस्य ततोऽपकर्षः ॥

अत्र मृगाङ्कः सकलं मृगं सदा बिभर्ति तन्मुखश्च कदाचिन्मृगनाभिमात्रमेव पत्त्रमित्युपमेयस्य वाचनिक्यपकर्षोपपत्तिः प्रतीयते, सेयमुपमेयापकर्षोपपत्त्या विरुता नाम प्रपञ्चोक्तिः साम्यभेदः। सैवोपमेयस्य साम्यापत्त्योपमानोत्कर्षेण च यथा,—

न मर्त्यलोकस्त्रिदिवात् महीयते म्रियते नात्र यदि वल्लभो जनः।
निरन्तमेव त्रिदिवप्रयोजनं मृतः स चेज्जीवत एव जीवति॥

अत्रोपमेयस्य यथोक्तधर्मयोगे सत्युपमानेन पूर्वार्धे साम्यमुत्तरार्धे तु किञ्चिदुत्कर्षो भवति सेयं यथोक्ता विरुता नाम प्रपञ्चोक्तिः साम्यभेदः।

प्रतिवस्तूक्तिरप्येषा विधिरूपा वक्रा च कथ्यते।
दृष्टान्तोक्तिश्च सा च्छायां प्रपञ्चोक्तिश्च गाहते॥ ३८॥

सा दृष्टान्तोक्तिच्छायया विधारुजुः पूर्वा च यथा,—

तन्मन्ये हिमभासस्तारानिकरेण कान्तिरुच्छेद्या।
यत्तस्या मुखमेतद् यदि युवतिमुखानि विजयन्ते॥

अत्र सदिन्दोस्तारकौघेण कान्तिरुच्छेद्या इति पूर्वमृजूक्त्या दृष्टान्तरूपं पश्चाद् यदेतन्मुखं युवतिमुखानि विजयन्त इति ऋजूक्त्यैव दार्ष्टान्तिकरूपं प्रतिवस्तूपन्यस्तमिति सेयं दृष्टान्तोक्तिच्छायया विधारुजुः पूर्वा च प्रतिवस्तूक्तिः साम्यभेदः।

सैवोत्तरा वक्रा च यथा,—

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः॥

अत्र शुद्धान्तदुर्लभमिति वक्रोक्त्या पूर्वं दार्ष्टान्तिकरूपं वस्तूपन्यस्तं पश्चात् दूरीकृताः खलु गुणैरिति वक्रोक्त्यैव दृष्टान्तरूपं प्रतिवस्तूपन्यस्तमिति सेयं दृष्टान्तोक्तिच्छायया विधौ वक्रोत्तरा च प्रतिवस्तूक्तिः साम्यभेदः।

दृष्टान्तोक्तिच्छायया निषेधे ऋजुः पूर्वा यथा,—

न मालतीदाम विमर्दयोग्यं न प्रेम नव्यं सहतेऽपराधान् ।
म्लानापि न म्लायति केसरस्रग् देवी न खण्डप्रणया कथञ्चित् ॥

अत्र न मालतीदाम विमर्दयोग्यमिति म्लानापि न म्लायति केसरस्रगिति च ऋजूक्तिभ्यामेव पूर्वं दृष्टान्तरूपे वस्तुनी प्रतिपिध्योत्तरकालं न प्रेम नव्यं सहतेऽपराधानिति देवी न खण्डप्रणया कथञ्चिदिति च दार्ष्टान्तिकरूपे प्रतिवस्तुनी ऋजूक्त्यैव प्रतिपिद्धे सेयं निषेधे ऋज्वी पूर्वा च दृष्टान्तोक्तिच्छायया प्रतिवस्तूक्तिः साम्यभेदः ।

सैवोत्तरा च वक्रा च यथा,—

मानुषीषु कथं वा स्यादस्य रूपस्य सम्भवः ।
न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥

अत्र कथं वा स्यादिति वक्रया निषेधोक्त्या दार्ष्टान्तिकमभिधाय पश्चान्न वसुधातलात् प्रभातरलं ज्योतिरुदेतीति वैयधिकरण्यवक्रयैव निषेधोक्त्या दृष्टान्तोऽभिहितः सेयं निषेधे वक्रोत्तरा च दृष्टान्तोक्तिच्छायया प्रतिवस्तूक्तिः साम्यभेदः ॥

प्रपञ्चोक्तिच्छायया विधाऽन्वी यथा,—

तरङ्गय दृशोऽङ्गने पततु चित्रमिन्दीवरम्
स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेतताम् ।
क्षणं वपुरपावृणु स्पृशतु काञ्चनं कालिकाम्
उदञ्चय मुखं मनाग् भवतु च द्विचन्द्रं नभः ॥

अत्र प्रथमचतुर्थपादयोरुपमानोपमेयसाम्यं वैस्तृतं द्वितीयतृतीयपादयो रुपमानापकर्षः प्रस्तुत इति सेयं प्रपञ्चोक्तिच्छायया विधाऽन्वी नाम प्रतिवस्तूक्तिः साम्यभेदः । सैव विधौ वक्रा यथा,—

एक्कोञ्चिअ मुद्धबहूइ विमलकवोले
वम्महम्मि तुह समप्पिछि सिरिच्छणङ्गो ।
एऊ ससिबिम्बउ कलङ्कगारउ पंडरउ किज्जवाउ
उपमेय भमाइ अणिमज्जणवयरउ ॥

अत्रोपमेयोत्कर्षो वैकृतः उपमानापकर्षः प्राकृतः प्रकाशित एव या पुन-रियमुत्तरार्धेन रूपकेणोपमानापकर्षस्तत्रोक्तिभङ्गिस्तयेयं प्रपञ्चोक्तिच्छायया विधौ वक्रा नाम प्रतिवस्तूक्तिः साम्यभेदः। सैव निषेधे ऋज्वी यथा,—

दातारो यदि कल्पशाखिभिरलं यद्यर्थिनः किं तृणैः
सन्तश्चेदमृतेन किं यदि खलास्तत् कालकूटेन किम्।
किं कर्पूरशलाकया यदि दृशोः पन्थानमेति प्रिया
संसारेऽपि सतीन्द्रजालमपरं यद्यस्ति तेनापि किम्॥

अत्रोपमेयोत्कर्षः ऋजूक्त्यैव च निबद्ध इति सेयं प्रपञ्चोक्तिच्छायया निषेधे ऋजुर्नाम प्रतिवस्तूक्तिः साम्यभेदः।

सैव निषेधे वक्रा यथा,—

तद्वक्त्रं यदि मुद्रिता शशिकथा तच्चेत् स्मितं का सुधा
तच्चक्षुर्यदि हारितं कुवलयैस्ताश्चेद्गिरो धिङ्मधु।
धिक् कन्दर्पधनुर्भ्रुवौ च यदि ते किं वा बहु ब्रूमहे
तत् सत्यं पुनरुक्तवस्तुविरसः सर्गक्रमो वेधसः॥

अत्रोपमानापकर्षो वक्रोक्त्या च निषेधः शेषं पूर्ववत् ते इमे द्वे अपि मालोपमाच्छायया प्रपञ्चोक्तिपूर्वे पुनः उपमाच्छाययेति मन्तव्यम्।

अर्थयोरतिसादृश्याद् यत्र दोलायते मनः।
तमेकानेकविषयं कवयः संशयं विदुः॥ ३९॥
तत्रैकविषयोऽनेको यस्मिन्नेकत्र शङ्क्यते।
यस्मिन्नेकमनेकत्र सोऽनेकविषयः स्मृतः॥ ४०॥

तयोराद्योऽभिधीयमानसादृश्यो यथा,—

आहारे विरतिः समस्तविषयग्रामे निवृत्तिः परा
नासाग्रे नयनं यदेतदपरं यच्चैकतानं मनः।
मौनं चेदमिदं च शून्यमखिलं यद्विश्वमाभाति ते
तद् ब्रूयाः सखि योगिनी किमसि भोः किं वा वियोगिन्यसि॥

अत्रैकस्मिन् वस्तुनि वस्तुद्वयस्याभिधीयमानसामान्यप्रत्ययं तद्विशेषप्रत्य-

स्यादुभयविशेषस्मरणाच्च यो विमर्शः सोऽप्यनेकविषयः संशयः ।
स एव प्रतीयमानसादृश्यो यथा,—

> किं पद्ममन्तर्भ्रान्तालि किं ते लोलेक्षणं मुखम् ।
> मम दोलायते चित्तं मध्यस्थानी घनस्तनि ॥

अत्र मुखलक्षणे लोचनलक्षणे चैकस्मिन्नेव वस्तुनि पद्मलक्षणं भ्रमरलक्षणञ्चापरमपि वस्तु प्रतीयमानसादृश्यमाशङ्क्यते सोऽयमप्येकविषय एव संशयः । अनेकवस्तुविषयो द्विधा शुद्धो मिश्रश्च । तयोः प्रतीयमानसादृश्यः शुद्धो यथा,—

> बाली भंभुरभोली उम्मसिअभिअंसणो गहण सुविअ विविअन्ता ।
> पिहाए भेम्मलीए एक्कवि तीअ मुक्क ओहइ पुणु ओहइ गअणुमुक्कंसो
> ममक्क आणइ दोण्ह वि चउड कअणु ॥

अत्र द्वयोः प्रतीयमानसादृश्ययोः बालिकामुखचन्द्रयोरेकचन्द्र एव विशङ्क्यत इति सोऽयमनेकविषयः शुद्धः संशयः ।
अभिधीयमानसादृश्यो मिश्रो यथा,—

> द्वावप्येतावभिनवजपापुष्पभासां निवासौ
> तिष्ठत्यन्ते द्वयमपि वियन्मण्डलस्योपसन्ध्यम् ।
> अस्तं को यात्युदयति च कः को रविः कः शशाङ्कः
> का च प्राची तदिह न वयं का प्रतीचीति विद्मः ॥

अत्र द्वयोरभिधीयमानसादृश्ययोः सूर्याचन्द्रमसोः प्राचीप्रतीच्योर्वा तदन्यतममेकमेव वस्तु पर्यायतो विशङ्क्यत इति अनेकविषयोऽयं मिश्रः संशयः । उपलक्षणञ्चैतत् तेन वितर्कोत्प्रादयोऽपि संशयोक्तावेव द्रष्टव्याः ।
तद् यथा,—

> सरोजपत्रे परिलीनषट्पदे विशालदृष्टेः स्विदमू विलोचने ।
> शिरोरुहाः स्विन्नतपक्ष्मसन्तते द्विरेफवृन्दं नु निःशब्दनिश्चलम् ॥
> अगूढहासस्फुटदन्तकेसरं मुखं स्विदेतद्विकचं नु पङ्कजम् ।
> इति प्रलीनां नलिनीवने सखीं विदाम्बभूवुः सुचिरेण योषितः ॥ युग्मम्

न केतकीनां विलसन्ति सूचयः प्रवासिनो हन्त हसत्ययं विधिः ।
तडिल्लतेयं न चकास्ति चञ्चला पुरः स्मरज्योतिरिदं विजृम्भते ॥

अत्र केतकीसूचीनां विधिविहसितैः प्रतीयमानसादृश्यैः तडिल्लतायाश्च स्मरज्योतिषापह्नुतत्वाद् इयं प्रतीयमानौपम्यवत्यपह्नुतिः ।

अनौपम्याभिधीयमानापह्नोतव्यवस्तुः पूर्वा यथा,—

राजकन्यानुरक्तं मां रोमोद्भेदेन रक्षकाः ।
अवगच्छेयुराज्ञातमहो शीतानिलं वनम् ॥

अत्र राजकन्यानुरागलक्षणस्य रोमाञ्चकारणस्य रक्षकावगतिहेतोः पूर्वमेवाभिहितस्य च वनानिलशैत्यलक्षणेन कारणान्तरेणापह्नवः न चैतयोः सादृश्यमस्ति सेयमनौपम्याभिधीयमानापह्नोतव्यवस्तुः कार्यद्वारात् पूर्वं कारणोपन्यासेन पूर्वेत्युच्यते ।

सैवापूर्वा यथा,—

आनन्दाश्रु प्रवृत्तं मे कथं दृष्ट्वैव कन्यकाम् ।
अक्षि मे पुष्परजसा वातोद्धूतेन पूरितम् ॥

अत्रानन्दाश्रु प्रवृत्तमिति पूर्वं कार्यस्य पश्चाद् दृष्ट्वैव कन्यकामिति कारणस्योपन्यासः शेषं पूर्ववत् सेयमभिधीयमानापह्नोतव्यवस्तुः अनौपम्यापह्नुतिरपूर्वेत्युच्यते ।

अनौपम्यैव प्रतीयमानापह्नोतव्यवस्तुः पूर्वा यथा,—

उद्द पेक्खिअ वहुकारिस्सआइ पच्छेसि दइअवच्छलिए ।
कण्टअविलिहिअपीणुण्णअत्थणे उत्तम सुपसाओ ॥

अत्र नैतस्याः स्तनयोरुपपतिना नखक्षतं क्षतमपि तु कण्टकैरिति प्रतीयमानापह्नोतव्यं वस्तु प्रकाश्यते । पूर्ववदेव च पूर्वार्धे कारणस्योपन्यासः पश्चिमार्धे तु कार्योपदेशो दृश्यते । सेयमनौपम्याप्रतीयमानापह्नोतव्यवस्तुः पूर्वा नामापह्नुतिरपह्नुत्य किञ्चिदन्यार्थदर्शनमिति लक्षणयोगाच्चाख्यायते ॥

सैवापूर्वा यथा,—

कस्स व ण होइ रोसो दट्ठ ण पिआइ सव्वणं अहरं।
सभमरपउमाघाइ णिवारिअ वामे सहसु एण्हिं ॥

अत्रापि नाम्ना उपपतिना अधरो व्रणितः किं तर्हि भ्रमरेणेति प्रतीयमानापह्नोतव्यं वस्तु पूर्वार्द्धे तु सव्रणमधरमिति कार्यमुपन्यस्य पश्चिमार्द्धे सभ्रमरकमलाघ्रायिणीति कारणमुपन्यस्तं सेयमन्यौपम्या प्रतीयमानापह्नोतव्यवस्तुपूर्वा च यथोक्तलक्षणयोगाज्जायते।

समाधिमन्यधर्माणामन्यत्रारोपणं विदुः।
निरुद्भेदोऽथ सोद्भेदः स द्विधा परिपठ्यते ॥ ४४ ॥

तयो र्निरुद्भेदो यथा,—

दूरंपरिवद्धराए अवऊहन्तम्मि दिणअरे अवरदिसं।
असहन्ति व्व किलिम्मइ पिअअमपच्चक्खदूसणं दिणलच्छी ॥

अत्र दिनकरदिनलक्ष्मीप्रतिचीनां समारोपितनायकनायिकाप्रतिनायिकाधर्माणां दूरप्रतिवद्धराग इत्यादिभिः श्लिष्टपदैरनुद्भेदः। एवमन्यधर्माध्यारोपादयं निरुद्भेदः समाधिभेदः ॥

सोद्भेदो यथा,—

वग्गहे लङ्कवोलं तइ एत्थइ पुण वज्ज वलि
किज्जमि तामरसिणि तुम्भ रोसल्ल विच्छ लेव।
णीरग्गलु जंपइ किंपि णिजावरण
ताव हिमिणविसिसिप्ति भत्थि पुलुट्टतङ्गु ॥

अत्रापि प्रियतमव्यलीकाशङ्किण्या: कापि कामिनी हिमानीदग्धां कमलिनीमालोक्य तस्यामात्मधर्मान् छिदं च सूर्यधर्मानारोपयति ते च वलि: कियेऽहं तव रोषस्थानैः पदैर्दह्यमाना इव प्रतीयन्ते इत्ययं सोद्भेदः समाधिभेदः। अन्यधाऽन्यधर्मा इति त्वन्यत्रा धर्मिणोऽप्यध्यासे समाधिरिष्यते।

तधर्माणां धर्मिणश्च यथा,—

चन्द्रज्योत्स्नाविशदपुलिने सैकतेऽस्मिन् सरय्वा

वादद्वैतं सुचिरमभवत् सिद्धयूनोः कयोश्चित् ।
एको ब्रूते प्रथमनिहतं कैटभं कंसमन्यः
स त्वं तत्त्वं कथय भवता को हतस्तत्र पूर्वम् ॥

अत्र संबोध्य वर्णनीये विष्णुस्वरूपस्य धर्मिणस्तद्धर्माणां चाध्यासादयं धर्मिधर्माध्यासरूपः समाधिः ।

धर्मिण एवाध्यासो यथा,—

प्राप्तश्रीरेष कस्मात् पुनरपि मयि तं मन्थखेदं विदध्यात्
निद्रामप्यस्य पूर्वामनलसमनसो नैव संभावयामि ।
सेतुं बध्नाति कस्मात् पुनरयमखिलद्वीपनाथानुयात-
स्त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः ॥

अत्र प्राप्तश्रीरेष कस्मादित्यादिभिर्मन्थखेदादिधर्माणां निवर्त्तितत्वात् प्राप्तश्रीरित्यादीनाञ्च श्लेषेणैवाभिधानात् त्वयीति वर्णनीयपदे विष्णुस्वरूपस्य धर्मिण एवाध्यासात् तद्धर्माणां चानध्यासादयं धर्म्यध्यासरूपः समाधिः ।

समाधिमेव मन्यन्ते मीलितं तदपि द्विधा ।
धर्माणामेव चाध्यासे धर्मिणां वान्यवस्तुनि ॥ ४५ ॥

अत्रान्यधर्माणामेवान्यवस्तुन्यध्यासान्मीलितं यथा,—

पल्लविअं विअ करपल्लवेहिं पप्फुल्लिअं विअ णअणेहिं ।
फलिअं विअ पीणपओहरेहिं अज्जाए लावण्णं ॥

अत्र पल्लवितमिव पुष्पितमिव फलितमिवेत्युत्प्रेक्षया लताधर्माणां लावण्यधर्मिणि धर्माध्यारोपो दृश्यते । करपल्लवादीनां चानुपात्तव्यापारहेतुत्वेन साधकतमत्वेन वा प्राधान्यं लक्ष्यते । सोऽयमन्यवस्तुनि पुनरन्यधर्मेणामेवारोपेण मीलितं नाम समाधिभेदो भवति । स तूद्देशे समाधुरुक्तिरित्युक्तिप्रकरणाल्लभ्यते ।

धर्मिणां धर्मिणश्च यथा,—

देहो व्व पडइ दिअहो कण्ठच्छेओ व्व लोहिओ होइ रई ।

अत्रोपमानभूतस्तत्र सहचरस्तत्र व्याजगर्हणया तदुपमेयः कोऽपि सत्पुरुषो विगर्ह्यत इति सेयं प्रतीयमानसादृश्या गर्हावती नाम समासोक्तिः।

सैवोभयवती यथा,—

निष्क्रान्तामरविन्दिनीं स्फुटितोद्देशां स्थलीं पल्वले
जम्बालाविलमम्बु कर्तुमपरा सूते वराही सुतान्।
दंष्ट्रायां चतुरर्णवोर्मिपटलैराप्लावितायामियम्
यस्या एव शिशोः स्थिता विपदि भूः सा पुत्रिणी पोत्रिणी॥

अत्र पूर्वार्धे गर्हा उत्तरार्धे श्लाघा गम्यते सेयं प्रतीयमानासादृश्योभयवती समासोक्तिः।

अनुभयवती यथा,—

इतः स्वपिति केशवः कुलमितस्तदीयद्विषा-
मितश्च शरणार्थिनः शिखरिपक्षिणः शेरते।
इतोऽपि वडवानलः सह समस्तसंवर्तकै-
रहो विततमूर्जितं भरसहञ्च सिन्धोर्वपुः॥

अत्र गर्हा श्लाघा वा विस्मयोक्तावेवास्तमयते। सेयं प्रतीयमानसादृश्यानुभयवती नाम समासोक्तिः।

अभिधीयमानसादृश्या श्लाघावती तुल्याकारविशेषणा यथा,—

नालस्य प्रसरो जलेष्वपि कृतावासस्य कोषे रुचि-
र्दण्डे कर्कशता मुखे च मृदुता मित्रे महान् प्रश्रयः।
आमूलं गुणसंग्रहव्यसनिता द्वेषश्च दोषाकरे
यस्यैषा स्थितिरम्बुजस्य वसति युक्तैव तत्र श्रियः॥

अत्राम्बुरुहसत्पुरुषयोः परस्परमुपमानोपमेयभावस्यातिशयप्रसिद्धेरुपमानेनैव श्लेषवत्तुल्यविशेषणपदाभिधीयमानसादृश्यमुपमानमेवावगम्यते। सेयमभिधीयमानसादृश्या श्लाघावती तुल्यविशेषणा नाम समासोक्तिः।

प्रतीयमानाभिधीयमानसादृश्या श्लाघागर्हावती तुल्यातुल्यविशेषणा

यथा,—

उपाध्वं मत् पान्थाः पुनरपि सरो मार्गतिलकम्
यदासाद्य स्वेच्छं विलसथ विलीनक्लमभराः।
इतस्तु धाराब्धे र्जरठकमठच्छिन्नपयसो
निवृत्तिः कल्याणी न पुनरवतारः कथमपि॥

अत्र पूर्वार्धे अभिधीयमानसादृश्ययोः श्लाघा पश्चिमार्धे तु प्रतीयमानसादृश्ययो र्गर्हावगम्यते सेयमुभयवती तुल्यातुल्यविशेषणाभिधीयमानप्रतीयमानसादृश्या समासोक्तिः। अन्योक्ति र्द्विधा स्वजातौ जात्यन्तरे च। तयोः स्वजातौ यथा,—

लक्ष्मीपयोधरोत्सङ्गकुङ्कुमारुणितो हरेः।
बलिरेष स येनास्य भिक्षापात्रीकृतः करः॥

अत्र हरिशब्देन बलिशब्देन वा कश्चित् समानेतिवृत्तः पुंविशेष एवोच्यते, सेयं स्वजातिविषयान्योक्तिः संक्षेपोक्तिरूपत्वात् समासोक्तिरेव। जात्यन्तरे यथा,—

पिबन् मधु यथाकामं भ्रमरः फुल्लपङ्कजे।
अप्यसन्नद्धसौरभ्यं पश्य चुम्बति कुड्मलम्॥

अत्र भ्रमरशब्देन कश्चित् कामी फुल्लपङ्कजशब्देन कापि प्रौढाङ्गना कुड्मलशब्देन कापि मुग्धाङ्गनाभिधीयते। सेयमन्यजातिविषयान्योक्तिः समासोक्तिरेव भवति। अन्योक्तिशब्देन इहाध्यासविषया तद्भावापत्तिरुच्यते यथैव ब्रह्मदत्त इति। सा द्विधा शुद्धा चित्रा च।
तयोः शुद्धा यथा,—

सुधाबद्धग्रासैरुपवनचकोरैरनुसृतां
किरन् ज्योत्स्नामच्छां नवलवलिपाकप्रणयिनीम्।
उप प्राकाराग्रं प्रहिणु नयने तर्कय मनाक्
अनाकाशे कोऽयं गलितहरिणः शीतकिरणः॥

अत्र कमलाद्यभिमुखे चन्द्रमसमवस्थाप्य कश्चिदेवं ब्रूते या चेयं पूर्णा

अभिधीयमानतुल्यविशेषणा पश्चिमार्धे पुनरत्राकाशे कोऽयं गलितहरिण इत्यत्र तुल्यविशेषणा समासोक्तिरेवान्योक्तिः एकैवाधारादियं शुद्धेत्युच्यते।

चित्रा यथा,—

कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम्।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम्॥

अत्राधारः पूर्ववद्वैचित्र्यश्च निगदेनैव व्याख्यातः सेयमनन्योक्तिः समासोक्तिरेवानेकाधारवैचित्र्याच्चित्रेत्युच्यते।

उभयोक्तिर्यथा,—

लावण्यसिन्धुरपरैव हि केयमत्र
यत्रोत्पलानि शशिना सह संप्लवन्ते।
उन्मज्जति द्विरदकुम्भतटी च यत्र
यत्रापरे कदलिकाण्डमृणालदण्डाः॥

अत्रापूर्वेयं लावण्यसिन्धुरित्यन्योक्तिः यत्रोत्पलानि शशिना सह संप्लवन्त इत्यनन्योक्तिः सेयमुभययोगादुभयोक्तिरपदिश्यते। उपलक्षणञ्चैतत्। तेनान्यापि योपमानोपमेयविषये संक्षेपोक्तिः सापि समासोक्तिरेव भवति यथा,—

इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमलता श्यामेव हेमप्रभा।
पारुष्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतम्
सीतायाः पुरतश्च हन्त शिखिनां बर्हाः सगर्हा इव॥

अत्र संक्षेपतः सीताशब्दवाच्यस्य मुखादेरवयवसमाश्रयस्य इन्दुरञ्जनेनेव लिप्तो जडितेव मृगीणां दृष्टिः प्रम्लानमिवारुण्यं विद्रुमस्य श्यामेव हेमकान्तिः परुषा इव कोकिलालापाः सगर्हा इव शिखिनां बर्हा इत्युपमेयोक्तेरनुक्तान्यपि तदुपमेयानि मुखादीनि प्रतीयन्ते, सेयमपि संक्षेपोक्तिः समासोक्तिरेव भवति। का पुनः समा-

योक्तेः समाधुरुक्तेर्वा विशेषः उच्यते। यत्र प्राकरणिकेऽप्राकरणिको धर्मोऽध्यास्यते सा समाधुरुक्तिर्यथा ग्रसन्ति व कि लिम्पइ पिअ-अमयइ कुखदूसणं दिणलच्छी इति यत्र पुनरप्राकरणिके प्राकरणिकधर्मः सा समासोक्तिर्यथा, पिबन् मधु यथाकामं भ्रमरः फुल्लपङ्कजे इति। ननु धर्मिणोऽध्यासे समानमिति चेत् न। स त्वं तत्वं कथय भवता को हतस्तत्र पूर्वमित्यादिषु अनाकाशे कोऽयं गलितहरिणः शीतकिरण इत्यादिषु च मव्यक्त एवाध्यासविशेषो दृश्यते। एकत्र मनसान्यत्र तु वचसेति सोऽयं समाधुरुक्तेः समासोक्तेश्च भेदो भवति।

अन्यथावस्थितं वस्तु यस्यामुत्प्रेक्ष्यतेऽन्यथा।
द्रव्यं गुणः क्रिया वापि तामुत्प्रेक्षां प्रचक्षते ॥ ५० ॥

तासु द्रव्योत्प्रेक्षा यथा,—

देहस्था दर्पणे यस्य पश्यति प्रतिमामुमा।
अन्यार्धार्धमिवोत्पन्नमर्धनारीश्वरान्तरम् ॥

अत्र प्रतिविम्बरूपेण दर्पणेऽन्यथावस्थितस्यार्धनारीश्वररूपलक्षणस्य द्रव्यस्य यदपरार्धोत्पन्नार्धनारीश्वरान्तररूपेण द्रव्यान्तररूपेणोत्प्रेक्षणं सेयमुत्प्रेक्षा द्रव्योत्प्रेक्षेति भवति।

गुणोत्प्रेक्षा यथा,—

पल्लविअं विअ करपल्लवेहिं पप्फुल्लिअं व णअणेहिं।
फलिअं विअ पीणपओहरेहिं अज्जाए लावण्णं ॥

अत्र करपल्लवादिरूपेणान्यथावस्थितस्याङ्गलावण्यलक्षणस्य यदेतत्-पल्लवितत्वादिरूपेणान्यथोत्प्रेक्षणं सेयमुत्प्रेक्षा गुणोत्प्रेक्षेति भवति।

क्रियोत्प्रेक्षा यथा,—

सेनागजाः स्वकरपल्लवलेखनीभि-
र्गण्डस्थलान्मदमसी मुहुराददानाः।
मन्ये नरेन्द्र तव तोयधितीरताली-
पत्रोदरेषु विजयस्तुतिमालिखन्ति ॥

अत्र सेनागजानां गण्डस्थलेभ्यो लेखन्याकारैः करैर्मषीरूपस्य मदपयसो यदादानं यच्चास्य तीरसालीपत्नोदरेषु सहावर्णतया निक्षेपः स उक्तरूपेणाप्ययोत्प्रेक्षितो इति सेयमुत्प्रेक्षा क्रियोत्प्रेक्षा भवति ।

उत्प्रेक्षावयवो यत्र या चोत्प्रेक्षोपमानता ।
मतस्थेति न भिद्यन्ते सानुप्रत्नेवास्वरूपतः ॥ ५१ ॥

तत्रोत्प्रेक्षावयवो यथा,—

अङ्गुलीभिरिव केशसञ्चयं संनिगृह्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥

अत्राङ्गुलीभिः केशेषु गृहीत्वा प्रियामुखं चुम्ब्यते सा च लोचने निमीलयतीति मायोवादः । तत्र मुखचुम्बनादिक्रिया प्रधानमङ्गीभूता प्रतीयते, केशग्रहणाक्षिनिमीलनेन चाङ्गभूते प्रधाने तत्राङ्गीभूताया: क्रियायाः उत्प्रेक्षणेनावयवभूता क्रियोत्प्रेक्षिता भवति । यथा हि कुड्मलीकृतसरोजलोचनमित्यत्र नोत्प्रेक्षापदम् एवमङ्गुलीमरीचिभिस्तिमिरकेशसञ्चयं संनिगृह्येत्यत्रापि तन्न प्राप्नोति । मरीचयङ्गुलिसंनिगृहीततिमिरकेशसञ्चयमिवेत्येवं वा वक्तव्यं भवति । तत्र योऽयमवयवक्रियायामप्यन्वपदार्थोक्तद्वितीयावयवक्रियाविलक्षण इवमयोगेऽपृथक्पदतया वाक्यकल्पः, स इवस्यापि व्याख्यानपरत्वेनाप्यनुयोज्यमानः, कविभिरुत्प्रेक्षावयव इत्युच्यते । अन्ये पुन र्यत्र प्रधानक्रिया नोत्प्रेक्ष्यते अवयवक्रिया तूत्प्रेक्ष्यते तमुत्प्रेक्षावयवं वर्णयन्ति यथा,—

लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च
प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च ।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि-
श्चिन्तासन्ततितन्तुजालनिविडस्यूतेव लग्ना प्रिया ॥

तेषां मते पूर्वोदाहरणमुत्प्रेक्षावयवो न भवति ।

उत्प्रेक्षोपमा यथा,—

किंशुकव्यपदेशेन तरुमारुह्य सर्वतः ।

दग्धादग्धमरण्यानीं पश्यतीव विभावसुः ॥

अत्र व्यपदेशशब्देन किंशुककुसुमानामग्निसादृश्यमभिधाय दर्शनक्रियोत्प्रेच्यत इति सेयमुत्प्रेचोपमा। पूर्वस्मिन्नप्युदाहरणे मरीचिभिरङ्गुलीभिरिव तिमिरं केशसञ्चयमिव संनिगृह्येत्युपमानार्थानुप्रवेश उत्प्रेचायां द्रष्टव्यः। सेयमुत्प्रेचोपमा चोत्प्रेचैव भवति।

मतं यथा,—

यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते
तदाचष्टे लोकः शशक इति नो मां प्रति तथा।
अहं त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणी-
कटाचोल्कापातव्रणकिणकलङ्काङ्किततनुम् ॥

अत्र कटाचोल्कापातव्रणकिणकलङ्काङ्किततनुमिन्दुमहं मन्ये इत्यनेन स्वमतद्वारकमुत्प्रेचायाः समर्थनं क्रतमित्ययं मताभिधान उत्प्रेचाया एव प्रकारः।

अप्रस्तुतप्रशंसा स्यादस्तोतव्यस्य या स्तुतिः।
कुतोऽपि हेतो र्वाच्या च प्रत्येतव्या च सोच्यते ॥ ५२ ॥
सा च धर्मार्थकामानां प्रायोऽन्यतमबाधया।
स्वाभिप्रायप्रसिद्ध्या च जायमानेह दृश्यते ॥ ५३ ॥

तासु धर्मबाधया वाच्या यथा,—

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥

अत्र यथोक्तै र्हेतुभिः स्वाभिप्रायसाधनेन यदिदमीदृग्विनोदः कुतः इति साचात् मृगयाभिनन्दनं सेयं वाच्या नाम प्रस्तुतस्तुतिरहिंसा परमो धर्म इति धर्मं बाधते। धर्मबाधयैव प्रतेतव्या यथा,—

कालाक्खरदुसिक्खिअ बालअ रे लग्ग मम कण्ठम्मि।

दोण्हं व परमणिवासो समत्थं जइ होइ ता होउ ॥

अत्र कालाचरदुःशिचितेत्यनेन लिपिज्ञानादिभिरधीतधर्मशास्त्राभिमन्यरूपकपोगण्डः कोऽपि कयापि अविनयवत्या सोपालम्भं एहि रे कण्ठे लगेत्यभियुज्यते । तत्र यदि ते मतमेवं सति नरकः स्यात् स यथावयोः सर्वैव नासौ नरक इति किं तर्हि स्वर्ग इति सोऽयं स्वाभिप्रायसाधनात् महासाहसे नियोगस्तत्रैव साचादस्तु तस्याश्लोतव्यस्य स्तुतिः प्रतीयते सेयं प्रतेव्यतव्या नामाप्रस्तुतप्रशंसा परस्य दारान् मनसापि नेच्छेदिति धर्ममेव बाधते । अर्थबाधया वाच्या यथा,—

पङ्गो वन्द्य स्त्वमसि न गृहं यासि योऽर्थी परेषाम्
धन्योऽन्ध त्वं धनमदवतां नेचसे यन्मुखानि ।
श्लाघ्यो मूक त्वमपि कृपणं स्तौषि नार्थाशया यः
श्लोतव्यस्त्वं वधिर न गिरं यः खलानां शृणोषि ॥

अत्र श्लोतव्यानां पङ्ग्वन्धमूकवधिराणां वन्द्यधन्यश्लाघ्यश्लोतव्यपदैः साचादभिनन्दनादियं वाच्या नामाप्रस्तुतप्रशंसाभिमानिनोऽर्थसिद्धिं बाधते । अर्थबाधयैव प्रतेव्यतव्या यथा,—

कामं वनेषु हरिणास्तृणानि खादन्त्ययत्नसुलभानि ।
विदधति धनिषु न दैन्यं ते किल पशवो वयं सुधियः ॥

अत्र ते किल पशवो वयं सुधिय इति मृगाणामसाचादभिनन्दनं तेनेयमश्लोमव्यानामस्तीयां वाक्यार्थत्वेन स्तुतिप्रतीतेः प्रत्येतव्या नामाप्रस्तुतप्रशंसा मनस्विनोऽर्थसिद्धिं बाधते । कामबाधया वाच्या यथा,—

ण मुअन्ति दीहसासं ण रुअन्ति ण होन्ति विरहकिसिआओ ।
धण्णाओ ताओ जाणं बहुवल्लह वल्लहो ण तुमं ॥

अत्र धन्यास्ता यासां त्वं न वल्लभ इति येयमतिरक्तायाः साचाद्श्लोतव्यस्तुतिः सेयं वाच्या नामाप्रस्तुतप्रशंसा तस्या एव कामसिद्धिं बाधते । कामबाधयैव प्रतेव्यतव्या यथा,—

सुहउच्छअणं दुल्लहं पि दूराहिआ अम्हाणं।
मा उअआर जर जीअं पि णेन्त ण कआपराहोसि॥

अत्र पूर्वोक्तासदभिप्रायसिद्धत्वेन नाम त्वयास्माकमुपकृतं येन जीवितमपि हरन्नापराधोऽसीति ज्वरं प्रति यदतिरिक्ततया वाक्यं तेनेष्टलोकातयस्य ज्वरस्य स्तुतिः प्रतीयते सेयं प्रतेयगम्या नामामस्तुतप्रशंसा तस्या एव शरीरबाधया सर्वानपि कामान् बाधते।

विवक्षितगुणोत्कृष्टै र्यत् समीकृत्य कस्यचित्।
कीर्तनं स्तुतिनिन्दार्थं सा मता तुल्ययोगिता॥ ५४॥

अभिधीयमानतुल्यगुणत्वेन स्तुत्यर्था यथा,—

शेषो हिमगिरिस्त्वञ्च महान्तो गुरवः स्थिराः।
इमां लङ्घितमर्यादां चलन्तीं बिभृथ क्षितिम्॥

अत्राभिधीयमानमहत्त्वादिगुणोत्कृष्टाभ्यां शेषाद्रिकुलपारशैलाभ्यां सह स्तुत्यर्थं तुल्ययोगेन क्षितिपतेरभिहितत्वादियं स्तुत्यर्था तुल्ययोगिता।

अभिधीयमानतुल्यगुणत्व एव निन्दार्था यथा,—

सङ्गतानि मृगाक्षीणां तडिद्विलसितानि च।
क्षणद्वयं न तिष्ठन्ति घनारब्धान्यपि स्वयम्॥

अत्र घनारब्धान्यपीत्यादिभि रभिधीयमानतुल्यगुणानां मृगाक्षीसङ्गतानां तडिद्विलसितानाञ्च निन्दार्थं तुल्ययोगेनाभिधानादियं निन्दार्था तुल्ययोगिता। प्रतीयमानतुल्यगुणत्वे स्तुत्यर्था यथा,—

यमः कुबेरो वरुणः सहस्राक्षो भवानपि।
बिभ्रत्यनन्यविषया लोकपाल इति श्रुतिम्॥

अत्र यमादयः पञ्च भवन्तो लोकपाला इत्यनुक्तमपि तुल्यवस्तुयोगितयैव स्तुत्यर्थमेषां मिथः सादृश्यं प्रतीयते। सेयं प्रतीयमानतुल्यगुणत्वे स्तुत्यर्था तुल्ययोगिता। प्रतीयमानतुल्यगुणत्व एव निन्दार्था यथा,—

राजानमपि सेवन्ते विषमप्युपभुञ्जते।
रमन्ते च परस्त्रीभिरहो साहसिका नराः॥

अत्र योऽयं सेवादि मानवानां राजविषये स्त्रीषु च वैषम्यहेतु स्तुल्यत्वेन योगः राजादीनां वा कर्मत्वादिरूपतया तत्क्रियायां समावेशः सोऽमीषां मिथः साहश्यं प्रत्याययन् राजसेवापरस्त्रीरत्यो र्विषोपभोगतुल्यतां गमयतीति सेयं प्रतीयमानतुल्यगुणत्वे निन्दार्था तुल्ययोगिता ।

अन्ये सुखनिमित्ते च दुःखहेतौ च वस्तुनि ।
स्तुतिनिन्दार्थमेवाहुस्तुल्यत्वे तुल्ययोगिताम् ॥ ५५ ॥

सा स्तुत्यर्था यथा,—

आहूतस्याभिषेकाय विसृष्टस्य वनाय च ।
न मया लक्षितस्तत्र स्वल्पोऽप्याकारविभ्रमः ॥

अत्र रामस्य राज्याभिषेकवनगमनयोः पितुरादेशेन तुल्यरूपतया स्तुतिः प्रतीयते ।

निन्दार्था यथा,—

यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ।
यश्चैनं गन्धमाल्याभ्यां सर्वस्य कटुरेव सः ॥

अत्र यः परशुना छिनत्ति योऽमुं मधुसर्पिषा सिञ्चति यो वा गन्धमालाभ्यामर्चति तं प्रति तुल्यमेव निम्बस्य कटुत्वमिति समासोक्त्या तदुपमेयस्य निन्दा प्रतीयते ।

दोषस्य यो गुणीभावो दोषीभावो गुणस्य यः ।
स लेशः स्यात्ततो नान्या व्याजस्तुतिरपीष्यते ॥ ५६ ॥

तत्र दोषस्य गुणीभावे लेशो यथा,—

युवैष गुणवान् राजा योग्यस्ते पतिरूर्जितः ।
रणोत्सवे मनः सक्तं यस्य कामोत्सवादपि ॥

अत्र येयमुत्तरार्धेन राज्ञो वीर्यप्रकर्षस्य स्तुतिः सा कन्यायाः निरन्तरान् भोगान् निर्विविक्षो र्दोषत्वेन प्रतिभासिष्यत इतत्रभिप्रेतत्र योऽयं निरूप्यस्या राजप्रकोपपरिजिहीर्षया दोषोऽपि गुणरूपेणोक्तः सोऽयं दोषस्य गुणीभावो नाम लेशतोऽल्पतया परैरनभ्यविदित उच्यमानो

लेश इत्युच्यते।

गुणस्य दोषीभावो यथा,—

चपलो निर्दयश्चासौ जनः किं तेन मे सखि।
आगःप्रमार्जनायैव चाटवो येन शिक्षिताः॥

अत्र पूर्वार्धेन मानपरिग्रहानुगुणं सखीनामग्रतः प्रकाशं प्रतिज्ञाय तदनिर्वाहमाशङ्कमाना तदुपहारं परिजिहीर्षु दोषाभासं तद्गुणग्राममाह आगःप्रमार्जनायैव चाटवो येन शिक्षिताः इति। सोऽयं गुणस्य दोषीभावो नाम लेशो भवति। अन्ये पुनः समस्तमेव लेशलक्षणमाचक्षते। यत्र दोषस्य गुणीभावो गुणस्य च दोषीभाव इति सोऽपि द्विधा समासोक्त्या असमासोक्त्या च। तयोः समासोक्त्या यथा,—

गुणानामेव दौरात्म्याद्धुरि धुर्यो नियुज्यते।
असञ्जातकिणस्कन्धः सुखं स्वपिति गौर्गलिः॥

अयमपि प्रकोपभयाल्लेशेनैवोच्यते इति लेशः।

असमासोक्त्या यथा,—

सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः
सर्वत्रैव जनापवादचकिता जीवन्ति दुःखं सदा।
अव्युत्पन्नमतिः कृतेन न सता नैवासता व्याकुलो
युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः॥

अत्रापि प्रकोपभयादि पूर्ववत्। यद्येष व्याजलक्षणत्वेन कस्मान्न लेश इत्युच्यते दोषगुणीभावस्याप्रस्तुतस्तुत्या दोषगुणीभावस्य तु व्याजस्तुत्यापहारात्। व्याजस्तुतिरपि द्विधा शुद्धा मिश्रा च।

तयोः शुद्धा यथा,—

पुंसः पुराणादाच्छिद्य श्रीस्त्वया परिभुज्यते।
राजन्निक्ष्वाकुवंश्यस्य किमिदं तव युज्यते॥

अत्र शुद्धपरदारापहरणलक्षणनिन्दाव्याजेन स्तुतेर्विहितत्वादियं शुद्धा नाम व्याजस्तुतिर्गुणदोषीभावलक्षणाल्लेशाद्भिद्यते।

मिश्रा यथा,—

प्रियोऽसि प्राप्तोऽसि प्रभुरसि कुलीनोऽस्यसि युवा,
युवाय्यस्त्वामेवं कति न पतिमुर्वीश वृणते।
धनत्येनां कीर्तिं रघुनहुषमान्धातृमहिषीम्
परामृष्टं द्रष्टामधिगतनयो नार्हति भवान्॥

अत्र स्तुतिपदमिश्रैव व्याजगर्हया स्तुतिरिति इयं मिश्रा नाम व्याजस्तुति र्भेदः।

कर्त्रादीनां समावेशः सहान्यैर्यः क्रियादिषु।
विविक्तयाविविक्तश्च सहोक्तिः सा निगद्यते॥ ५७॥
वैसादृश्यवती चेयमुच्यमाना मनीषिभिः।
सहैवादिप्रयोगेषुससादृश्या च दृश्यते॥ ५८॥

सा कर्तृविविक्तक्रियासमावेशे यथा,—

कोकिलालापमधुराः सुगन्धिवनवायवः।
यान्ति सार्धं जनानन्दैर्वृद्धिं सुरभिवासराः॥

अत्र सुरभिवासरा इति कर्तृपदार्थः केवल एव जनानन्दैः सह वृद्धिप्राप्तिक्रियायां समाविष्ट इति सेयं विविक्तकर्तृक्रियासमावेशा नाम वैसादृश्यवती सहोक्तिः। कर्मणो विविक्तक्रियासमावेशे यथा,—

उज्झसि पियाइ समअं तह विदुरे भणसि कीस किसिअत्ति।
उअरि भरेण अ अणुअ अमुअइ वहिल्लोवि अङ्गाइं॥

अत्र संबोधमानयुष्मदर्थः कर्मसामान्यम उज्झसि इति क्रियायां केवल एव क्रियापदार्थेन सह समाविष्टः। सेयं विविक्तक्रियासमावेशा नाम वैसादृश्यवती सहोक्तिः।

यत्रानेकोऽपि कर्त्रादिः प्रविविक्तैः क्रियादिभिः।
विविक्तभावं लभते विविक्ता सापि कथ्यते॥ ५९॥

सा कर्तृद्वयस्य पृथक् क्रियासमावेशे यथा,—

वर्धते सह पान्थानां मूर्च्छया चूतमञ्जरी।

वहन्ति च समं तेषामम्बुभि र्मलयानिलाः॥

अत्र चूतमञ्जरीमूर्च्छया सह वर्धनक्रियायां मलयानिलाश्चाम्बुभिः सह वहनक्रियायां पृथक् पृथग्विवेकेनैव कर्त्तरि समाविष्टाः। सेयमपि विविक्तकर्त्तृक्रियासमावेशैव वैसादृश्यवती सहोक्तिरेव कर्मणोऽपि विवेके द्रष्टव्या। कर्त्तृणामविविक्तकर्तृक्रियासमावेशे यथा,—

धीरेण समं जामा हिअएण समं अणिट्ठिआ उवएसा।
उच्छाहेण सह भुआ वाहेण समं गलन्ति से उल्लावा॥

अत्र यामादीनां बहूनां धैर्यादिभिः सह गलनक्रियायामेकस्यामेवाविविक्तः समावेशो दृश्यते। सेयमविविक्तकर्तृक्रियासमावेशा नाम वैसादृश्यवती सहोक्तिः। कर्मणां विविक्तक्रियासमावेशे इवशब्देन सहशब्दस्य स्थाने ससादृश्या यथा,—

धीरं व जलसमूहं तिमिणिवहम्मि व सपक्खपव्वआलोअं।
णइसोत्ते व्व तरङ्गे रअणाइं व गरुअगुणसआइं वहन्तं॥

अत्र धैर्यस्य जलसमूहस्य तिमिनिवहेन सपक्षपर्वतलोकस्य नदीस्रोतोभिस्तरङ्गाणां रत्नैश्च गुरुकगुणशतानां मिथः प्रतीयमानैः सादृश्यमिवेन द्योत्यते। सहार्थश्च वाक्यार्थसामर्थ्येन लभ्यते इति सेयं धैर्यादीनां बहूनां वहनक्रियायामेकस्यामेव विवेकतः कर्मभूतानां मावेशेन अविविक्तकर्मक्रियासमावेशा नाम ससादृश्या सहोक्तिः। आदिग्रहणाद् गुणसमावेशेऽपि गुणिनः ससादृश्या यथा,—

सह दीर्घा मम श्वासैः इमाः सम्प्रति रात्रयः।
पाण्डराश्च ममैवाङ्गैः सह ताश्चन्द्रभूषणाः॥

अत्र रात्रयो दीर्घाः पाण्डराश्च इति दैर्घ्यपाण्डरत्वगुणयोरविवेकेन रात्रिषु रात्रीणाश्च तयोः श्वासैरङ्गैश्च सह समावेशो दृश्यते; सेयमविविक्तगुणसमावेशा नामेवाद्यप्रयोगेऽपि ससादृश्या सहोक्तिः॥

द्रव्यक्रियागुणादीनां क्रियाद्रव्यगुणादिषु।
निवेशनमनेकेषामेकतः स्यात् समुच्चयः॥ ६० ॥

इतरेतरयोगो यः समाहारो य उच्यते ।
अन्वाचय इहान्यो यः सोऽपि नान्यः समुच्चयात् ॥ ६१ ॥
द्विपदाश्रयश्च स स्यात् स स्यात् बहुपदाश्रयः ।
उभयाश्रयश्च स स्यात् स स्यादनुभयाश्रयः ॥ ६२ ॥
तयः प्रतिपदं वा स्युः द्योतकैरितरत्र वा ।
पदैः शुद्धाश्च मिश्राश्च तुरीयो द्योतकं विना ॥ ६३ ॥

अत्र द्विपदाश्रयः प्रतिपदाश्रितद्योतकत्वेन द्रव्ययोः क्रियासमुच्चयो यथा,—निर्यता परिजनेन बोधितः स्फूर्जमानरुचिवल्लभदृगः ।
हारसस्खलनमांसलोऽधिकं दीपकश्च मदनश्च दिद्युते ॥

अत्र दीपकश्च मदनश्च इति द्वे द्रव्ये प्रतिपदं चकारेणैकस्यां दिद्युते इति क्रियायां समुच्चयेन निवेशिते, न दिद्युताते इति द्विवचनं दीपकमदनौ इति चार्थे द्वन्द्वश्च न भवति ।

द्विपदाश्रय एव उत्तरपदाश्रितद्योतकेन क्रिययोर्द्रव्यसमुच्चयो यथा,—

निकामं क्षामाङ्गी सरसकदलीगर्भसुभगा
कलाशेषा मूर्त्तिः शशिन इव नेत्रोत्सवकरी ।
अवस्थामापन्ना मदनदहनोद्दाहविधुरां
इयं नः कल्याणी रमयति मनः कम्पयति च ॥

अत्र रमयति कम्पयति इति द्वे क्रिये उत्तरपदवर्त्तिना चकारेणैकस्मिन् मनोलक्षणे द्रव्ये कर्मणि समुच्चयेनैककालमेव निवेशिते, तेनायं अन्वाचयो न भवति ।

बहुपदाश्रयः प्रतिपदाश्रितद्योतकत्वेन गुणानां क्रियासमुच्चयो यथा,—

अप्राकृतस्तु कथमस्तु न विस्मयाय
यस्मिन्वास करुणा च कृतज्ञता च ।
लक्ष्मीश्च सात्त्विकगुणज्वलितं च तेजः
धर्मश्च मानविजयौ च पराक्रमश्च ॥

अत्र करुणा च सतघ्नता च इत्यादयो गुणाः प्रत्येकं बहुपदाश्रयत्वेन चकारेण एकस्यामुवास इति क्रियायां समुच्चयेन निवेश्यन्ते। तेन गुणेषु बहुवचनं न भवति। करुणासतघ्नतादीनां द्वन्दसमासश्च न भवति। यस्मिन् इत्यपेचायाञ्च अयमेव गुणानां द्रव्यसमुच्चयो भवति॥ बहुपदाश्रय एव उत्तरपदाश्रितद्योतकत्वेन गुणानां क्रियासमुच्चयो यथा,—रूपमप्रतिविधानमनोज्ञं प्रेम कार्यमनपेचविकाशि।

चाटु चाहतकसम्भ्रमनमासां कार्मणत्वमगमद् रमणेषु॥

अत्र रूपं प्रेम चाटु च इति बहवो गुणाः उत्तरपदाश्रयेण चकारेण अगमत् इत्येकस्यां क्रियायां समुच्चयेन निवेश्यन्ते। तेन अगमन् इति बहुवचनं द्वन्द्वो वा न स्यात्। कार्मणत्वम् इत्यपेचायां च अयमेव गुणानां जातिसमुच्चयो भवति॥ उभयपदाश्रयः उत्तरपदाश्रितद्योतकत्वेन द्रव्यगुणानां क्रियासमुच्चयो यथा,—

विचिन्त्यमानं मनसाऽपि देहिनां
इदं त्रि लोकेषु चकास्ति दुर्लभम्।
निशा सचन्द्रा मदिरा च सोत्पला
प्रियानुरागोऽभिनवश्च यौवनम्॥

अत्र निशा मदिरा च द्रव्ये अनुरागो यौवनञ्च गुणौ बहुष्वपि पदेषु द्वन्द्वे सत्यपि उत्तरपदाश्रयनिवेशिना चकारेण चकास्ति इत्येकस्यां क्रियायां निवेश्यन्ते। तेन चकासति इति बहुवचनं समासश्च न स्यात्। अयमेव च दुर्लभम् इत्यपेचायां द्रव्यगुणानां गुणसमुच्चयो भवति। सेऽमी त्रयोऽपि शुद्धाः। मिश्रः पुनरुभयपदाश्रयवद् बहुपदाश्रयश्च भवति॥ यथा,—

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम्॥

अत्र आदित्यचन्द्रादयो द्रव्यविशेषाः उत्तरपदनिवेशिना प्रतिपदनिवेशिना च चकारेण जानाति इत्येकस्यां क्रियायां निवेश्यन्ते। तेन

च बहुवचनाभावे समासाभावे च एष सिय: समुच्चयभेदो भवति, सम्‌-भयाश्रयस्तु समुच्चयोऽन्वाचयश्च न भवति। द्वयोरपि दीपकेन विषया-पहारात्। तेन इतरेतरयोगसमाहारयो: स उदाह्रियते। तत्र इतरेतरयोगो यथा,—

साऽवशेषपदमुक्तमुपेक्षा स्रस्तमाल्यवसनाभरणेषु।
गन्तुमुत्थितमकारणत: स्म द्योतयन्ति मदविभ्रमसासाम्॥

अत्र उक्तमुपेक्षा उत्थितम् इत्येते क्रियाद्रव्यविशेषा इतरेतरयोगेन मदविलासद्योतनक्रियायां निविशन्ते। तेन द्योतयन्ति इति बहुवचनं द्वन्द्वसमासश्च तद्विवक्षायां स्यात्। न च इह द्योतकश्चकार: उत्तरपदे प्रतिपदं विद्योतते इति सोऽयमुभयाश्रय: समुच्चयभेद:॥

समाहारो यथा,—

वपु र्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु।
वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने॥

अत्र यद् वरेषु मृग्यते तत् किं त्रिलोचने व्यस्तमप्यस्ति इति ब्रुवन् वपुर्वयोवसूनां समुदायं समस्तमेवाभिसन्धत्ते। तत्र च आविर्भूताव-यवभेदत्वेन इतरेतरयोग: तिरोहितावयवभेदत्वेन समाहार:। स इह यद् इत्येकवचनान्तेन नपुंसकेन च कथ्यते। न चेह क्वचिदपि चका-रोऽस्ति। सोऽयमप्यनुभयाश्रय: समुच्चयभेद:। चयोगेऽपि इतरेतर-योग:। स उत्तरपदयोगेऽपि यथा,—

ततश्चरणं विपरिवर्तितक्रियो र्नैय्यतो: शयनमिहरागयो:।
सा बभूव वशवर्तिनी द्वयो: शूलिन: सुवदना मदस्य च॥

अत्र शूलिन: मदस्य च इत्युत्तरपदाश्रयेण चकारेण द्वौ द्रव्यविशेषौ वशवर्तिनी इत्येतस्मिन् गुणपदे यदि इतरेतरयोगेन सन्निविश्येते तदा विपरिवर्तितक्रियो: इत्यादिषु द्वयोरिति पर्यन्तेषु द्विवचनम् एकशेषो वा न स्यात्। सोऽयमपि द्विपदाश्रय उत्तरपदाश्रितद्योतकश्च समुच्चय-भेद:। एवमपरेऽपि इतरेतरयोगेऽपि चयोगा उदाहार्या:, समाहारस्तु

चयोगविषयो विचिन्त्यमानमित्यादिनैव उक्तः। अन्वाचयस्तु क्रियाविषय एवोपपद्यते। तत्र च उत्तरपदाश्रय एव चकारो भवति यथा,—

गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तम्
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः।
सौदामिन्या कनकनिकषस्निग्धया दर्शयोर्वीम्
तोयोत्सर्गस्तनितमुखरो मास्म भूर्विक्लवास्ताः॥

अत्र उर्वीं दर्शय इति उर्वीकर्मविषयत्वेन क्रियामुपन्यस्य तोयोत्सर्गस्तनितमुखरो मास्म भूः इति तत्कर्तर्येव धर्मिणि अकर्मकं क्रियान्तरमन्वाचीयते। सोऽयं भिन्नकालत्वभिन्नविषयत्वाभ्याम् अन्वाचयः समुच्चयाद्भिन्नो भवति। नन्वेवं यदि समुच्चयेऽपि भिन्नविषये क्रिये तुल्यकालमेव प्रयुज्येते, को दोषः स्यात्? न कश्चित्। किन्तु तत्र समुच्चयबुद्ध्या विषयोऽपह्नुतः इति नोदाह्रियते। समासेऽपि इतरेतरयोगाद्‌नुभयाश्रितः समुच्चयभेदो यथा,—

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥

अत्र वागर्थाविव इति परवल्लिङ्गता, सम्पृक्तौ पितरौ इत्यत्र योऽयं "पुमान् स्त्रिया" "पिता मात्रा" इति च एकशेषः तेनैव विशेषलक्षणयोगात् वक्रोक्तित्वे सति अलङ्कारतां लभते इति न धवखदिरादिष्वतिप्रसङ्गः इत्ययमपि समुच्चयभेदः। समाहारयोगादपि यथा,—

स्त्रीणां हावैः क्षते यत्र निजकार्ये मनोभुवा।
अच्छिन्नत्वनिभं न्यस्तं तन्मुखे शरकार्मुकम्॥

अत्रापि योऽयं अच्छिन्नत्वं शरकार्मुकम् इतीतरयोः प्राणितूर्यसेनाङ्गानाम् इति वाङ्मनसाच्छिन्नत्वेति च विशेषलक्षणयोगः तेन धवखदिरपलाशमित्येवमादिषु नातिप्रसङ्गो भवति।

विधिर्नाऽय निषेधेन प्रतिषेधोक्तिरत्र या।
शुद्धा मिश्रा च साक्षेपो रोधो नाक्षेपतः पृथक्॥ ६४॥

तत्र विध्याक्षेपः शुद्धो यथा,—

गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः।
ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान्॥

अत्र गच्छ इत्यत्र विधिवाक्यस्य ममापि जन्म तत्रैव भूयात् इत्याशिषा अनुकूलतयैव मरणसूचनात् निषेधः क्रियते इति शुद्धोऽयं विध्याक्षेपः। मिश्रो यथा,—

अलं विवादेन यथा श्रुतं त्वया तथाविधस्तावदशेषमस्तु सः।
ममात्र भावैकरसं मनः स्थितं न कामवृत्तिर्वचनीयमीक्षते॥

अत्र अलं विवादेन इति निषेधेन तथाविधः सोऽस्तु इति विधिना च तन्मतमवस्थाप्य ममात्र भावैकरसं मनः स्थितम् इति विधिना न कामवृत्तिर्वचनीयमीक्षते इति प्रतिषेधेन च यत् पुनराक्षिपति सोऽयं विधिनिषेधाभ्यां विधिमिश्र आक्षेपो भवति।

निषेधाक्षेपः शुद्धो यथा,—

कुतः कुवलयं कर्णे करोषि कलभाषिणि।
किमपाङ्गमपर्याप्तमस्मिन् कर्मणि मन्यसे॥

अत्र कुतः कुवलयं कर्णे करोषि इत्यस्य निषेधवाक्यस्य किमपाङ्गम् इत्यादिना प्रश्नपदेनापि निषेधपर्यवसायिना समर्थनं क्रियते इत्ययं शुद्धो निषेधाक्षेपः। मिश्रो यथा,—

सच्चं गरुआ गिरिणो को भणइ जलासआ ण गम्भीरा।
धीरेहिं उवमाउं तहवि हु मह णत्थि उच्छाहो॥

अत्र सत्यं गुरवोऽपि गिरयः इति विधिः, क आह जलाशया न गम्भीरा इति परमताक्षेपः, ताभ्यां गिरीणां गुरुत्वं सागराणाञ्च गाम्भीर्यम्। यदयमुत्तरार्धेन धीरापेक्षया निषेधति अन्याक्षेपया तदेव विधत्ते स एष मिश्रो निषेधाक्षेपः। शेषो नाक्षेपतः पृथक् इत्युक्तम्। तत्र एतावान् विशेषः।

क्रियाप्रवृत्तिहमागस्य वारणं कारणेन यत्।

उक्त्या युक्त्या च रोधो य आक्षेपः सोऽयमुच्यते ॥ ६५ ॥
प्रतिकूलोऽनुकूलश्च विधौ रोधोऽभिधीयते।
निषेधेऽप्युक्तियुक्तिभ्यां द्विप्रकारः स कथ्यते ॥ ६६ ॥

तत्र उक्त्या विधौ प्रतिकूलो यथा,—

किं जम्पिएण दहमुह जम्पिअसरिसं अणिव्वहन्त सुभरं।
एक्किअं जम्पिअ सारं णिहणं अस्स वि वज्जधारासु गओ ॥

अत्र किमः प्रतिकूलवाचित्वात् वचनस्यैव जल्पन् दशाननश्चिरस्थेन रुद्धः। कारणञ्च वज्रप्रभावकीर्तनादिति प्रातिकूल्येन उपन्यस्तम्। सोऽयम् औक्तः प्रतिकूलश्च विध्याक्षेपो रोध इत्युच्यते। उक्त्यैव विधौ अनुकूलो यथा,—

हन्तुं वि मग्गमाणो हन्तुं तुरिअस्स अप्पणा दहवअणं।
किं इच्छसि काउं से पवअवइ पिअं त्ति विप्पिअं रहुवइणो ॥

अत्रापि किमः प्रतिषेधवाचित्वाद् वचनस्यैव दशाननवधाय उत्तिष्ठमानः सुग्रीवो जाम्बवता रुद्धः कारणञ्च पुनः आनुकूल्येनैवोक्तं। किमेतत् त्वया रघुपतेः प्रियरूपं विप्रियं उपक्रान्तमिति। सोऽयम् औक्तोऽनुकूलश्च विध्याक्षेपो रोध इत्युच्यते।

विधावेव युक्त्याऽनुकूलः प्रतिकूलश्च यथा,—

गच्छेति वक्तुमिच्छामि त्वत्प्रियं मत्प्रियैषिणी।
निर्गच्छति मुखाद् वाणी मा गा इति करोमि किम् ॥

अत्र यथोक्तमित्युक्त्वा किं करोमि इति आनुकूल्येनैवाह अत्र किमः प्रश्नार्थत्वेऽपि युक्त्या निषेधार्थत्वं गम्यते। सोऽयं यौक्तोऽनुकूलश्च विध्याक्षेपो रोध इत्युच्यते। अयमेव च असत्या वैयात्योक्तिपक्षे यौक्तप्रतिकूलविध्याक्षेपो रोधो भवति। युक्त्या निषेधे प्रतिकूलो यथा,—पउरजुआणो गामो महुमासो जोव्वणं पइ ठेरो।

जुण्णसुरा साहीणा असई मा होउ किं मरउ ॥

अत्र असती मा भवतु इति यः प्रतिषेधमाह स प्रचुरयुवा ग्राम

इत्यादि कारणमुक्त्वा ततः किं म्रियताम् इति प्रातिकूल्येन कथ्यते। तत्र किमः काक्वा साद्गुण्यप्रश्नार्थमत्र युक्तया निषेधार्थत्वं गम्यते, सोऽयं यौक्तः प्रतिकूलनिषेधाक्षेपो रोध इत्युच्यते। युक्त्यैव निषेधेऽनुकूलो यथा,—

कहं मा जिज्जउ मज्झो इमिअ कन्दोट्टदलसरिच्छेहिं।
अच्छीहि जो ण दीसइ घणथणभरहृपसरेहिं॥

अत्र स्नानादिवदस्या मध्योऽपि मा क्षीयताम् इति निषेधवादी केनचिदानुकूल्येन कथ्यते, कथमयं मा क्षीयतामिति। योऽस्याः कुवलयसदृशाभ्यां लोचनाभ्यां घनस्तनरुद्धप्रसराभ्यां न दृश्यते। इयं हि एताभ्यामन्यमीक्षमाणा यथैव न पश्यति सोऽहमिव मध्योऽपि क्षीयमाणो लक्ष्यते। तत्र च किमः प्रश्नार्थत्वे निषेधार्थत्वं गम्यते। सोऽयं यौक्तोऽनुकूलश्च निषेधाक्षेपो रोध इत्युच्यते। निषेधे एव उक्त्या प्रतिकूलोऽनुकूलश्च यथा,—

भ्रुकुटिरारचिता गतमग्रतो कृतमयाननमुन्नमसाधु वा।
इयमिति प्रभुता क्रियते बलाद् अकुपितोऽपि हि यत् कुपितो जनः॥

अत्र अकुपितोऽपि कुपितः क्रियते इति योऽयं निषेधाक्षेपरूप उपालम्भः तत्र भ्रुकुटिरारचिता इत्यादिवैयात्येन प्रतिकूलकारणमुपन्यस्य सेयमतिप्रभुता सोऽयं बलात्कार इति काक्वा वाचनिकमेव उपालम्भमभिधत्ते। तेनायमौक्तः प्रतिकूलश्च निषेधाक्षेपो रोध इत्युच्यते। अयमेव च अस्यापि क्रियासु अवैयात्योक्तिपक्षे स्वरूपाख्यानात् औक्तोऽनुकूलनिषेधाक्षेपो रोधो भवति॥ यदा तु कारणमुपन्यस्यापि क्रियासु उत्तिष्ठमानो न रुध्यते तदा आक्षेप एव न रोधः। तद् यथा,—

गमिआ कलम्बवाआ दिट्ठं मेहन्धआरिअं गअणअलं।
सहिओ गज्जिअसद्दो तह वि हु से णत्थि जीविए आसङ्गो॥

अत्र कदम्बवातातिवाहनादीनां जीविताधारणहेतूनामुपन्यासेऽपि

क्रियासु उक्तिष्ठमानो न रुध्यते। कथमयं न जीवति इति किं तर्हि कारणमेव आक्षिप्यते तथापि नास्त्यत्र जीवितेऽध्यवसायः इति सोऽयमाक्षेप एव न रोधः॥ क्रियोद्यतस्यापि वारणे कारणानामन्यपरत्वे रोधो न भवति। यथा,—

धनञ्च बहु लभ्येत सुखं क्षेमञ्च वर्त्मनि।
न च मे प्राणसन्देहस्तथापि प्रिय मास्म गाः॥

अत्र यद्यपि यात्रोद्यतः प्रियो रुध्यते प्रभूतार्थलाभादीनां कारणानां गमनपरत्वमेव न निवारणपरत्वमतोऽयं न रोधः। किं तर्हि, आक्षेप एव भवति।

ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किञ्चन।
तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः॥ ६७॥
स उपन्यस्तवस्तूनां साधर्म्येण च कथ्यते।
वैधर्म्येण च विद्वद्भिर्वैपरीत्येन कुत्रचित्॥ ६८॥

तेषु साधर्म्येण यथा,—

पयोमुचः परीतापं हरन्त्येते शरीरिणाम्।
न ह्यात्मलाभो महतां परदुःखोपशान्तये॥

अत्र परीतापापहरणक्षमस्य जलदाख्यस्य महावस्तुनो न्यसनं विधाय तत्साधनसाधर्म्येणैव तत्साधनक्षमं महापुरुषलक्षणं वस्त्वन्तरमुपन्यस्यति। सोऽयं साधर्म्येणार्थान्तरन्यासः। वैधर्म्येण यथा,—

प्रियेण सङ्ग्रथ्य विपक्षसन्निधावुपाहितां वक्षसि पीवरस्तने।
स्रजं न काचिद्विजहौ जलाविलां
वसन्ति, हि प्रेम्णि गुणा न वस्तुनि॥

अत्रापि प्रियतमेन स्वयं कान्ताहृदये समारोपितायाः स्रजः प्रेमकारणमुपन्यस्य जलाविलत्वदोषवत्या अपि यदत्यागकारणं तदिह वैधर्म्यद्वारेण प्रतिपादितमतो वैधर्म्येणायमर्थान्तरन्यासः॥ विपर्ययेण यथा,—

जो जस्स हिअआदइओ दुक्खं देतो वि सो सुहं देइ।

दह्यमाणइट्टुसिआणं वि वड्डइ यणआण रोमञ्चो ॥

अत्र साधनसमर्थं वस्तु प्रथमत एवोपन्यस्य पश्चात् तत्साध्यमभिहितम् इति विपर्यासादयं विपर्ययो नामार्थान्तरन्यासः ॥

प्रोक्तो य उभयन्यासो ऽर्थान्तरन्यास एव सः ।

स प्रत्यनीकन्यासश्च प्रतीकन्यास एव च ॥ ६८ ॥

तेषूभयन्यासो यथा,—

ते विरला सप्पुरिसा जे अभणन्ता घडन्ति कज्जलावे ।

थोअच्चिअ ते वि दुमा जे असुणिअकुसुमणिग्गमा देन्ति फलं ॥

अत्र विद्यमानमपि साध्यसाधनभावमप्रतिपाद्य यदुभयो र्वस्तुनो-र्न्यसनं सोऽयमुभयन्यासः । प्रत्यनीकन्यासो यथा,—

विरला उवआरिहुच्चिअणिरवेक्खा जलहरव्व वच्चन्ति ।

िं ज्जन्ति ताण विरहे विरलच्चिअ सरिप्पवाहव्व ॥

अत्र यदिदमुपकारानपेक्षितप्रत्युपकाराणां गमनं यच्चाकृतप्रत्यु-पकाराणां तद्विरहेऽवसादनं तदुभयमपि जलधरसरित्प्रवाहयोरन्यो-न्यातिशयितयोरुपनयमानं प्रत्यनीकन्यासो भवति । प्रतीकन्यासो यथा,—का कथा बाणसन्धाने ज्याशब्दे नैव दूरतः ।

हुङ्कारेणैव धनुषः स हि विघ्नानपोहति ॥

अत्र विघ्नोत्सारणसमर्थाया बाणमोक्षणलक्षणायाः क्रियायाः प्रथमावय-वभूतं ज्याशब्दं धनुषो हुङ्कारमिवेति तत्साधनमुपन्यस्य प्रतीकन्यास-नामानमर्थान्तरन्यासमभिधत्ते ॥

गुणजातिक्रियादीनां यत्र वैकल्पदर्शनम् ।

विशेषदर्शनायैव सा विशेषोक्तिरिष्यते ॥ ७० ॥

प्रतोऽन्यतरेऽभिधेये च सा विशेषस्य कारणे ।

वैकल्यादर्शनेनापि क्वचिदप्युपपद्यते ॥ ७१ ॥

सा गुणवैकल्येन यथा,—

न कठोरं न वा तीक्ष्णमायुधं पुष्पधन्वनः ।

तथापि जितमेवाभूदमुना भुवनत्रयम् ॥

अत्रातीक्ष्णाकठोरेण चायुधेन पुष्पधन्वा त्रीणि जगन्ति विजयत इति तत्र प्रभावातिशयः प्रतीयते। सेयं प्रतीयमानविशेषहेतु गुणवैकल्यवती विशेषोक्तिः॥ जातिवैकल्येन यथा,—

न देवकन्यका नापि गन्धर्वकुलसम्भवा।
तथाप्यषा तपोभङ्गं विधातुं वेधसोऽप्यलम् ॥

अत्र देवकन्यकात्वाभावेऽपि एषा वेधसोऽपि तपोभङ्गं विधातुमलमिति वर्णनीयायाः रूपातिशयः प्रतीयते। सेयं प्रतीयमानविशेषहेतु जातिवैकल्यवती विशेषोक्तिः॥ क्रियावैकल्येन यथा,—

न बद्धा भ्रूकुटिर्नापि स्फुरितो रदनच्छदः।
न च रक्ता भवद्दृष्टिर्जितञ्च द्विषतां कुलम् ॥

अत्र भ्रूभङ्गादेरभावेऽपि योऽयं द्विषतां जयस्तेन वर्णनीयस्य प्रतापातिशयः प्रतीयते। सेयं प्रतीयमानविशेषहेतुः क्रियावैकल्यवती विशेषोक्तिः॥

आदिग्रहणाद्द्रव्यवैकल्येन यथा,—

न रथा न च मातङ्गा न हया न च पत्तयः।
स्त्रीणामपाङ्गदृष्ट्यैव जीयते जगतां त्रयम् ॥

अत्र रथादेरभावेऽपि जगत्त्रयविजयहेतुः स्त्रीणामपाङ्गावलोकनमभिधीयते। सेयमभिधेयविशेषहेतु द्रव्यवैकल्यवती विशेषोक्तिः॥

द्रव्यस्यापि वैकल्येन यथा,—

एकचक्रो रथो यन्ता विकलो विषमा हयाः।
आक्रामत्येव तेजस्वी तथाप्यर्को जगत्त्रयम् ॥

अत्र रथादीनां द्रव्याणामेकचक्रत्वादिभिर्वैकल्येऽपि यदेतद्भगवतो भास्करस्य भुवनत्रयाक्रमणं तस्येह तेजस्विता हेतुरभिधीयते। सेयमभिधेयविशेषहेतु वैकल्यवद्द्रव्या नामापरा विशेषोक्तिः। द्रव्यस्य योगायोगाभ्यामवैकल्येनापि क्वचिदेषा विशेषायाविशेषाय च। यथा,—

अयं मया रथक्षोभादंसेनांसो निपीडितः।
एकः सतो शरीरेऽस्मिन् शेषमङ्गं भुवो भरः॥

अत्रायं मया स्पृष्टोऽंसः पुण्यवान् मया चास्पृष्टं शेषमङ्गं मे निरर्थकमिति योऽयमवैकल्पदर्शनेऽपि विशेष स्तेनैषा हेतुमतत्रपि हेतुमतो विशेषत्रमाणा यथोक्ता विशेषोक्ति भर्वति। या पुनरिष्टोर्वशमितो वाक्याङ्गत्वादिविशिष्टावगतिः सा पर्यायोक्ति र्न विशेषोक्तिः॥

क्रियाकारकसम्बन्धिसाध्यदृष्टान्तवस्तुषु।
क्रियापदाद्युपस्कारमाहुः परिकरं बुधाः॥ ७२॥

तेषु क्रियापरिकरो यथा,—

ववसिअणिवेइअत्थो सो मारुइलद्धपच्चआगअहरिसं।
सुग्गीवेण उरत्थलवणमालामलिअमहुअरं उवऊढो॥

अत्र मारुतिलब्धप्रत्ययागतहर्षमितनेनोरःस्थलवनमालाम्दितमधुकरमितनेन चोपगूहनक्रियायाः परिकरत्वादयं क्रियापरिकरः॥

कारकपरिकरो यथा,—

पडिआअ हत्थसिढिलिअणिरोहपण्डुरसमूससन्तकवोला।
पेल्लिअवामपओहरविसमुण्णअडाहिणत्थणी जनअसुआ॥

अत्र हस्तशिथिलितनिरोधपाण्डुरसमुच्छ्वसत्कपोलेत्यनेन प्रेरितवामपयोधरविषमोन्नतदक्षिणस्तनीत्यनेन च जनकसुता इति च कारकपदस्य परिकरितत्वादयं कारकपरिकरः। सम्बन्धिपरिकरो यथा,—

उम्मूलिआ ण खुलिआ उक्खिवंता ण उज्जुअंओ सरिआ।
णिज्जंता ण णिराआ गिरीण मग्गेण पत्थिआ णइ सोत्ता॥

अत्रोद्धियमाणगिरिसम्बन्धिनोऽप्रयोजका अपि नदीप्रवाहा विशेषणैरुपस्कृता इति सम्बन्धिपरिकरोऽयम्॥ साध्यपरिकरो यथा,—

धीरं हरइ विसाओ विणअं जोव्वणमओ अणङ्गो लज्जं।
एक्कंतगहिअवक्खो किं सेसउ जं ठवेइ वअपरिणामो॥

अत्र गतवयसो न धैर्यं न विनयो न लज्जेति साध्यं विपाद्यौवन-मदानङ्गक्रियादृष्टान्तैरुपस्कृतमिति साध्यपरिकरोऽयम् ॥

दृष्टान्तपरिकरो यथा,—

मन्थाट्ठिअधरणिहरं छिज्जुग्घसमुद्दमण्डलं उव्वेलं।
रहुरहवेअविअलिअं पडिअं विअ उक्कडक्खकोडि चक्कं ॥

अत्र मथितमन्दरसमुद्रोदाहरणभूतं रविरथचक्रमुत्कटाक्षकोटीति विशेषणेन साम्यसिद्धये परिकरितमिति दृष्टान्तपरिकरोऽयम् ॥

वस्तुपरिकरो यथा,—

देवी पुत्रमसूत नृत्यत गणाः किं तिष्ठतेत्युद्भुजे
हर्षाद्भृङ्गिरिटावुदाहृतगिरा चामुण्डयालिङ्गिते।
पायाद्वो जितदेवदुन्दुभिघनध्वानं प्रवृत्तस्तयो-
रन्योन्याङ्गनिपातजर्जरतरस्थूलास्थिजन्मा रवः ॥

अत्र चामुण्डाभृङ्गिरिटिपरिष्वङ्गसंघट्टितपरस्परहृदयास्थिजन्मनः शब्दस्य वस्तुतया परिगृहीतस्य देवी पुत्रमसूतेत्यादिभिः परिकरितत्वादयं वस्तुपरिकरः ॥

क्रिया यथा समासेन तथा तृत्तद्धितादिभिः।
विशेष्यते तदाङ्गस्तं क्रियापरिकरं परम् ॥ ७३ ॥

तत्र कृता तादर्थ्येन यथा,—

गेहाद्याता सरितमुदकं हारिका नाभिहीर्ये
मङ्क्ष्यामीति श्रयसि यमुनातीरवीरुद्गृहाणि।
गोसन्दायी विशति विपिनान्येव गोवर्धनाद्रे-
र्नं त्वं राधे हृषि निपतिता देवकीनन्दनस्य ॥

अत्र तुमुन्ण्वुलौ क्रियायां क्रियार्थायामित्यादिभिरुपपदभूतापि क्रियैव विशिष्यते। सोऽनायमपरः क्रियापरिकरो भवति। एवं लघणादिषु मत्वादिभिरपि द्रष्टव्यम्। तद्यथाप्ययेन,—

सलीलमासक्तलतान्तभूषणं समासजन्त्या कुसुमावतंसकम्।

स्तनोपपीडं नुनुदे नितम्बिना घनेन कश्चिज्जघनेन कान्तया ॥

अत्र स्तनाभ्यामुपपीड्यन्त्या यं नुनुदे इत्यर्थात् क्रियाविशेषणमेवैतदिति अयमपि क्रियापरिकरो भवति। एवं यथाविधग्रहणप्रयोगादिषु द्रष्टव्यम्। तेन क्रियायाः क्वचिदान्तरविशेषणयोगाद् व्यङ्ग्यत्वं भवतीत्यपि व्याख्यातम्। यथा,—

शय्यन्ते हतशायिकाः पथि नवच्छायानिषण्णाध्वगैः
श्रीकण्ठायतनेषु धार्मिकजनैरासयन्त उद्भासिकाः।
शून्ये तत्र निकुञ्जशाखिनि सखि ग्रीष्मस्य मध्यन्दिने
सज्जानां दयिताभिसारणविधौ रम्यः क्षणो वर्तते ॥

अत्रोद्भासिका आसयन्ते हतशायिकाः शय्यन्ते इत्यमूभ्यां सामान्यविशेषोपचरितरूपो भावात्मा एकैव प्रत्याय्यते स आख्यातार्थाभ्यां सामान्यरूपेण ण्वुलन्ताभ्यां विशेषरूपेण बहुवचनं चेह कुत्सातिशयार्थम्। या हि नासोद्भसय कुत्सावत्यो बहुप्रकारवत्यो वचःसु आसिका याश्च हतानामतिशयवत्यस्ता तथाभूता एव भूयस्यः शायिकाः प्रतीतास्ताभिः विशेषरूपाभिरियमासिका शायिका चोपमानोपमेयसम्बन्धजनितभेदाभेदपरिग्रहप्रकारेणापि बहुत्वेनैव प्रत्याय्यते। तेनोद्भासिका इवासनानि हतशायिका इव शयनानि क्रियन्ते भवन्तीति वाक्यार्थो भवति। सोऽयं यथोक्तक्रियापरिकरः। क्वचित् पुनर्वीप्सामपि तद्रूपं तदर्थरूपं वा क्रियाविशेषणं भवति यथा,—

शतं वारानुक्तः प्रियसखि वचोभिः स परुषैः
सहस्रं निर्धूतः पदनिपतितः पार्ष्णिहतिभिः।
कियत् कृत्वा बद्धाः पुनरिह न वेद्मि भ्रुकुटय-
स्तथापि क्लिश्नन् मां क्षणमपि न धृष्टो विरमति ॥

अत्र वारानिति वारशब्दः शसन्तः वारसङ्ख्यायाः कृत्वसुजिति कृत्वसुच् तदर्थः ताविमौ द्वावप्यावृत्तिरूपेण क्रियाविशेषणं भवतः। नन्वेवमुद्भासिकादीनां वारादीनाञ्च क्रियाविशेषणत्वात् कर्मत्वेन नपुंसकलिङ्ग-

सापि प्राप्नोति। यथा स्वदु पचति प्रशस्तं पठतीति उच्यते। त्रिधा खलु क्रियाविशेषणं भवति वाह्यमाभ्यन्तरं वाह्याभ्यन्तरञ्च। तत्र वाह्यं कर्मरूपं वारादि, आभ्यन्तरं विशेषरूपसुङ्गासिकादि, वाह्याभ्यन्तरं गुणरूपं स्वद्वादि। तेषु वाह्यं सोऽयमित्यभिधायासम्बन्धादभेदोपचारेणाविचलितस्वरूपमेव प्रधानं विशिंषत् कथमिव स्वलिङ्गं जह्यात्। आभ्यन्तरन्तु विशेषापरित्यागादाविष्टलिङ्गसंख्यं कथमिवान्यलिङ्गं गृह्णीयात्। वाह्याभ्यन्तरन्तु गुणत्वात् स्वलिङ्गविरहे गुणवचनानामाश्रयतो लिङ्गवचनानीति विशेष्यलिङ्गग्राह्यमेव भवति। तद्धितक्तत्वसुचोक्तस्यालादिनोच्यते यथा,—

आलूनकवलारम्भे भूयोभयस्थगितेक्षणाः
किमपि वलितग्रीवं स्थित्वा मुहुर्मृगपङ्क्तयः।
गगनमसकृत् पश्यन्त्येतास्तथाश्रुघने मुखे
निपतति यथा स्थूलाश्रेण्यो भ्रमन्नयनोदकम्॥

अत्राद्यः प्रकारवचने थाल्। अनेकवारानित्यर्थे असकृदिति तद्धितेन, पश्यन्तीति क्रियया, वलितग्रीवमिति समासेन, किमपीति नाम्नाऽव्ययेन, स्थित्वेति क्त्वा, मुहुरिति सदर्थे वीप्सया च क्रियाविशेषणेन सह विशेषयति। द्वितीयश्च यथा, भ्रमन्नयनोदकं निपततीति स्थूलविवक्षया पतनक्रियया तमेवार्थमनुसन्दधानः पूर्वक्रियाया एव विशेषणं भवति। सोऽयं कृत्तद्धितसमासाव्ययानां सन्निपातरूपेऽपि क्रियापरिकरे यथा तथेतेऽयतयोः प्राधान्यात् तद्धितेनैवोपदिश्यते। एतेन तद्यदोर्विपर्ययस्तद्विशेषणयोगश्च व्याख्यातः। तद् यथा,—

जह जह णिसा समप्पइ तह तह वेविरतरङ्गपडिमापडिअं।
किंकाअव्वविमूढं वेवइ हिअअं वउआइ णो ससिबिम्बं॥

अत्र यथा तथेति क्रियाविशेषणयोरपरमपि विशेषणं वीप्सा भवति। सोऽयमेवंप्रकारः क्रियापरिकरो द्रष्टव्यः॥

क्रियाविशेषणं कैश्चित् सम्बोधनमपीष्यते।

सम्बन्धिभिः पदैरेव लक्ष्यन्ते लक्षणादयः ॥ ७४ ॥

तेषु सम्बोधनपरिकरो यथा,—

धर्मस्रोतस्त्रवे जयन्ति मुकुटस्रग्वेऽपि गौरीपते-
स्त्वं रत्नाकरपत्नि जह्नुतनये भागीरथि प्रार्थये।
त्वत्तोयान्तशिलानिषण्णवपुषस्त्वद्वीचिभिः प्रेङ्खत-
स्त्वन्नाम स्मरतस्त्वदर्पितदृशः प्राणाः प्रयास्यन्ति मे ॥

अत्र भागीरथीति सम्बोधनपदं धर्मस्रोतस्त्रवे जयन्तीमत्रादिभिः परिक्रियते। तत्र यथाकथञ्चिदपुनरुच्यमानोऽर्थः क्रियाविशेषणं नातिक्रामतीत्ययमपि क्रियापरिकरः ॥ लक्षणपरिकरो यथा,—

महाप्रथिम्ना जघनस्थलेन सा महेभकुम्भोन्नकुचेन वक्षसा।
मुखेन दीर्घोज्ज्वललोलचक्षुषा वयस्य कान्ता कथय क्व वर्तते ॥

अत्र जघनस्थलादीनि लक्षणानि महाप्रथिम्नेत्यादिभिः परिक्रियन्ते सोऽयं लक्षणपरिकरः ॥ हेतुपरिकरो यथा,—

त्वया जगन्ति पुण्यानि त्वया पुण्या जनोक्तयः।
नाथवन्तस्त्वया लोकास्त्वमनाथा विपद्यसे ॥

अत्र प्रथमतृतीयपादयोस्त्वया त्वयेति हेतू द्वितीयचतुर्थपादाभ्यां परिक्रियेते सोऽयं हेतुपरिकरः ॥ सहार्थपरिकरो यथा,—

अनेन यूना सह पार्थिवेन रम्भोरु कच्चिन्मनसो रुचिस्ते।
शिप्रातरङ्गानिलकम्पितासु विहर्तुमुद्यानपरम्परासु ॥

अत्रानेनेति सहार्थो यूना पार्थिवेनेति च पदाभ्यां परिक्रियते सोऽयं सहार्थपरिकरः ॥ तादर्थ्यपरिकरो यथा,—

इन्दीवरश्यामतनुर्नृपोऽयं त्वं रोचनागौरशरीरयष्टिः।
अन्योन्यशोभापरिवृद्धये वां योगस्तडित्तोयदयोरिवास्तु ॥

अत्रान्योन्यशोभापरिवृद्धये इति तादर्थ्यार्थः शेषपदार्थैः परिक्रियते सोऽयं तादर्थ्यपरिकरः ॥ उपपदपरिकरो यथा,—

नम उग्रतपस्विपदाय जगद्धिताय विश्वस्थितिलयसम्भवकारणाय।

सर्वात्मने विजितकोपमनोभवाय तुभ्यं नमस्त्रिभुवनप्रभवे शिवाय ॥
अत्र नमस्तुभ्यमित्युपपदार्थः समस्तपदैः परिक्रियते सोऽयमुपपद-परिकरः ॥

उपमारूपकादीनां शब्दार्थोभयभङ्गिभिः।
साधर्म्योत्पादनं यत् तमन्ये परिकरं विदुः ॥ ७५ ॥

तत्र स शब्दकृत उपमायां यथा,—

कह कह विरएइ पअं मग्गं पुलएइ छेज्जमाविसइ।
चोरव्व कई अत्थं लद्धुं दुक्खेण ठाणेण णिव्वहइ ॥

अत्र पदमार्गच्छेदैः शब्दैः भिन्नार्थैरभिन्नार्थविरचनादिक्रियानिवेशिभिः कविचोरयोरप्रसिद्धमौपम्यं साधितमिति शाब्दोऽयमौपम्यपरिकरः। अर्थकृतो रूपके यथा,—

विअड़े गअणसमुद्दे दिअसे सूरेण मन्दरेण व मह्निए।
णीअइ सहूरव्व संभा तिस्सा मग्गेण अमिअकलसो व्व ससी ॥

अत्र गगने समुद्रत्वेन निरूपिते सूर्यसन्ध्याशशिभिर्मन्दरमदिरामृतकलशैश्च मथनादिक्रियानिवेशिभिरर्थैः परस्परोपमानात् साधर्म्यमुत्पादितमित्यार्थोऽयं रूपकपरिकरः ॥ उभयकृतस्तु विरोधश्लेषो यथा,—रइसुणालाहरणो णलिणिदलत्थइअपीवरत्थणअलसो।

वहइ पिअसङ्गमम्मि वि मअणाअप्पपसाहणं जुवइजणो ॥

अत्र प्रियसङ्गमेऽपि मदनाकल्पप्रसाधनं भवतीति विरुद्धार्थयोः साधर्म्योत्पादनाय जले क्रीड़तो युवतिजनस्य यथोक्तविशेषणाभ्यां शब्दतोऽर्थतश्चोपस्कारः कृत इत्युभयकृतोऽयं विरोधश्लेषपरिकरः। एवमलङ्कारान्तरेष्वपि द्रष्टव्यम् ॥

एकावलीति या सापि भिन्ना परिकरान्न हि।
त्रिधा सापि समुद्दिष्टा शब्दार्थोभयभेदतः ॥ ७६ ॥

तत्र शब्दैकावली यथा,—

पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतं गहनम्।

हरिमिव हरिमिव हरिमिव वहति पयः पश्यत पयोष्णी ॥

अत्र हरिमिव हरिमिव हरिमिवेति शब्दैकावल्या विभिन्नार्थया पयः-कर्मकारकमुपस्क्रियते सेयं शब्दैकावली परिकरस्यैव भेदः ॥ अर्थैकावली यथा,—

किमिति कवरी यादृक् तादृग् दृशौ किमकज्जले
न खलु लिखिताः पत्रावल्यः किमद्य कपोलयोः ।
अयमयमयं किन्तु क्लाम्यत्यसंस्करणेन ते
प्रियसखि सखीदृक्त्यस्तो विलासपरिच्छदः ॥

अत्रायमयमयमिति सर्वनामपराम्रश्यमाणया मानुमन्यत्कारणभूतया ततोऽन्यया वा तथाविधयार्थैकावल्या परिच्छद इति कर्तृकारकमभिन्नार्थ एव परिक्रियते । सेयमर्थैकावली परिकरस्यैव भेदः ॥

उभयैकावली यथा,—

अम्बा तुष्यति न मया न स्नुषया सापि नाम्बया न मया ।
अहमपि न तया न तया वद राजन् कस्य दोषोऽयम् ॥

अत्राम्बास्नुषाप्रमुदर्यलक्षणैरर्थैस्तद्वाचिभिः सर्वनामभिः शब्दैरेकावली-क्रमेण मिथोऽनुस्यूतैर्मिथोऽनुस्यूत एव तुष्यतीति क्रियाहेतु-र्मैथेतरादिभिः परिक्रियते । सेयमुभयग्रथितत्वादुभयैकावली परिकर-स्यैव भेदः ॥

क्रियाजातिगुणद्रव्यवाचिनैकत्र वर्तिना ।
सर्ववाक्योपकारश्चेद्दीपकं तन्निगद्यते ॥ ७७ ॥
अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरावली ।
संपुटं रसना माला चक्रवालञ्च तद्भिदाः ॥ ७८ ॥

तेषु क्रियावाचिना आदिदीपकं यथा,—

चरन्ति चतुरम्भोधिवेलोद्यानेषु दन्तिनः ।
चक्रवासाद्रिकुञ्जेषु कुन्दभासो गुणाश्च ते ॥

अत्र चरन्तीति क्रियया द्वयोरपि वाक्ययोरादिपदस्थयैवोपकारः क्रियत

इत्यादिदीपकमिदं क्रियाविषयमुच्यते। एवं मध्यान्तयोरपि द्रष्टव्यम्।

जातिवाचिना आदिदीपकं यथा,—

पवनो दक्षिणः पर्णं जीर्णं हरति वीरुधाम्।
स एव च नताङ्गीनां मानभङ्गाय कल्पते॥

अत्र पवन इत्यादिपादे जातिपदं तेनादिदीपकमिदं जातिविषयमुच्यते। एवं मध्यान्तयोरपि द्रष्टव्यम्॥

गुणवाचिना आदिदीपकं यथा,—

श्यामलाः प्रावृषेण्याभि र्दिशो जीमूतपङ्क्तिभिः।
भुवश्च सुकुमाराभि र्नवशाद्वलराजिभिः॥

अत्र श्यामला इत्यादिपादे गुणपदं तेनादिदीपकमिदं गुणविषयमुच्यते। एवं मध्यान्तयोरपि द्रष्टव्यम्॥

द्रव्यवाचिना आदिदीपकं यथा,—

विष्णुना विक्रमस्थेन दानवानां विभूतयः।
क्वापि नीताः कुतोऽप्यासन्नानीता देवतर्द्धयः।

अत्र विष्णुनेत्यादि पादे द्रव्यपदं तेनादिदीपकमिदं द्रव्यविषयमुच्यते। एवं मध्यान्तयोरपि द्रष्टव्यम्॥

अर्थावृत्ति र्यथा,—

हृष्यति चूतेषु चिरं तुष्यति वकुलेषु मोदते मरुति।
इह हि मधौ कलकूजिषु पिकेषु च प्रीयते कामी॥

अत्र हृष्यति तुष्यति मोदते प्रीयत इत्येतैः पदैः स एवार्थ आवर्त्तमानः सर्ववाक्यानि दीपयति सेयमर्थावृत्ति र्दीपकस्य भेदः।

पदावृत्ति र्यथा,—

उत्कण्ठयति मेघानां माला वृन्दं कलापिनाम्।
यूनामुत्कण्ठयत्यद्य मानसं मकरध्वजः॥

अत्रोद्ग्रीवं करोति उत्कण्ठावन्तं करोतीत्यर्थयोरुत्कण्ठयतीति पदमावर्त्तमानं वाक्यद्वयमपि दीपयति सेयं पदावृत्ति र्दीपकस्य

भेदः॥ उभयावृत्ति यथा,—

जय देव भुवनभावन जय भगवन् निखिलवरद निगमनिधे।
जय रुचिरचन्द्रशेखर जय मदनान्तक जगद्दिगुरो॥

अत्र जयेत्ययं शब्दार्थावर्तमानः सर्ववाक्यानि दीपयति सेयमुभयावृत्ति दीपकस्य भेदः॥ आवली यथा,—

त्वमर्क स्त्वं सोम स्त्वमसि पवन स्त्वं हुतवह-
स्त्वमाप स्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च।
परिच्छिन्नामेवं त्वयि परिणता बिभ्रति गिरम्
न विद्मस्तत्तत्त्वं वयमिह हि यत्त्वं न भवसि॥

अत्र पूर्वार्धे त्वमिति शब्दार्थयोः प्रथमावृत्तिः प्रथमपादस्यथा असीति क्रियया दीप्यते। ततस्तृतीयपादे त्वमीति रूपान्तरेण युष्मदर्थे आवर्त्तमानः क्रियान्तरेण संबध्यते। चतुर्थपादेषु पुनरपि तेनैव रूपेणास्मदर्थेन भवतिना संबध्यत इति। सेयं दृत्तीनामावृत्तिरावलीति दीपकस्यैव भेदो भवति॥ संपुटं यथा,—

णवपल्लवेसु लोलइ घोलइ विडवेसु चलइ सिहरेसु।
थवइ थवएसु चलणे वसन्तलच्छी असोअस्स॥

अत्र नवपल्लवेष्वित्यादीन्यशोकस्येति लोलतीत्यादीनि वसन्तलक्ष्मीरिति पदे द्रव्यवाचिनी सपुटक्रमेण मिथः संबध्यमाने मिथः संबद्धानेव दीपयतः। तदेतत् संपुटं नाम दीपकस्य भेदः॥ रसना यथा,—

सलिलं विकाशिकमलं कमलानि सुगन्धिमधुसमृद्धानि।
मधु लीनालिकुलाकुलमलिकुलमपि मधुरवणितमिह॥

अत्र रसनाक्रमेण मिथः संग्रथितानि सलिलं विकाशिकमलमित्यादीनि वाक्यानि इहेत्यन्तस्थितेनाधिकरणवाचिना द्रव्यदीपकेन दीप्यन्ते तदेतद् रसनादीपकं नामादिदीपकभेदः॥ माला यथा,—

इमिणा सरएण ससी ससिणा वि णिसा णिसाइ कुमुअवणं।
कुसुमवणेण अ पुलिणं पुलिणेण अ सोहइ हंसउलं॥

अत्र मालाक्रमेण ग्रथिताः कर्तारो हेतवश्च शशिप्रभृतयः शोभन्त इति क्रियया दीप्यन्ते तदेतन्मालादीपकं नाम दीपकस्य भेदः ॥ कः पुनरस्य पूर्वस्माद्विशेषः पूर्वत्र हत्तिच्छिन्नं रसनायां सर्वत्र इह तु स्वतन्त्रं मालापुष्पवत् पदं पदेन गुणप्रमानं क्रियादिभिः संबध्यत इति ततोऽयं भिद्यते ॥ चक्रवालं यथा,—

संग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत् समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलम्
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥

अत्र संग्रामाङ्गणमागतेन भवता चापे समारोपित इति भावलक्षणाच्चिह्नस्य भावविशेषस्य द्वितीयपादे कारकवीप्सया यत् संक्षेपेणाभिधानं तदेतच्चक्रवालाद्रिणेव मालादीपकेन विस्तारवता वेष्टितमिदं चक्रवालं नाम दीपकस्य भेदः ॥

शब्दस्य यदि वार्थस्य द्वयोरप्यनयोरथ ।
भणनं परिपाट्या यत् क्रमः स परिकीर्तितः ॥ ७८ ॥

तत्र शब्दपरिपाटि द्विधा पदतो वाक्यतश्च । तयोराद्या यथा,—

तस्याः प्रगल्भलीलाभिरालापस्मितदृष्टिभिः ।
जीयन्ते वल्लकीकुन्दस्रगिन्दीवरसम्पदः ॥

अत्रालापस्मितदृष्टिभिः पदार्थैर्वल्लकीकुन्दस्रगिन्दीवरसम्पदः पदार्था जीयन्त इति शब्दपरिपाट्या भणनं सेयं पदतः शब्दपरिपाटिः क्रमः ॥ वाक्यगो यथा,—

इन्दुर्मूर्ध्नि शिवस्य शैलदुहितुर्वक्त्रो नखाङ्कः स्तने
देयाद्वोऽभ्युदयं द्वयं तदुपमामालम्बमानं मिथः ।
संवादः स्मरणेन यस्य लसता कार्येकतायां तयो-
रूर्ध्वाकारविचिन्तितेन च हृदि ध्यातस्वरूपेण च ॥

अतेन्दुर्मूर्ध्नि शिवस्य शैलदुहितुर्वक्त्रो नखाङ्कः स्तन इति वाक्यार्थ-

सम्बन्धिभिः पदैरेव लक्ष्यन्ते लक्षणादयः ॥ ७४ ॥

तेषु सम्बोधनपरिकरो यथा,—

धर्मस्त्रोत्सवदैर्जयन्ति मुकुटस्तवके वि गौरीपते-
स्त्वां रत्नाकरपत्नि जह्नुतनये भागीरथि प्रार्थये ।
त्वत्तोयान्तशिलानिषण्णवपुषस्त्वद्वीचिभिः प्रेङ्खत-
स्त्वन्नाम स्मरतस्त्वदर्पितदृशः प्राणाः प्रयास्यन्ति मे ॥

अत्र भागीरथीति सम्बोधनपदं धर्मस्त्रोत्सवदैर्जयन्तीत्यादिभिः परिक्रियते । तत्र यथाकथञ्चिदुपचर्यमाणोऽर्थः क्रियाविशेषणं नातिक्रामतीत्ययमपि क्रियापरिकरः ॥ लक्षणपरिकरो यथा,—

महाप्रथिम्ना जघनस्थलेन सा महेभकुम्भोन्नकुचेन वक्षसा ।
मुखेन दीर्घोज्ज्वललोलचक्षुषा वयस्य कान्ता कथय क्व वर्तते ॥

अत्र जघनस्थलादीनि लक्षणानि महाप्रथिम्नेत्यादिभिः परिक्रियन्ते सोऽयं लक्षणपरिकरः ॥ हेतुपरिकरो यथा,—

त्वया जगन्ति पुण्यानि त्वया पुण्या जनोक्तयः ।
नाथवन्तस्त्वया लोकास्त्वमनाथा विपत्स्यसे ॥

अत्र प्रथमतृतीयपादयोस्त्वया त्वयेति हेतू द्वितीयचतुर्थपादाभ्यां परिक्रियेते सोऽयं हेतुपरिकरः ॥ सहार्थपरिकरो यथा,—

अनेन यूना सह पार्थिवेन रम्भोरु कच्चिन्मनसो रुचिस्ते ।
सिप्रातरङ्गानिलकम्पितासु विहर्तुमुद्यानपरम्परासु ॥

अत्रानेनेति सहार्थो यूना पार्थिवेनेति च पदाभ्यां परिक्रियते सोऽयं सहार्थपरिकरः ॥ तादर्थ्यपरिकरो यथा,—

इन्दीवरश्यामतनुर्नृपोऽयं त्वं रोचनागौरशरीरयष्टिः ।
अन्योन्यशोभापरिवृद्धये वां योगस्तडित्तोयदयोरिवास्तु ॥

अत्रान्योन्यशोभापरिवृद्धये इति तादर्थ्यार्थः शेषपदार्थैः परिक्रियते सोऽयं तादर्थ्यपरिकरः ॥ उपपदपरिकरो यथा,—

प्रत्यक्षवस्तुविषयाय जगद्धिताय विश्वस्थितिप्रलयसम्भवकारणाय ।

सर्वात्मने विजितकोपमनोभवाय तुभ्यं नमस्त्रिभुवनप्रभवे शिवाय॥
अत्र नमस्तुभ्यमितुत्रपदार्थः समस्तपदैः परिक्रियते सोऽयमुपपद-परिकरः॥

उपमारूपकादीनां शब्दार्थोभयभङ्गिभिः।
साधर्म्योत्पादनं यत् तमन्ये परिकरं विदुः॥ ७५॥

तत्र स शब्दतस्त उपमायां यथा,—

कह कह विरएइ पअं मग्गं पुलएइ छेज्जमाविसइ।
चोरव्व कई अत्थं लद्धुं दुक्खेण ठाणेण णिव्वहइ॥

अत्र पदमार्गच्छेदैः शब्दैर्भिन्नार्थैरभिन्नार्थविरचनादिक्रियानिवेशिभिः कविचोरयोरप्रसिद्धमौपम्यं साधितमिति शाब्दोऽयमौपम्यपरिकरः। अर्थतस्तु रूपके यथा,—

विअडे गअणसमुद्दे दिअसे सूरेण मन्दरेण व महिए।
णीआइ महुरव्व संभा तिस्सा मग्गेण अमिअकलसो व्व ससी॥

अत्र गगने समुद्रत्वेन निरूपिते सूर्यसन्ध्याशशिभिर्मन्दरमदिराम्हत-कलशैश्च मथनादिक्रियानिवेशिभिरर्थैः परस्परोपमानात् साधर्म्य-मुत्पादितमित्यार्थोऽयं रूपकपरिकरः॥ उभयतस्तु विरोधश्लेषो यथा,—रइमुणालाहरणो णलिणिदलत्थइअपीवरत्थणअलसो।

वहइ पिअसङ्गमम्मि वि मअणाआसपसाहणं जुवइजणो॥

अत्र प्रियसङ्गमेऽपि मदनाकल्पमसाधनं भवतीति विरुद्धार्थयोः साधर्म्योत्पादनाय जले क्रीडतो युवतिजनस्य यथोक्तविशेषणाभ्यां शब्दतोऽर्थतश्चोपस्कारः कृत इत्युभयतस्तोऽयं विरोधश्लेषपरिकरः। एवम-लङ्कारान्तरेष्वपि द्रष्टव्यम्॥

एकावलीति या सापि भिन्ना परिकरान्न हि।
त्रिधा सापि समुद्दिष्टा शब्दार्थोभयभेदतः॥ ७६॥

तत्र शब्दैकावली यथा,—

पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतं गहनम्।

हरिमिव हरिमिव हरिमिव वहति पयः पश्यत पयोष्णी ॥

अत्र हरिमिव हरिमिव हरिमिवेति शब्दैकावल्या विभिन्नार्थया पयः-कर्मकारकमुपस्क्रियते सेयं शब्दैकावली परिकरस्यैव भेदः ॥ अर्थैकावली यथा,—

किमिति कवरी याहक् ताहग् दृश्यौ विमकश्मले
न खलु लिखिताः पत्रावल्यः किमद्य कपोलयोः।
अयमयमयं किन्न ज्ञाम्यत्यसंस्मरणेन ते
प्रियसखि सखीहस्तन्यस्तो विलासपरिच्छदः ॥

अत्रायमयमयमिति सर्वनामपरास्यमानया प्रागुपन्यस्तकारणभूतया ततोऽन्वया वा तथाविधयार्थैकावल्या परिच्छद इति कर्तृकारकमभिन्नार्थ इव परिक्रियते। सेयमर्थैकावली परिकरस्यैव भेदः ॥

उभयैकावली यथा,—

अस्मा तुपत्रति न मया न स्नुषया सापि नान्यया न मया।
अहमपि न तया न तया वद राजन् कस्य दोषोऽयम् ॥

अत्रास्मास्नुषास्मदर्थलक्षणैरर्थैस्तद्वाचिभिः सर्वनामभिः शब्दैरेकावली-क्रमेण मिथोऽनुस्यूतैः मिथोऽनुस्यूत एव तुपत्रतीति क्रियाहेतु-मर्थैस्तादिभिः परिक्रियते। सेयमुभयग्रथितत्वादुभयैकावली परिकर-स्यैव भेदः ॥

क्रियाजातिगुणद्रव्यवाचिनैकत्र वर्तिना।
सर्ववाक्योपकारश्चेद्दीपकं तन्निगद्यते ॥ ७७ ॥
अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरावली।
संपुटं रशना माला चक्रवालञ्च तद्भिदाः ॥ ७८ ॥

तेषु क्रियावाचिना आदिदीपकं यथा,—

चरन्ति चतुरम्भोधिवेलोद्यानेषु दन्तिनः।
चक्रवालाद्रिकुञ्जेषु कुन्दभासो गुणाश्च ते ॥

अत्र चरन्तीति क्रियया द्वयोरपि वाक्ययोरादिपदस्थयैवोपकारः क्रियत

इत्यादिदीपकमिदं क्रियाविषयमुच्यते। एवं मध्यान्तयोरपि द्रष्टव्यम्।

जातिवाचिना आदिदीपकं यथा,—

पवनो दक्षिणः पर्णं जीर्णं हरति वीरुधाम्।
स एव च नताङ्गीनां मानभङ्गाय कल्पते॥

अत्र पवन इत्यादिपादे जातिपदं तेनादिदीपकमिदं जातिविषयमुच्यते। एवं मध्यान्तयोरपि द्रष्टव्यम्॥

गुणवाचिना आदिदीपकं यथा,—

श्यामलाः प्रावृषेण्याभि र्दिशो जीमूतपङ्क्तिभिः।
भुवश्च सुकुमाराभि र्नवशाद्वलराजिभिः॥

अत्र श्यामला इत्यादिपादे गुणपदं तेनादिदीपकमिदं गुणविषयमुच्यते। एवं मध्यान्तयोरपि द्रष्टव्यम्॥

द्रव्यवाचिना आदिदीपकं यथा,—

विष्णुना विक्रमस्थेन दानवानां विभूतयः।
क्वापि नीताः कुतोऽप्यासन्नानीता देवतर्द्धयः।

अत्र विष्णुनेत्यादि पादे द्रव्यपदं तेनादिदीपकमिदं द्रव्यविषयमुच्यते। एवं मध्यान्तयोरपि द्रष्टव्यम्॥

अर्थावृत्ति र्यथा,—

हृष्यति चूतेषु चिरं तुष्यति वकुलेषु मोदते मरुति।
इह हि मधौ कलकूजिषु पिकेषु च प्रीयते कामी॥

अत्र हृष्यति तुष्यति मोदते प्रीयत इत्येतैः पदैः स एवार्थ आवर्त्यमानः सर्ववाक्यानि दीपयति सेयमर्थावृत्ति र्दीपकस्य भेदः।

पदावृत्ति र्यथा,—

उत्कण्ठयति मेघानां माला वृन्दं कलापिनाम्।
यूनामुत्कण्ठयत्यद्य मानसं मकरध्वजः॥

अत्रोद्ग्रीवं करोति उत्कण्ठावन्तं करोतीत्यर्थयोरुत्कण्ठयतीति पदमावर्त्यमानं वाक्यद्वयमपि दीपयति सेयं पदावृत्ति र्दीपकस्य

भेदः ॥ उभयावृत्तिर्यथा,—

जय देव भुवनभावन जय भगवन् निखिलवरद निगमनिधे ।
जय रुचिरचन्द्रशेखर जय मदनान्तक जयादिगुरो ॥

अत्र जयेत्यर्थः शब्दश्चावर्तमानः सर्ववाक्यानि दीपयति सेयमुभयावृत्ति दीपकस्य भेदः ॥ आवली यथा,—

त्वमर्क स्त्वं सोम स्त्वमसि पवन स्त्वं हुतवह-
स्त्वमाप स्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च ।
परिच्छिन्नामेवं त्वयि परिणता बिभ्रति गिरम्
न विद्मस्तत्तत्त्वं वयमिह हि यत्त्वं न भवसि ॥

अत्र पूर्वार्धे त्वमिति शब्दार्थयोः प्रथमावृत्तिः प्रथमपादस्यया असीति क्रियया दीप्यते। ततस्तृतीयपादे त्वयीति रूपान्तरेण युष्मदर्थ आवर्तमानः क्रियान्तरेण संबध्यते। चतुर्थपादेषु पुनरपि तेनैव रूपेणार्थेन भवतिना संबध्यत इति। सेयं इत्तीनामावृत्तिरावलीति दीपकस्यैव भेदो भवति ॥ संपुटं यथा,—

णवपल्लवेसु लोलइ घोलइ विडवेसु चलइ सिहरेसु ।
थवइ थवएसु चलणे वसन्तलच्छी असोअस्स ॥

अत्र नवपल्लवेष्वित्यादीन्यशोकस्येति लोलतीत्यादीनि वसन्तलक्ष्मीरिति पदे द्रव्यवाचिनी संपुटक्रमेण मिथः संबध्यमाने मिथः संबद्धान्येव दीपयतः । तदेतत् संपुटं नाम दीपकस्य भेदः ॥ रसना यथा,—

सलिलं विकाशिकमलं कमलानि सुगन्धिमधुसमृद्धानि ।
मधु लीनालिकुलाकुलमलिकुलमपि मधुररणितमिह ॥

अत्र रसनाक्रमेण मिथः संग्रथितानि सलिलं विकाशिकमलमित्यादीनि वाक्यानि इहेत्यन्तस्थितेनाधिकरणवाचिना द्रव्यदीपकेन दीप्यन्ते तदेतद् रसनादीपकं नामादिदीपकभेदः ॥ माला यथा,—

इमिणा सरएण ससी ससिणा वि णिसा णिसाइ कुमुअवणं ।
कुमुअवणेण अ पुलिणं पुलिणेण अ सोहइ हंसउलं ॥

अत्र मालाक्रमेण ग्रथिताः कर्तारो हेतवश्च शशिप्रभृतयः शोभन्त इति क्रियया दीप्यन्ते तदेतन्मालादीपकं नाम दीपकस्य भेदः ॥ कः पुनरस्य पूर्वस्मादिशेषः पूर्वत्र छिन्नच्छिन्नं रसनायां सर्वत्र इह तु स्वतन्त्रं मालापुष्पवत् पदं पदेन गुज्यमानं क्रियादिभिः संबध्यत इति ततोऽयं भिद्यते ॥ चक्रवालं यथा,—

संग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत् समासादितम्।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलम्
तेन त्वं भवता च कीर्त्तिरतुला कीर्त्त्या च लोकत्रयम् ॥

अत्र संग्रामाङ्गणमागतेन भवता चापे समारोपित इति भावलक्षणाच्छिन्नस्य भावविशेषस्य द्वितीयपादे कारकवीप्सया यत् संक्षेपेणाभिभिधानं तदेतच्चक्रवालाकृत्यैव मालादीपकेन विस्तरवता वेष्टितमिदं चक्रवालं नाम दीपकस्य भेदः ॥

शब्दस्य यदि वार्थस्य द्वयोरप्यनयोरथ।
भणनं परिपाट्या यत् क्रमः स परिकीर्त्तितः ॥ ७८ ॥

तत्र शब्दपरिपाटि द्विधा पदतो वाक्यतश्च। तयोराद्या यथा,—

तस्याः प्रगल्भलीलाभिरालापस्मितदृष्टिभिः।
जीयन्ते वल्लकीकुन्दस्रगिन्दीवरसम्पदः ॥

अत्रालापस्मितदृष्टिभिः पदार्थैर्वल्लकीकुन्दस्रगिन्दीवरसम्पदः पदार्था जीयन्त इति शब्दपरिपाट्या भणनं सेयं पदतः शब्दपरिपाटिः क्रमः ॥ वाक्यतो यथा,—

इन्दुर्मूर्द्धि शिवस्य शैलदुहितुर्वक्त्रो नखाङ्कः स्तने
देयाद्वोऽभ्युदयं द्वयं तदुपमामालम्बमानं मिथः।
संवादः प्रणयेन यस्य लसता कार्यैकतायां तयो-
रूर्द्ध्वाधरविचिन्तितेन च हृदि ध्यातस्वरूपेण च ॥

अत्रेन्दुर्मूर्द्धि शिवस्य शैलदुहितुर्वक्त्रो नखाङ्कः स्तन इति वाक्यार्थ-

वाचिनौ शब्दसमुदायौ क्रमेणोद्दारविचिन्तितेन च हृदि ध्यातस्वरूपेण चेति वाक्यार्थद्वयवाचिभ्यां शब्दसमुदायाभ्यां संबध्येते सोऽयं वाक्यतः शब्दपरिपाटिः क्रमः । अर्थपरिपाटि द्विधा कालतो देशतश्च ॥ तयोराद्या यथा,—

हस्ते लीलाकमलमलकं बालकुन्दानुविद्धम्
नीता लोध्रप्रसवरजसा पाण्डुतामानने श्रीः ।
चूडापाशे नवकुरवकं चारु कर्णे शिरीषम्
सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम् ॥

अत्र हस्ते लीलाकमलमलकं बालकुन्दानुविद्धमित्यत्रार्थानां शरदादिकालक्रमेण भणनं सेयं कालतोऽर्थपरिपाटिः क्रमः ॥ द्वितीया यथा,—

पायाद्वो रचितत्रिविक्रमतनु र्देवः स दैत्यान्तको
यस्याकस्मिकवर्धमानवपुषस्तिग्मद्युतेर्मण्डलम् ।
मौलौ रत्नरुचि श्रुतौ परिलसत्ताडङ्ककान्ति क्रमा-
ज्जातं वक्षसि कौस्तुभाभमुदरे नाभीसरोजोपमम् ॥

अत्र त्रिविक्रमतनो र्वैकुण्ठस्य प्रवृद्धिसमये क्रमेणैव मौलिश्रुतिवक्षउदरलक्षणेषु शरीरदेशेषु भास्वन्मण्डलस्य चूडारत्नताडङ्ककौस्तुभनाभ्यब्जे र्योऽयमौपम्यलाभः सेयं देशतोऽर्थपरिपाटिः क्रमः ॥ उभयपरिपाटिर्द्विधा शब्दप्रधानाऽर्थप्रधाना च ॥ तयोराद्या यथा,—

पङ्कम्म पङ्किव हेलिग्र कुवलम्र चित्तउ दहहि
बलिहि विम्बविविक्खिम्र पत्तिम्र चन्दु णहहि ।
करणम्रणाहरवम्रणेहि सं इत्र लीलाव्वइहि
णिम्रसिव्वि विउच्चिट्ठ ठिणाइ प्रम्रावइहि ॥

अत्र पङ्कजकुवलयबिम्बीफलचन्द्रमसां करनयनाधरवदनै र्यथासंख्यं पराजय इति शब्दपरिपाट्यैव पङ्कजानि पङ्के न्यस्तानि, कुवलयानि ह्रदे क्षिप्तानि, बिम्बं दन्ते प्रकीर्णं, चन्द्रो नभसि निरस्त इत्यधाराणामुपर्युपरिभावः क्रियाणां च त्यागतारतम्यमित्यर्थपरिपाटि र्नत्रभवति

सोऽयं शब्दप्रधानोभयपरिपाटिः क्रमः ॥ अर्थप्रधाना यथा,—

गङ्गे देवि दृशा पुनीहि यमुने मातः पुन र्दर्शनम्
सम्प्रश्नोऽस्तु पितः प्रयाग भगवन् न्यग्रोध मां धास्यसि ।
त्वं हारासिलतावत संविपुलस्थूलांसवक्षोभुजम्
पुंभावं भवतामवन्तिनगरीनाथं दिदृक्षामहे ॥

अत्र गङ्गायमुनाप्रयागन्यग्रोधसत्पुंभावावन्तिनगरीनाथलक्षणानामर्थानां मुख्यक्रमेण देवि दृशा पुनीहि मातः पुनर्दर्शनं पितः संप्रश्नो भगवन् मां धास्यसीति मुख्यक्रमेणैव संभ्रमङ्गि र्वचोविशेषैरभ्यर्थ्यत्र भवतामेव पुंभावमवन्तिनगरीनाथं दिदृक्षामह इति येयमभ्यर्थनाभङ्गिस्तार्थपरिपाटिः कृता तस्याश्च गङ्गे यमुने प्रयाग न्यग्रोधेति हारासिलतावत संविपुलवक्षःस्थूलांसेति च शब्दपरिपाटी परस्परमुपमानोपमेयभूते व्यग्भवतः । सेयमर्थप्रधानोभयपरिपाटिः क्रमः ॥

मिषं यदुक्तिभङ्गि र्योवसरो यः स सूरिभिः ।
निराकाङ्क्षोऽथ साकाङ्क्षः पर्याय इति गीयते ॥ ८० ॥

तेषु निराकाङ्क्षं मिषं यथा,—

मया विमुक्ता बहिरेव वल्लकी व्रणेदवश्यायकणैश्च सार्द्रताम् ।
द्रुतं तदेनां करवै निचोलके कयाचिदेवं मिषतो विनिर्ययै ॥

अत्र कयाचिदेवं मिषतो विनिर्यय इत्युत्तरार्द्धाभिधानेनाकाङ्क्षा निरास्तेति निराकाङ्क्षमेतन्मिषं नाम पर्यायभेदः ॥ तदेव साकाङ्क्षं यथा,—

दृशत्यसौ परभृतः सहकारस्य मञ्जरीम् ।
तमहं वारयिष्यामि युवाभ्यां स्वैरमास्यताम् ॥

अत्र कयाचिदेवं मिषतो विनिर्यय इतिवदुत्तरार्द्धानभिधानात् साकाङ्क्षमेतन्मिषं नाम पर्यायस्य भेदः ॥ निराकाङ्क्षोक्तिभङ्गि र्यथा,—

राजन् राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे भोजय मां कुमार सचिवै र्नाद्यापि किं भुज्यते ।
इत्थं नाथ शुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-

चित्रस्थानवलोक्य येषमवलम्बोर्ध्वं कैकमाभाषते ॥

अत्रानयोक्तिभङ्ग्या शून्योक्तारिनगरस्य नरपतेः कश्चित् प्रतापं वर्णयति । तत्र वाक्यस्यापरिपूर्णत्वेन निराकाङ्क्षत्वात् निराकाङ्क्षेयमुक्तिभङ्गिः ॥ साकाङ्क्षा यथा,—

पान्त्वेव वोऽस्तु कपालदाम जगतां पत्युर्य यदीया लिपिम्
क्वापि क्वापि गणाः पठन्ति पदशो नातिप्रसिद्धाक्षराम् ।
विश्वं स्रक्ष्यति वक्ष्यति क्षितिमपाम्पतिर्भविष्यते क्षिप्यते
नागैराशिषु रंस्यतेऽत्स्यति जगन्निर्वेक्ष्यति द्यामिति ॥

अत्रानयोक्तिभङ्ग्या ब्रह्माद्यस्तसमयेऽप्यनस्तमितस्य भगवतो महेश्वरस्य प्रभावो वर्ण्यते । तत्र च यदीयां लिपिं क्वापि क्वापि गणाः पठन्ति पदशो नातिप्रसिद्धाक्षरामित्यनेनैव वाक्येनाभिन्नाकाङ्क्षोत्थाप्यते । सा च विश्वं स्रक्ष्यतीत्यस्मिन्नीदृशो ब्रह्मणाश्च चतुर्युगसहस्रान्तं दिनमेकमिति मानेनैव वर्षशतजीवी विश्वं स्रक्ष्यति ब्रह्मेति ज्ञाप्यते कपालश्चात्र भगवतो भूषणं भविष्यतीति । वक्ष्यति क्षितिमित्यस्मिन्नीदृशो ब्रह्मणामयं वर्षशतैनैकं दिनमिति मानेनैव पुरुषायुषजीवी क्षितिं वक्ष्यति विष्णुरिति ज्ञाप्यते कपालश्चात्र भगवतो भूषा भविष्यतीति । एवमपाम्पतिर्भविष्यत इत्यादिषु वरुणकामयमेन्द्रविषयत्वेन योजनीयम् । सेयमनेकप्रकारेण ब्रह्मादीनां साक्षादभिधानेन साकाङ्क्षोक्तिभङ्गिः ॥ अवसरो निराकाङ्क्षो यथा,—

अथ तैः परिदेविताक्षरैर्हृदये दिग्धशरैरिवार्दितः ।
रतिमभ्युपपत्तुमातुरां मधुरात्मानमदर्शयत् पुरः ॥

अत्र, क्व नु ते हृदयङ्गमः सखा कुसुमायोजितकार्मुको मधुः ।
न खलूग्ररुषा पिनाकिना गमितः सोऽपि सुहृद्गतां गतिम् ॥

इति यानि रतेः परिदेविताक्षराणि तैरासन्नहृदयस्य मधोर्यो यमात्मदर्शनाय प्रस्तावः सोऽयं न किञ्चन काङ्क्षतीति निराकाङ्क्षोऽयमवसर. पर्यायस्य भेदः ॥ साकाङ्क्षो यथा,—

अज्ज वि बालो दामोअरो त्ति इअ जम्पिए जसोआए।
कण्हमुहपेसिअच्छं णिहुअं हसिअं वअवहूए॥

अत्राद्यापि बालो दामोदर इति स्तनप्रस्तावनस्य कृष्णस्य वक्त्रे विन्यस्तलोचनया तद्रहस्यवेदिन्या व्रजवधूमतल्लिकया यदेतन्निभृतं हसितं तत् तवाम्बा बालं त्वां ब्रूते त्वं तु मादृशाभि निधुवन-विदग्धाभि दिवानिशं यमुनाकुञ्जोदरेषु विहरसीत्यादिनार्थजातेन साकाङ्क्षमिति साकाङ्क्षोऽयमवसरः पर्यायस्तत्र भेदः॥

विवक्षा या विशेषस्य लोकसीमातिवर्तिनी।
असावतिशयोक्तिः स्यादलङ्कारोत्तमा च सा॥ ८१॥
सा च प्रायो गुणानाञ्च क्रियाणाञ्चोपकल्पते।
न हि द्रव्यस्य जाते र्वा भवत्यतिशयः क्वचित्॥ ८२॥
प्रभावातिशयो यश्च यश्चानुभवनात्मकः।
अन्योन्यातिशयो यश्च तेऽपि नातिशयात् पृथक्॥ ८३॥
अलङ्कारान्तराणामप्येकमाहुः परायणम्।
वागीशमहितामुक्तिमिमामतिशयाह्वयाम्॥

तत्र गुणातिशयेन महत्त्वातिशयो यथा,—

अहो विशालं भूपाल भुवनत्रितयोदरम्।
माति मातुमशक्योऽपि यशोराशि र्यदत्र ते॥

अत्रैवं यशोराशेरशक्यमानस्याप्यतिशयोक्त्या विशेषविवक्षा येन त्रिभुवनोदरमपि सङ्कीर्णमाशङ्क्यते। सोऽयं महत्त्वातिशयो नामातिशय-भेदः॥ तनुत्वातिशयो यथा,—

स्तनयो र्जघनस्यापि मध्ये मध्यं प्रिये तव।
अस्ति नास्तीति सन्देहो न मेऽद्यापि निवर्तते॥

अत्रैवं मध्यस्य लोकसीमातिक्रमेण तानवातिशयविवक्षा येन दृश्यते नास्तीति वा संदिह्यते। सोऽयं तनुत्वातिशयो नामातिशयभेदः॥ कान्त्यतिशयो यथा,—

मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः ।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥

अत्रैवं चन्द्रालोकस्य लोकसीमातिक्रमेण बाहुल्योत्कर्षविवक्षा येन तस्मिन् समानाभिहारेणाभिसारिका अपि न लक्ष्यन्ते । सोऽयं कान्त्यतिशयो नामातिशयभेदः ॥ अथात्र पिहितात् को विशेष उच्यते, पिहिते चन्द्रातपोत्कर्षेणाभिसारिकातिरस्कारो विवक्ष्यते इह त्वभिसारिकातिरस्कारेण चन्द्रातपोत्कर्ष इति ॥ प्रभावातिशयो यथा,—

तं दइआहिण्णाणं जम्मि वि अंगम्मि राहवेण णिमिअं ।
सीआपरिमट्ठेण व ऊढो तेण वि णिरन्तरं रोमञ्चो ॥

अत्र दयिताभिज्ञानस्य योऽयं रोमाञ्चक्रियाविशेषः स क्रियातिशयस्यैव भेदः प्रभावातिशय उच्यते ॥ अनुभावातिशयो यथा,—

विमलिअरसाअलेण वि विसहरवइणा अदिट्ठमूलच्छेअं ।
अप्पत्ततुङ्गसिहरं तिहुअणहरणपवड्ढिएण वि हरिणा ॥

अत्र रसातलमपि मृद्नता शेषेणापि च यस्य मूलं न दृष्टं त्रिभुवनमप्याक्रमता हरिणापि न तुङ्गशिखराणि प्राप्तानीति यदेतल्लोकसीमातिक्रमेण विशेषप्रवक्तया पर्वतानुभावभणनं सोऽयमनुभूयमानमाहात्म्यातिशयस्यैव भेदोऽनुभावातिशय उच्यते ॥ अन्योन्यातिशयो यथा,—

रणदुज्जओ दहमुहो सुरा अवज्झा अ तिहुअणस्स इमे ।
पडइ अ चलोत्ति फुडं विहीसणेण फुडिआहरं णीससिअं ॥

अत्र दशास्यः समरे न जीयते सुराश्चामरत्वान् न वध्यन्ते । तयोश्च परस्परं संघट्टक्रियातिशयात् त्रिभुवनमपि क्षयं यास्यतीति येयमन्योन्यातिक्रियातिशयभणनाल्लोकसीमातिक्रमेण विशेषविवक्षा सोऽयं क्रियातिशयो नामातिशय एवान्योन्यातिशय उच्यते ॥

श्लेषोऽनेकार्थकथनं पदेनैकेन कथ्यते ।
पदक्रियाकारकैः सभाङ्गिकाभिन्नैः स षड्विधः ॥ ८४ ॥

तेषु भिन्नपदो यथा,—

दोषाकरेण संबध्नन् नक्षत्रपथवर्तिना।

राज्ञा प्रदोषो मामित्थमप्रियं किं न बाधते॥

अत्र प्रदोषो रात्रेः प्रथमः यामः किमिति प्रियारहितं मां न बाधते इत्युक्ते युक्तिमाह इत्थमनुभूयमानेन प्रकारेण राज्ञा संबध्नन् कीदृशेन दोषाकरेण नक्षत्रपथवर्तिनेति। यो हि दोषाणामाकरेण राजमार्गातिगामिना च राज्ञा प्रसृष्टदोषः संबध्यते सोऽप्रियमवश्यं बाधत एव। तदत्र पूर्वस्मिन् प्राकरणिकेऽर्थे द्वितीयोऽर्थोऽप्राकरणिकः पदभेदेनोपश्लिष्यमाणो भिन्नपदश्लेषापदेशमासादयति॥ अभिन्नपदो यथा,—

असावुदयमारूढः कान्तिमान् रक्तमण्डलः।

राजा हरति लोकस्य हृदयं मृदुभिः करैः॥

अत्रायमुदीयमानश्चन्द्रमा लोकस्य हृदयं हरतीत्युक्ते युक्तिमाह राजानुरक्तमण्डल उदयी मृदुकरः कान्तिमानिति। यो ह्येवंभूतो राजा सोऽवश्यं लोकस्य हृदयहारी भवति॥ अत्रापि च प्राकरणिकेऽर्थेऽप्राकरणिक उपश्लिष्यमाणः पदानामभेदेनाभिन्नपदश्लेषो भवति॥ भिन्नक्रियो यथा,—

मधुरा रागवर्धिन्यः कोमलाः कोकिलागिरः।

आकर्ण्यन्ते मदकलाः श्लिष्यन्ते चासितेक्षणाः॥

अत्राकर्ण्यन्ते श्लिष्यन्ते चेति क्रियापदद्वितयस्य प्राधान्यतः समुच्चयेनोपात्तस्य मधुरा इत्यादिभिः श्लिष्टपदैः कोकिलागिर इत्यसितेक्षणा इति वा विशेष्यैकवर्जं पर्यायतः सम्बन्धो भवति। तद्यथा आकर्ण्यन्ते काः कोकिलागिरः कीदृश्यः मधुराः रागवर्धिन्यः कोमलाः। पुनरपि किम्भूताः आसितेक्षणाः आसिते उपवेशिते निश्चलीकृते अन्तःप्रमोदानुभावादीक्षणे याभिस्तास्तथा सर्वोऽपि हि मधुरं शब्दमाकर्णयन् निश्चलाक्षो भवति। श्लिष्यन्ते च काः असितेक्षणाः हरिणचक्षुषः किम्भूताः मदकलाः कोकिलागिरः कोमलाः रागवर्धिन्यो मधुरा इति। सोऽयं द्वयोर्विभिन्नक्रिययोर्भिन्नार्थैकरूपाणां पदार्था-

नानुपश्लेषो भिन्नक्रियः श्लेष उच्यते ॥ अभिन्नक्रियो यथा,—

स्वभावमधुराः स्निग्धाः शंसन्त्यो रागमुल्वणम् ।

दृशा दूतश्च कर्षन्ति कान्ताभिः प्रेषिताः प्रियान् ॥

अत्र कर्षन्तीत्येतस्यां क्रियायां दृशां दूतीनाञ्च श्लिष्टपदत्वेनावेशा-दयमभिन्नक्रियो नाम श्लेषविशेषः । प्रथमयोरस्य वा को विशेष इति चेत् तत्रैकस्यैव प्राकरणिकत्वमत्र तु द्वयोरपीति । अयञ्च भिन्नकारकयोरपि भवति । भिन्नकारको यथा,—

गतिं वेणी च नागेन वपुरूरू च रम्भया ।

ओष्ठौ पाणी प्रवालेन तस्यास्तुल्यत्वमाययुः ॥

अत्रैकस्मिन् पक्षे धर्मधर्मिणोरभेदोपचारान्नागमसि गृह्यते । तत्र गते-र्वेण्याश्च नागेन हस्तिना अहिना च तुल्यत्वं वपुरूर्वोश्च रम्भया कदल्या अप्सरोभिश्च तुल्यत्वमोष्ठयोः पाण्योश्च प्रवाले विद्रुमे नवपल्लवे च वर्णनी-दयोः श्लेषप्रभावाल्लभ्यते । सोऽयमनेककर्तृकत्वाद्भिन्नकारक इति श्लेषो भवति ॥ अभिन्नकारको यथा,—

कृष्णार्जुनानुरक्तापि दृष्टिः कर्णावलम्बिनी ।

याति विश्वसनीयत्वं कस्य ते कलभाषिणि ॥

अत्र हे कलभाषिणि कस्य ते दृष्टिर्विश्वासस्था भवति इत्युक्ते युक्ति-माह कृष्णार्जुनानुरक्तापि कर्णावलम्बिनीति यां हि कृष्णार्जुनेनानु-रज्यते कथं सा कर्णपक्षपातिनी भवति या चैवमुभयगता तस्यां को विश्वसिति स चायमेककर्तृकत्वादभिन्नकारक इति श्लेषो भवति ॥

स्वाभिप्रायस्य कथनं यदि वाप्यन्यभावना ।

अन्यापदेशो वा यस्तु त्रिविधं भाविकं विदुः ॥ ८५ ॥

मतो चाप्याकसूद्भेदो विद्यते नैव भाविकात् ।

व्यक्ताव्यक्तोभयाख्याभिस्त्रिविधः सोऽपि कथ्यते ॥ ८६ ॥

तत्र भाविकभेदेषु स्वाभिप्रायकथनं यथा,—

जा विज्जइ दुग्गेज्झिआ दिव्वम्मि जम्मि भिउड़िआ

अत्थ अव्वाहारओ विग्घइआ इसन्तए।
विच्छुड्ड आहिज्जिए जस्स ण सो वअंसिआ
तं मे कहज्ज माणअ जइ मे इच्छञ्ज जीअअं॥

अत्र भ्रूक्षेपात् सम्भाषणप्रियतमावचेपणरूपान् मतत्रनभिमतप्रतिपादन-रूपस्तत्राभिप्रायस्तत्र कथितत्वादिदं स्वाभिप्रायकथनं नाम भाविकम्॥ अन्यभावना यथा,—

दंसणवलिअं ददङ्कं णिबन्धणं दीहरं सुपरिणाहं।
होइ ह घरे साहीणं मुसलं धण्णाणं महिलाणं॥

अत्र मे इति भावनया मुसलरूपस्त्रीक्तत्वादिदमन्यभावनाभिधानं भाविकम्॥ अन्यापदेशो यथा,—

आसाइअं रअणा एणविन्तिअं विअ विहीण ओरं।
मसुवसहएण्हिं रक्खि वज्जइ गहवइ छेत्तं॥

अत्र परचेतस्त्र वलारदपनिवारणापदेशेन चिरात् परिज्ञात उपपति-र्वार्यते तदिदमन्यापदेशाख्यं भाविकम्॥ उद्भेदेषु व्यक्तो यथा,—

मन्तेसि मङ्कमहपणअं सदा पोसि तिअ सेसपाअवरआणं।
ओजस्स सुक्खसहावं सभावेसु सुरणाह आवअलोअं॥

अत्र मायाविनो महेन्द्रस्याभिप्रायः सत्यकेन व्यक्तमेवोद्भिन्न इति व्यक्तोऽयमुद्भेदः॥ अव्यक्तो यथा,—

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमा
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्॥

अत्र वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकमित्याक्षेपवक्ता प्राकरणिकोदाहरणेन यद्यपि दूत्या दुश्चेष्टितं निर्भिन्नं तथापि न पूर्ववदरक्तमित्यव्यक्तोऽयमुद्भेदः॥ उभयरूपो यथा,—

अम्लानोत्पलकोमले सखि दृशौ नीलाञ्जनेनाञ्चिते

कर्पूरच्छुरणाञ्च गण्डफलके संदेहितः पाणिना।
श्वासाः सन्तु च मन्दकम्पमिथुनः किन्तु प्रभाविना-
मज्ञानां कृत्रिमानमुल्कटमसुं को नाम नोत्प्रेक्षते॥

अत्र दृशो म्लानता गण्डयोः पाण्डुत्वं श्वासानां दैर्घ्यमितुत्कण्ठा-चिह्ननिह्नवाय योऽयमविनयवत्या नीलाञ्जनादिप्रयोगस्तस्य तत्त्वाभ्युपगमेऽप्यज्ञानां कृत्रिमानमुल्कटमसुं को नाम नोत्प्रेक्षत इति योऽयं सखीव्याहारस्तेन तदभिप्राय उद्भिन्नोऽनुद्भिन्नश्च भवतीत्युभयरूपोऽयमुद्भेदः॥ तेऽमी त्रयोऽप्युद्भेदा भाविकान्न भिद्यन्ते॥

संसृष्टिरिति विज्ञेया सर्वालङ्कारसङ्करः।
सा तु व्यक्ता तथाऽव्यक्ता व्यक्ताव्यक्तेति च त्रिधा॥ ८७॥
तिलतण्डुलवद्व्यक्ता छायादर्शवदेव च।
अव्यक्ता क्षीरजलवत् पांशुपानीयवच्च सा॥ ८८॥
व्यक्ताव्यक्ता च संसृष्टि र्नरसिंहवदिष्यते।
चित्रवर्णवदन्यस्मिन्नानालङ्कारसङ्करे॥ ८९॥

व्यक्ता तिलतण्डुलवद् यथा,—

पिनष्टीव तरङ्गाग्रैरुदधिः फेनचन्दनम्।
तदादाय करैरिन्दुः लिम्पतीव दिगङ्गनाः॥

अत्रोत्प्रेक्षाद्वयं रूपकद्वयञ्च तिलतण्डुलवत् संकीर्यते॥ व्यक्तैव छायादर्शवद् यथा,—

निर्मलेन्दु नभो रेजे विकचाब्जं बभौ सरः।
परं पर्यश्रुवदनौ म्लानतु भ्रातरावुभौ॥

अत्रादर्शच्छायेव हेत्वलङ्कारे रामलक्ष्मणमुखयोरिन्दुपद्मोपमेयन संसृष्टासंसृष्टव्यतिरेको दृश्यते॥ अव्यक्ता क्षीरजलवद् यथा,—

क्षीरक्षालितचन्द्रेव नीलीधौताम्बरेव च।
टङ्कोल्लिखितसूर्येव वसन्तश्रीरदृश्यत॥

अत्रोपमोत्प्रेक्षे क्षीरनीरवन्मिश्रे संसृष्टे न व्यज्येते॥

अव्यक्तैव पांसूदकवद् यथा,—

कृष्णार्जुनानुरक्तापि दृष्टिः कर्णावलम्बिनी।
याति विश्वसनीयत्वं कस्य ते कलभाषिणि॥

अत्र पांसूदकयोरिव कृष्णित्वे श्लेषविरोधयोरव्यक्तयोरेव व्याजस्तुतावङ्गभावोऽवगम्यते॥ व्यक्ताव्यक्ता नरसिंहवद् यथा,—

रजोभिस्तुरगोत्कीर्णैर्गजैश्च घनसन्निभैः।
भुवस्तलमिव व्योम कुर्वन् व्योमेव भूतलम्॥

अत्र नरसिंहजातावित्र सिंहनरशरीरभागयोः परिष्कृतालङ्कारयोर्रूपमयोरङ्गभावो व्यक्ताव्यक्तरूपः परिस्फुरन्नुपलभ्यते॥

व्यक्तावयवैव चित्रवर्णवद् यथा,—

मयूरारावमुखरां प्राप्य सतडिच्छ्रियाम्।
महाटवीमिवोत्तङ्गां तोयानि मुमुचुर्घनाः॥

अत्र पटावयवस्थानां नीलादीनामिव पटावयव्याश्रिते चित्रवर्णे श्लेषरूपकोपमार्थश्लेषाणां पदपदार्थाश्रयाणां शरद्वर्णनवाक्याश्रयिणि समाधालङ्कारे व्यक्ताव्यक्तरूपोऽङ्गाङ्गिभावः प्रतीयते॥

चतुर्विंशतिरित्येताः क्रमेणोभयसंश्रयाः।
काव्यालङ्कृतयः प्रोक्ता यथावदुपमादयः॥ २४॥

इति श्री महाराजाधिराजश्रीभोजदेवविरचिते सरस्वतीकण्ठाभरणे
उभयालङ्कारविवेचनो नाम चतुर्थः परिच्छेदः॥

---

रसोऽभिमानोऽहङ्कारः शृङ्गार इति गीयते।
योऽर्थस्तस्यान्वयात् काव्यं कमनीयत्वमश्नुते॥ १॥
विशिष्टादृष्टजन्मायं जन्मिनामन्तरात्मसु।
आत्मसम्यग् गुणोद्भूतेरेको हेतुः प्रकाशते॥ २॥

शृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत् ।
स एव चेदशृङ्गारी नीरसं सर्वमेव तत् ॥ ३ ॥
पश्यति श्रोति वाक्येऽत्र हि न रसः प्रतिभासते ।
विलोकयति कान्तेति व्यक्तमेव प्रतीयते ॥ ४ ॥
कन्ये कामयमानं मां त्वं न कामयसे कथम् ।
इति ग्राम्योऽयमर्थात्मा वैरस्यायैव कल्पते ॥ ५ ॥
कामं कन्दर्पचाण्डालो मयि वामाक्षि निर्दयः ।
त्वयि निर्मत्सरो दिष्ट्येत्यग्राम्योऽर्थो रसावहः ॥ ६ ॥
नवोऽर्थः सूक्तिरग्राम्या श्लाघ्यो बन्धः स्फुटा श्रुतिः ।
अलौकिकार्थयुक्तिश्च रसमाहर्तुमीशते ॥ ७ ॥
वक्रोक्तिश्च रसोक्तिश्च स्वभावोक्तिश्च वाङ्मयम् ।
सर्वासु ग्राहिणी तासु रसोक्तिं प्रतिजानते ॥ ८ ॥
भावो जन्मानुबन्धोऽथ निष्पत्तिः पुष्टिसङ्करौ ।
ह्रासाभासौ शमः शेषो विशेषः परिपोषवान् ॥ ९ ॥
विप्रलम्भोऽथ सम्भोगस्तच्चेष्टास्तत्परीष्टयः ।
निरुक्तयः प्रकीर्णानि प्रेमाणः प्रेमपुष्टयः ॥ १० ॥
नायिका नायकगुणाः पाकाद्याः प्रेमभक्तयः ।
नानालङ्कारसंसृष्टेः प्रकाराश्च रसोक्तयः ॥ ११ ॥
चतुर्विंशतिरित्युक्ता रसान्वयविभूतयः ।
स्वरूपमासां यो वेद स काव्यं कर्तुमर्हति ॥ १२ ॥
आलम्बनविभावेभ्यः स्वेभ्यः स्वेभ्यः समुन्मिषन् ।
रसो रत्यादिरूपेण भाव इत्यभिधीयते ॥ १३ ॥
रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चाष्टौ स्थायिभावाः प्रकीर्तिताः ॥ १४ ॥
स्तम्भस्तनूरुहोद्भेदो गद्गदः स्वेदवेपथू ।
वैवर्ण्यमश्रुप्रलयावित्यष्टौ सात्त्विका मताः ॥ १५ ॥

स्मृति र्वितर्कश्चोत्कण्ठा चिन्ता चपलता मतिः।
गर्वः स्नेहो धृति र्व्रीडाऽवहित्थं मूढ़ता मदः॥ १६॥
हर्षामर्षावसूयेर्ष्या विषादो दैन्यमुग्रता।
त्रासः शङ्का गदो ग्लानिरुन्मादः सम्भ्रमः श्रमः॥ १७॥
निर्वेदो जाड्यमालस्यं निद्रा सुप्तं प्रबुद्धता।
इति भावास्त्रयस्त्रिंशदमीज्ञेया व्यभिचारिणः॥ १८॥
चिरं चित्तेऽवतिष्ठन्ते सम्बध्यन्तेऽनुबन्धिभिः।
रसत्वं प्रतिपद्यन्ते प्रवृद्धाः स्थायिनोऽत्र ते॥ १९॥
रजस्तमोभ्यामस्पृष्टं मनः सत्वमिहोच्यते।
निर्वृत्तयेऽस्य तद्योगात् प्रभवन्तीति सात्विकाः॥ २०॥
विशेषेणाभितः काये स्थायिनं चारयन्ति ये।
अनुभावादिहेतूंस्तान् वदन्ति व्यभिचारिणः॥ २१॥
जनित्वा ये न जायन्ते तेऽत्र वा व्यभिचारिणः।
स्मृत्यादयो हि प्रेमादौ भवन्ति न भवन्ति च॥ २२॥
रतौ सञ्चारिणः सर्वान् गर्वस्नेहौ धृतिं मतिम्।
स्थायिनूनेकोनत्रिंशः प्रान्तोदात्तेषु जानते॥ २३॥
संस्कारपाटवादिभ्योऽनुभावं वा निजाश्रये।
सञ्चारिणं वा जनयन् सात्विकं वा स जायते॥ २४॥
उद्दीपनविभावेभ्यः स्मृतिहेतौ पटीयसि।
अनुबन्धोऽनुभावादेरनुबन्धः स कथ्यते॥ २५॥
*विभावस्यानुभावस्य सात्विकव्यभिचारिणोः।*
संयोगे तस्य निष्पत्तिमात्रं निष्पत्तिरिष्यते॥ २६॥
विषयाश्रयसंस्कारगुणप्रकृतिपाटवैः।
दीपनातिशयैश्चास्य प्रकर्षः पुष्टिरुच्यते॥ २७॥
तुल्यकालबलोत्पत्तिहेतौ भावान्तरोदये।
संसर्गस्तस्य यस्तेन सङ्करः स निगद्यते॥ २८॥

रसान्तरतिरस्काराद्न्यद्रागाद्य तत्र यः ।
भवतत्प्रचयो ह्रष्टे स्तह्रास तं प्रचक्षते ॥ २९ ॥
हीनपात्रे षु तिर्यक्षु नायकप्रतियोगिषु ।
गौणेष्वेव पदार्थेषु तमाभास विजानते ॥ ३० ॥
बलवत्सूपजाते षु प्रतिकूलेषु हेतुषु ।
सर्वात्मना समुच्छेद: प्रशमस्तस्य वर्ण्यते ॥ ३१ ॥
आश्रयात् प्रच्युते वीपि संस्कारस्थैर्यतोऽपि वा ।
योऽस्यात्यन्तमविच्छेद: स शेष इति शब्द्यते ॥ ३२ ॥
शृङ्गाराद्या रसा ये च ये च शान्तोद्धतादयः ।
ये च रत्यादिभेदास्तान् विशेषानस्य मन्वते ॥ ३३ ॥
विभावश्चानुभावश्च सञ्चारी वाश्रयश्च यः ।
ये च लीलादयो यूनां परिपोष: स कीर्त्यते ॥ ३४ ॥
आश्रयो यस्य रत्यादि: प्रेमादेरुपजायते ।
विषयो यत्र योषादौ सोऽस्य जन्माधिगच्छति ॥ ३५ ॥
आलम्बनविभाव: स ज्ञानकारणमुच्यते ।
तेनादरादिरूपेण संस्कारस्तेन जायते ॥ ३६ ॥
अन्यत: पटुरभ्यस्त आश्रयादे गु णेन स: ।
तत्प्रबोधाय माल्यतु चन्दनेन्दूदयादय: ॥ ३७ ॥
उद्दीपनविभावास्ते स तै: स्मरति वाञ्छति ।
द्वेष्टि प्रयतते ऽवैति मन्यते वक्ति चेष्टते ॥ ३८ ॥
तेऽनुभावास्तदा ये स्तुः स्वेदरोमोद्गमादय: ।
हर्षामर्षादयो ये च ज्ञेया: सञ्चारिणोऽत्र ते ॥ ३९ ॥
स्मृतीच्छायत्नजन्मानो मनोवाक्कायसंश्रया: ।
विलासा ये वरस्त्रीणां ज्ञेया लीलादयस्तु ते ॥ ४० ॥
लीला विलासो विच्छित्ति र्विभ्रम: किलकिञ्चितम् ।
मोट्टायितं कुट्टमितं विब्बोको ललितं तथा ॥ ४१ ॥

विहृतं क्रीड़ितं केलिरिति स्त्रीणां स्वभावजाः ।
हेलादयाश्चान्ये ज्ञेयाः स्त्रीपुंसयोरपि ॥ ४२ ॥
उपसङ्ख्यानमेतेषामनुभावेषु मन्यते ।
पश्चाद्भावानुभूतिभ्यां स्मरणादनुभाववत् ॥ ४३ ॥
स्मृत्यादयोऽनुभावाश्च भावाः सञ्चारिणश्च ये ।
नाट्येऽनुक्रियमाणा ते नटैरभिनयाः स्मृताः ॥ ४४ ॥
भावो यदा रतिर्नाम प्रकर्षमधिगच्छति ।
नाधिगच्छति चाभीष्टं विप्रलम्भस्तदोच्यते ॥ ४५ ॥
पूर्वानुरागो मानश्च प्रवासः करुणश्च सः ।
पुरुषस्त्रीप्रकाण्डेषु चतुःकाण्डः प्रकाशते ॥ ४६ ॥
प्रागसंकेतयो र्यूनोरभिलाषः प्रवर्त्तते ।
संकल्परमणीयोऽनुरागः स प्राचय उच्यते ॥ ४७ ॥
अहेरिव गतिः प्रेम्णः स्वभावकुटिलेति सः ।
अहेतो र्मति नेतुरक्तो र्हतो वा मान उच्यते ॥ ४८ ॥
देशान्तरादिभि र्यूनो र्व्यवधानं चिराय यत् ।
नूढेऽनुरागे प्रौढे वा प्रवासः सोऽभिधीयते ॥ ४९ ॥
लोकान्तरगते यत्र वल्लभे वल्लभा यदा ।
भृशं दुःखायते दीना करुणः स तदोच्यते ॥ ५० ॥
रतिरेवैष्टसंप्राप्तौ पुष्टः सम्भोग उच्यते ।
सोऽपि पूर्वानुरागादेरानन्तर्याच्चतुर्विधः ॥ ५१ ॥
न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते ।
कषायिते हि वस्त्रादौ भूयान् रागोऽनुपजायते ॥ ५२ ॥
स्त्रीपुंसयो र्विप्रलम्भे वैचित्र्याकल्पनादयः ।
चेष्टाविशेषाः सम्भोगे चुम्बनालिङ्गनादयः ॥ ५३ ॥
विप्रलम्भेऽभियोगाद्यैः सम्भोगे साध्वसादिभिः ।
मिथः परीक्षा याः प्रेम्णो निर्दिष्टास्ताः परीष्टयः ॥ ५४ ॥

विप्रलम्भादिशब्दानां लोकसिद्धेषु वस्तुषु ।
प्रकृत्यादिविभागेन विनिवेशो निरुच्यते ॥ ५५ ॥
संश्रुत्य विप्रलम्भार्थान् गृधिवञ्चयोः प्रलम्भने ।
इत्यादिव्यापकाज्ज्ञेयः प्रपूर्वो वञ्चने लभिः ॥ ५६ ॥
आदानञ्च प्रतिश्रुत्य विसंवादनमेव च ।
कालस्य हरणं चाहुः प्रतप्रादानञ्च वञ्चनम् ॥ ५७ ॥
पूर्वानुरागपूर्वेषु विप्रलम्भेषु तत्क्रमात् ।
विशेषद्योतकेनेह व्युपसर्गेण सूच्यते ॥ ५८ ॥
प्रतिश्रवो हि पूर्वानुरागे वक्रोक्तितादिभिः ।
अभीष्टालिङ्गनादीनामादानं ह्रीभयादिभिः ॥ ५९ ॥
माने निवारणं सेषां विसंवादनमुच्यते ।
अयथावत् प्रदानं वा व्यलीकस्मरणादिभिः ॥ ६० ॥
प्रवासे कालहरणं व्यक्तमेषां प्रतीयते ।
प्रोष्यागते ध्वैतानि कान्ताः कान्तेषु युञ्जते ॥ ६१ ॥
प्रतप्रादानं पुनस्तेषां करुणे को न मन्यते ।
स्वयं दत्तानि हि विधिस्तानि तत्रापकर्षति ॥ ६२ ॥
प्रलम्भे तत्र यदि वा वञ्चनामात्रवाचिनि ।
विना समासे चतुराश्चतुरोऽर्थान् प्रयुञ्जते ॥ ६३ ॥
विविधश्च विरुद्धश्च व्याविद्धश्च क्रमेण सः ।
विनिषिद्धश्च पूर्वानुरागादिषु विपच्यते ॥ ६४ ॥
पूर्वानुरागे विविधं वञ्चनं व्रीडितादिभिः ।
माने विरुद्धं तत् प्राहुः पुनरीर्ष्यायितादिभिः ॥ ६५ ॥
व्याविद्धं दीर्घकालत्वात् प्रवासे तत् प्रतीयते ।
विनिषिद्धस्तु करुणः करुणत्वेन गीयते ॥ ६६ ॥
रागोऽस्तु सह पश्चात्तापरूपोऽप्यनुगतोऽपि वा ।
यूनोरपूर्वः पूर्वानुरागशब्देन शब्द्यते ॥ ६७ ॥

राजते रज्यते वापि रागः करणभावयोः।
घञन्यत्कारके भावे नलोपेन नियम्यते ॥ ६८ ॥
मान्यते प्रेयसा येन यं प्रियत्वेन मन्यते।
मनुते वा मिमीते वा प्रेमभानः स कथ्यते ॥ ६९ ॥
महाभाष्यकृतः कोऽसावनुमान इति स्मृतेः।
लुडन्तोऽपि न पुंलिङ्गो मानशब्दः प्रयुज्यति ॥ ७० ॥
यत्राङ्गना युवानश्च वसते न वसन्ति च।
स प्रवासः प्रशब्देन प्रतीपार्थेन कथ्यते ॥७१ ॥
चिन्तोत्कण्ठादिभिर्चेतो भृशं वासयतीव यः।
प्रवासयति वा यूनः स प्रवासो निरुच्यते ॥७२ ॥
प्रपूर्वको वसि र्ज्ञेयः कारितान्तःप्रमापणे।
तूष्णीं प्रवासयेदेनमिति दृष्टानुशासनात् ॥ ७३ ॥
अभूतोत्पादनायां च्वि दृष्टः कुरु घटं यथा।
दृष्टश्चोच्चारणे चोरंकारमाक्रोशतीतिवत् ॥ ७४ ॥
दृष्टोऽवस्थापनेऽश्मानमितः कुरु यथोच्यते।
प्रत्यञ्जनेऽपि च यथा पादौ मे सर्पिषा कुरु ॥ ७५ ॥
मूर्च्छाविलापौ कुरुते कुरुते साहसे मनः।
करोति दुःखं चित्तेन योऽसौ करुण उच्यते॥ ७६ ॥
भुजिः पालनकौटिल्याभ्यवहारानुभूमिषु।
भुनक्ति भुग्नो भुङ्क्तेऽन्नं भुङ्क्ते सुखमितीष्यते ॥ ७७ ॥
समीचीनार्थः संपूर्वस्तितो घञ्प्रत्यये सति।
भावे वा कारके वापि रूपं सम्भोग इष्यते ॥ ७८ ॥
स पालनार्थः पूर्वानुरागानन्तर उच्यते।
यत्प्रेमा हि रतिस्तस्मिन्नानुकूल्येन पाल्यते ॥ ७९ ॥
स मानानन्तरं प्राप्तः कौटिल्यार्थे विगाह्यते।
स्वतोऽपि कुटिलं प्रेम किमु मानाश्रये सति ॥ ८० ॥

प्रवासानन्तरे तस्याव्यवहारार्थतेष्यते ।
तत्र ह्युपोषितैरन्नमिव निर्विश्यते रतिः ॥ ८१ ॥
करुणानन्तरगतोऽनुभावार्थः स कथ्यते ।
विश्रम्भवद्भिरस्मिन् हि सुखमेवानुभूयते ॥ ८२ ॥
यदि वा भोग इत्यस्य संप्रयोगार्थवाचिनः ।
सता समासे चतुराश्चतुरोऽर्थान् प्रचक्षते ॥ ८३ ॥
स संक्षिप्तोऽथ सङ्कीर्णः सम्पूर्णः सम्यगृद्धिमान् ।
अनन्तरोपदिष्टेषु सम्भोगेषूपपद्यते ॥ ८४ ॥
नवे हि सङ्गमे प्रायो युवानः साध्वसादिभिः ।
संक्षिप्तानेव रत्यर्थमुपचारान् प्रयुञ्जते ॥ ८५ ॥
मानस्यानन्तरे तेषां व्यलीककरणादिभिः ।
रोषशेषानुसन्धानात् सङ्करः केन वार्यते ॥ ८६ ॥
सम्पूर्णः पूर्णकामानां कामिनां प्रोष्य सङ्गमे ।
उत्कण्ठितानां भूयिष्ठमुपभोगः प्रवर्तते ॥ ८७ ॥
प्रत्यागतेऽपि यत्रैषा रतिपुष्टिः प्रयोजने ।
सा किमावर्ण्यते यूनां तत्रैव मृतजीविते ॥ ८८ ॥
पूर्वानुरागपूर्वाणां व्युत्पत्तिभिरुदाहृतः ।
अनन्तराणां सर्वेषां तत्समासे निरुक्तयः ॥ ८९ ॥
हस्तिशालाजहत्स्वार्था जहत्स्वार्थापि वर्त्तताम् ।
प्रधानमनुपस्कृत्य न तदर्थो निवर्त्तते ॥ ९० ॥
प्रथमानन्तरे ह्यस्यैरजहत्स्वार्थतेष्यते ।
नात्यन्तमजहत्स्वार्थां तां मानानन्तरे विदुः ॥ ९१
प्रवासानन्तरे त्वीषदजहत्स्वार्थतेष्यते ।
करुणार्थस्त्र गन्धोऽपि नास्त्येव तदनन्तरे ॥ ९२ ॥
अष्टमीचन्द्रकः कुन्दचतुर्थी सुवसन्तकः ।
आन्दोलनचतुर्थ्येकशाल्मली मदनोत्सवः ॥ ९३ ॥

उदकक्ष्वेड़िकाऽशोकोत्तंसिका चूतभञ्जिका।
पुष्पावचायिका चूतलतिका भूतमातृका ॥ ९४ ॥
कादम्बयुद्धानि नवपत्रिका बिसखादिका।
शक्रार्चा कौमुदी यात्रा त्रिरभुत्रपखादिका ॥ ९५ ॥
नवेक्षुभक्षिका तोयक्रीड़ाप्रेक्षादिदर्शनम्।
द्यूतानि मधुपानञ्च प्रकीर्णानीति जानते ॥ ९६ ॥
नितरो नैमित्तिकश्चान्यः सामान्योऽन्यो विशेषवान्।
प्रच्छन्नोऽन्यः प्रकाशोऽन्यः कृत्रिमाकृत्रिमावुभौ ॥ ९७ ॥
सहजाहार्यनामानौ परौ यौवनजोऽपरः।
विस्रम्भजश्च प्रेमाणो द्वादशैते महर्द्धयः ॥ ९८ ॥
चक्षुःप्रीतिर्मनःसङ्गः सङ्कल्पोत्पत्तिसन्ततिः।
प्रलापो जागरः कार्श्यमरतिर्विषयान्तरे ॥ ९९ ॥
लज्जाविसर्जनं व्याधिरुन्मादो मूर्च्छनं मृतः।
मरणञ्चेति विज्ञेयाः क्रमेण प्रेमपुष्टयः ॥ १०० ॥
नायकः प्रतिपूर्वोऽयमुपपूर्वोऽनुनायकः।
नायिका प्रतिपूर्वाऽसावुपपूर्वानुनायिका ॥ १०१ ॥
नायिकानायकाभासावुभयाभास इत्यपि।
तिर्यक्षु च तदाभासा इति द्वादश नायकाः ॥ १०२ ॥
तेषु सर्वगुणोपेतः कथाव्यापी च नायकः।
अन्यायवांस्तदुच्छेद्य उद्धतः प्रतिनायकः ॥ १०४ ॥
ततः कैश्चिद्गुणैर्हीनः पुजश्चैवोपनायकः।
समो न्यूनोऽपि वा तस्य कनीयाननुनायकः ॥ १०५ ॥
स्यात् कथाव्यापिनी सर्वगुणयुक्ता च नायिका।
हेतुरीर्ष्याविषादीनां सपत्नी प्रतिनायिका ॥ १०६ ॥
ततः कैश्चिद्गुणैर्हीना पूजरा चैवोपनायिका।
समा न्यूनापि वा किञ्चित् कनीयस्यनुनायिका ॥ १०७ ॥

तदाभासास्तथैव स्युर्भेदास्तेषां गुणादिभिः ।
नायकस्तत्र गुणत उत्तमो मध्यमोऽधमः ॥ १०८ ॥
प्रकृतः सात्त्विकः स स्याद्राजसस्तामसस्तथा ।
साधारणोऽनन्यजानिः स विज्ञेयः परिग्रहात् ॥ १०९ ॥
उद्धतो ललितः शान्तः उदात्तो धैर्यवृत्तितः ।
शठो धृष्टोऽनुकूलश्च दक्षिणश्च प्रवृत्तितः ॥ ११० ॥
गुणतो नायिकापि स्यादुत्तमा मध्यमाधमा ।
मुग्धा मध्या प्रगल्भा च वयसा कौशलेन च ॥ १११ ॥
धीराधीरा च धैर्येण स्वान्यदीया परिग्रहात् ।
ऊढानूढोपयमनात् क्रमाज्ज्येष्ठा कनीयसी ॥ ११२ ॥
मानर्द्धेरुद्धतोदात्ता शान्ता च ललिता च सा ।
सामान्या च पुनर्भूश्च स्वैरिणी चेति वृत्तितः ॥ ११३ ॥
आजीवतस्तु गणिका रूपाजीवा विलासिनी ।
अवस्थातोऽपराश्चाष्टौ विज्ञेयाः खण्डितादयः ॥ ११४ ॥
निद्राकुषिततान्ताचो नारीनखविभूषितः ।
प्रातरेति प्रियो यस्याः कुतश्चित् खण्डिता तु सा ॥ ११५ ॥
चाटुकारमपि प्राणनाथं कोपादपास्य या ।
पश्चात् तापमवाप्नोति कलहान्तरिता तु सा ॥ ११६ ॥
दूतीमहरहः प्रेष्य स्वत्वा सङ्केतकं क्वचित् ।
यस्या न मिलितः प्रेयान् विप्रलब्धेति तां विदुः ॥ ११७ ॥
सा तु वासकसज्जा स्यात् सज्जिते वासवेश्मनि ।
प्रियमास्तीर्णपर्यङ्के भूषिता या प्रतीक्षते ॥ ११८ ॥
स्वाधीनपतिका सा तु यस्याः पार्श्वं न मुञ्चति ।
प्रियश्चित्ररतक्रीडासुखास्वादनलोलुपः ॥ ११९ ॥
पुष्पेषुपीडिता कान्तं याति या साभिसारिका ।
प्रियो देशान्तरे यस्याः सा तु प्रोषितभर्तृका ॥ ॥ १२० ॥

यस्याः समुचितेऽप्यङ्कि प्रवासी नैति वल्लभः ।
विरहोत्कण्ठिता सा तु द्वात्रिंशदिति नायिकाः ॥ १२१ ॥
हीनपात्राणि शेषाणि पीठमर्दो विदूषकः ।
विटचेटौ पताकाश्च सख्यश्चैषां परिग्रहः ॥ १२२ ॥
महाकुलीनतौदार्यं महाभाग्यं कृतज्ञता ।
रूपयौवनवैदग्ध्यशीलसौभाग्यसम्पदः ॥ १२३ ॥
मानितोदारवाक्यत्वमदरिद्रानुरागिता ।
द्वादशेति गुणानाहु र्नायकेष्वाभिगामिकान् ॥ १२४ ॥
मृद्वीकानारिकेराम्रपाकाद्याः पाकभक्तयः ।
नीलीकुसुम्भमञ्जिष्ठारागाद्या रागभक्तयः ॥ १२५ ॥
अन्तर्व्याजबहिर्व्याजनिर्व्याजा व्याजभक्तयः ।
धर्मार्थकामोदर्काश्च प्रेमसम्पर्कभक्तयः ॥ १२६ ॥
वाक्यवच्च प्रबन्धेषु रसालङ्कारसङ्करान् ।
निवेशयन्त्यनौचित्यपरिहारेण सूरयः ॥ १२७ ॥
चतुर्वृत्त्यङ्गसम्पन्नं चतुरोदात्तनायकम् ।
चतुर्वर्गफलं को न प्रबन्धं बान्धवीयति ॥ १२८ ॥
मुखं प्रतिमुखं गर्भोऽवमर्शश्च मनीषिभिः ।
स्मृता निर्वहणञ्चेति प्रबन्धे पञ्च सन्धयः ॥ १२९ ॥
अविस्तृतमसङ्क्षिप्तं श्रव्यवृत्तं सुसन्धि च ।
भिन्नसर्गान्तवृत्तञ्च काव्यं लोकोऽभिनन्दति ॥ १३० ॥
पुरोपवनराष्ट्रादिसमुद्राश्रमवर्णनैः ।
देशसम्पत्प्रबन्धस्य रसोत्कर्षाय कल्पते ॥ १३१ ॥
चतुरात्रिन्दिवार्केन्दूदयास्तमयवर्णनैः ।
कालः काव्येषु सम्पन्नो रसपुष्टिं नियच्छति ॥ १३२ ॥
राजकन्याकुमारस्त्रीसेनासेनाङ्गभङ्गिभिः ।
पात्राणां वर्णनात् काव्ये रसस्रोतोऽधितिष्ठति ॥ १३३ ॥

उद्यानसलिलक्रीडामधुपानरतोत्सवाः ।
विप्रलम्भा विवाहाश्च चेष्टाः काव्येऽ रसावहाः ॥ १३४ ॥
मन्त्रदूतप्रयाणाजिनायकाभ्युदयादिभिः ।
पुष्टिः पुरुषकारस्य रसं काव्येषु वर्षति ॥ १३५ ॥
नावर्णनं नगर्यादे र्दोषाय विदुषां मतम् ।
यदि शैलर्त्तुरात्र्यादे वर्णनेनैव पुष्यति ॥ १३६ ॥
गुणतः प्रागुपन्यस्य नायकं तेन विद्विषाम् ।
निराकरणमित्येष मार्गः प्रकृतिसुन्दरः ॥ १३७ ॥
वंशवृत्तश्रुतादीनि वर्णयित्वा रिपोरपि ।
तज्जयान्नायकोत्कर्षकथनञ्च धिनोति नः ॥ १३८ ॥

अथैषां लक्षणोदाहरणानि ।

मनोऽनुकूलेष्वर्थेषु सुखसंवेदनं रतिः ।
असंप्रयोगविषया सैव प्रीति र्निगद्यते ॥ १३९ ॥

तद्रूपेण रसस्य भावो यथा,—

हरस्तु किञ्चित्परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥

अत्र बिम्बोष्ठत्वादिभि र्मनोऽनुकूले पार्वतीमुखे विलोचनव्यापारानुमितो महेश्वरस्याभिलापविशेषः सात्त्विको रंतुप्रत्यादान सुखानुभवस्योत्पत्तिमात्रमनुमापयति । तद्रूपेणैव सात्त्विकोत्पत्तौ जन्म यथा,—

आभूदरः कण्टकितप्रकोष्ठः स्विन्नाङ्गुलिः संववृते कुमारी ।
तस्मिन् द्वये तत्क्षणमात्मवृत्तिः समं विभक्तेव मनोभवेन ॥

अत्र स्वेदरोमोद्गमयोः सात्त्विकयोरुत्पादाद्रसस्य रतिरूपेणाविर्भावोऽवगम्यते । अत्रैव सत्त्वाद्युत्पत्तौ यथा,—

तयोरपाङ्गप्रतिसारितानि क्रियासमापत्तिनिवर्तितानि ।
ह्रीयन्त्रणामानशिरे मनोज्ञामन्योन्यलोलानि विलोचनानि ॥

अत्र ह्रीः सञ्चारिभावो जायमानो रसस्य जन्म ज्ञापयति ॥ तदेवा-

सुभयोत्पत्तौ जना यथा,—

तत: सुनन्दावचनावसाने लज्जां मृदूकृतत्र नरेन्द्रकन्या ।
दृष्ट्या प्रसादामलया कुमारं प्रतत्रग्रहीत् संवरणस्त्रजेव ॥

अत्र दृष्टिलक्षण: शरीरारम्भोऽनुभावो भवन् रसाविर्भावं लक्षयति ॥ अनुभावादेरनेकस्यैकस्य वा पुनरुत्पत्तिरनुबन्ध: ॥ सोऽनेकस्य यथा,—

विवृन्वती शैलसुतापि भावमङ्गै: स्फुरद्बालकदम्बकल्पै: ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥

अत्र देव्या: स्मरारौ पूर्वमुत्पन्ना रति: साभिलाषतदवलोकनेन विविक्तवसन्तादिभिरुद्दीप्यमाना रोमाञ्चावहित्थलक्षणाभ्यां सात्त्विकव्यभिचारिभ्यामनुबध्यते ॥ एकस्यैव पुन: पुनरुत्पत्तिर्यथा,—

यान्त्या मुहुर्वलितकन्धरमाननं त-
दावृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्ष: ॥

अत्र मालत्या माधवविषये पूर्वमुत्पन्ना रतिर्वसन्तावतारतत्सन्निधिविश्रम्भदर्शनादिभिरुद्दीप्यमाना पुन: पुनरुत्पन्नेन वलितग्रीवकटाक्षविक्षेपलक्षणेन शरीरारम्भानुभावेनानुबध्यते । अत्रैव माधवस्य मालतीविषये तद्वदेवोत्पन्ना रतिस्तैरेवोद्दीपनैरुद्दीप्यमाना हर्षधृतिस्मृतिमतिव्याध्यादिभि: सञ्चारिभावैर्वागारम्भेण चानुभावेनानुबध्यते ॥ रतिरूपेणैव रसनिष्पत्तिर्यथा,—

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
र्निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धु:
शैलाधिराजतनया न ययौ न तस्थौ ॥

अत्र जन्मान्तरानुभवसंस्कारात् प्रतिकूलेऽपि शूलिनि शैलकन्याया: सर्वकालमेवाविच्छिन्ना रतिश्चिरं वियुक्तस्य दूरदेशादि तपसा प्रार्थ-

द्वारम्भानुभावेन संसृज्यमाना परं प्रकर्षमारोहतीति प्रतीयते॥
रतौ भयादिसङ्करो यथा,—

राहोश्चन्द्रकलामिवाननचरीं दैवात् समासाद्य मे
दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम्।
आतङ्काद्विकलं द्रुतं करुणया विक्षोभितं विस्मयात्
क्रोधेन ज्वलितं मुदा विकसितं चेतः कथं वर्त्तताम्॥

अत्र माधवस्य मालत्यां पूर्वमुत्पन्ना रतिस्तदवस्थालोकनादिभिरुद्दीपनविभावैरुद्दीप्यमाना भयशोकविस्मयक्रोधहर्षैरपि रसान्तरैः पृथक् पृथग्विभावानुभावव्यभिचारिसंयोगान्निष्पद्यमानैः सङ्कीर्यमाणा मनोवाग्बुद्धिशरीरारम्भानुभावैर्भयाद्यनुरूपैश्च सात्विकव्यभिचारिभिः सम्पर्कं परं प्रकर्षमारोहन्ती प्रतीयते। तत्र चेतसो वैकल्यादिपरिभावनं मनआरम्भो वाक्योच्चारणं वागारम्भः राहोरिव दस्योश्चन्द्रकलामिव प्रेयसीमित्यादिबुद्ध्यारम्भः आच्छिन्दत इत्यादि शरीरारम्भः भयादीनाञ्च पञ्चानामपि यथाक्रमं राहोरिति चन्द्रकलामिवाननचरीमिति दैवात् समासाद्य म इति दस्योरस्य कृपाणपातविषयादिति आच्छिन्दतः प्रेयसीमित्यालम्बनविभावास्तत्स्वरूपपरिभावनाद्युद्दीपनविभावाः, विकलं द्रुतं विक्षोभितं ज्वलितं विकसितं चेत इत्यनुभावाः, आतङ्ककरुणाविस्मयक्रोधमुदनुरूपाश्च कम्पाश्रुस्तम्भवैवर्ण्यरोमाञ्चादयः सात्विकाः, मोहविषादामर्षौग्रताधृत्यादयो व्यभिचारिणश्चानुमीयमाना निष्पत्तिहेतवो भवन्ति। सोऽयं तुल्यकालवलोत्पत्तिकारणानां भयादिनिष्पत्तीनां रतौ संसर्गः सङ्कर इत्युच्यते।
रतिरूपेण रसप्रकर्षस्य ह्रासो यथा,—

कोपो यत्र भ्रुकुटिरचना निग्रहो यत्र मौनम्
यत्रान्योन्यस्मितमनुनयो दृष्टिपातः प्रसादः।
तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातम्
त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः॥

अत्र योषिति रोषाख्यरसान्तरतिरस्कारात् पुरुषे चानुरागाद्वतिप्रकर्षेऽत्र ह्रासोऽवगम्यते ॥ रतिरूपेण हीनपात्रेषु रसाभासो यथा,—

विक्किणइ माहमासम्मि पामरो पारणं बइल्लेण ।
दिट्ठिं स मुम्मुरे सामलीए थणए णिअच्छन्तो ॥

तिर्यक्षु यथा,—

पाअपडिअं सोहग्गं तंबाएउ वसहगोट्ठमज्झम्मि ।
दुट्ठवसहस्स सिङ्गे अच्छिउडं कण्डुअन्तीए ॥

नायकप्रतियोगिषु यथा,—

पुलअं जणंति दहकन्धरस्स राहवसरा सरीरम्मि ।
जणअसुआफंसमहग्घविअं करअला अङ्गाइं विमुक्का ॥

गौणेषु यथा,—

उण्णमइ णवतिणंकुररोमञ्चपसाहिआइँ अङ्गाइं ।
पाउसलच्छीए पओहरेहिं पडिवेल्लिओ विंझो ॥

त एते चत्वारोऽपि रसाभासा उच्यन्ते । रत्यादेः लज्जारोपरूपरसान्तरयोः प्रथमो यथा,—

दृष्टे लोचनवन्मनाङ्मुकुलितं पार्श्वस्थिते वक्त्रवन्न्यग्भूतं बहिरासितं पुलकवत् स्पर्शं समातन्वति ।
नीवीबन्धवदागतं शिथिलतामाभाषमाणे ततो मानेनापगतं ह्रियेव सुदृशः पादस्पृशि प्रेयसि ॥

अत्र बलवत्तरां प्रियप्रेमाणुनयाभ्यां ह्रीरोषयोरुपशमः क्रियते । रत्यावेव रोषरूपरसस्य शेषो यथा,—

एकस्मिन्शयने समागतवति विवलितं सम्भाषिणि स्फारितम्
संश्लिष्यत्यरुणं गृहीतवसने कोपाञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे वाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥

अत्र कथञ्चिद्बलवता प्रेम्णोन्मूलितमत्रापि मानस्य शेषोऽनुवर्तते ।

सं एते भावादयो दशापि रसप्रकारा हासादिष्वपि प्रायशो दृश्यन्ते।
ग्रन्थगौरवभयान्न क्वचिदुदाह्रियन्ते॥
तत्र, व्यङ्गक्रीड़ादिभिश्चेतोविकासो हास उच्यते॥ १४० क॥
तद्रूपेण रसस्य भावो यथा,—

कनककलसस्वच्छे राधापयोधरमण्डले
नवजलधरश्यामामात्मद्युतिं प्रतिबिम्बिताम्।
असितसिचयप्रान्तभ्रान्त्या मुहुर्मुहुरुत्क्षिपन्
जयति जनितव्रीड़ाहासः प्रियाहसितो हरिः॥

अत्र राधया व्यञ्जितस्य हरेस्तु व्रीड़ातो हासस्य सत्तामात्रं प्रतीयते॥

शोकश्चित्तस्य वैधुर्यमभीष्टविरहादिभिः॥ १४०॥

तद्रूपेण रसस्य निष्पत्तिर्यथा,—

हृदयान्नापयातोऽसि दिक्षु सर्वासु दृश्यसे।
वत्स राम गतोऽसीति सन्तापादनुमीयसे॥

अत्र दशरथस्य रामवियोगादुत्पन्नस्तद्गुणस्मरणादिभिरुद्दीपितश्चिन्तासन्तापादि वागारम्भेण चानुभूयमानः शोकरूपेण रसो निष्पद्यते॥

प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोध उच्यते॥ १४१ क॥

तद्रूपेण रसस्य निष्पत्तिर्यथा,—

मय्येव मत्सरणदारुणचित्तवृत्तौ दृशं रुः प्रथमप्रतिपद्यमाने।
भेदाद्भ्रुवोः कुटिलयोरतिलोहिताया
भग्नं शरासनमिवातिरुषा स्मरस्य॥

अत्र यद्यपि विभावानुभावसञ्चारिसंयोगलक्षणया रसनिष्पत्तेरधिकन्तिरूपाति लोहिताच्चेति प्रकर्षनिमित्तमतिशब्दोपादानं विद्यते तथापुत्तमनायिकाश्रयः प्रियविषयेन रोषः प्रकर्षमासादयति॥

कार्यारम्भेषु संरम्भः स्थेयानुत्साह इष्यते॥ १४१॥

तद्रूपेण रसस्य जन्म यथा,—

मूर्ध्ना जाम्बवतोऽभिवाद्य चरणावाद्यस्य सेनापती-

नाश्वासप्राप्युमुखान् मुहुः प्रियसखीन् प्रेष्यान् समादिश्य च ।
आरम्भं जगृहे महेन्द्रशिखरादम्भोनिधेर्लङ्घने
रंहस्वी रघुनाथपादरजसामुच्चैः स्मरन् मारुतिः ॥

अत्राभिवादनप्रश्नाश्वासनसमादेशनाद्रिशिखरारोहणेष्टदेवतास्मरणानां पूर्वरङ्गपर्यवसायित्वेनानुद्दीपनविभावत्वादनुत्साहानुभावत्वाच्च नायमनुबन्धो निष्पत्तिः प्रकर्षो वा भवति ॥

भयं चित्तस्य वैक्लव्यं रौद्रादिजनितं विदुः ॥ १४२ क ॥

तद्रूपेण रसस्यानुबन्धो यथा,—

मन्त्रान् स्तुतरजितो जयद्भिरसकृद् ध्यायद्भिरिष्टान् सुरान्
शुष्यत्तालुभिराकुलाकुलपदैर्निर्वाभिरुत्कम्पिभिः ।
अध्वन्यैरिह जीवितेशमहिषव्याभून्नधूमाविला
लङ्घ्यन्ते करिमांसघस्मररणत्कौलेयकाः पल्लयः ॥

अत्र यद्यपि पल्लीनामालम्बनत्वं न तद्विशेषणयोरुद्दीपनत्वं मन्त्रजयादेरनुभावत्वं तालुशोषादीनां व्यभिचारित्वमिति विभानुभावव्यभिचारिसंयोगोऽस्ति तथापि मन्त्रजयेष्टदेवताध्यानयोर्लङ्घनोपायपरत्वान्न भयरूपेण रसस्य निष्पत्तिः । अध्वन्यानां हि तन्निष्पत्तौ स्वल्पसत्वतया स्तम्भमोहमूर्च्छामरणादिभिरुपायप्रयोगो न घटते ॥

जुगुप्सा गर्हणार्थानां दोषसन्दर्शनादिभिः ॥ १४२ ॥

तद्रूपेण रसस्यानुगमो यथा,—

रे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम् ।
रामस्य गात्रमसि निर्भरगर्भखिन्न-
सीताप्रवासनपटोः करुणा कुतस्ते ॥

अत्र यद्यपि द्विजशिशोर्जीवनाय मुनिरपि शूद्रो वध्य इति न रामस्यात्मकर्मनिन्दा तथाप्यनयकारिणं जिघांसतो घृणा प्रवर्तत इति सीतापरित्यागविषयत्वेनैवात्र जुगुप्सानुगमो ग्रहीतव्यः । अत्र कविविषये

पुनरस्य जन्ममात्रमेवेति ॥

विस्मयश्चित्तविस्तारः पदार्थातिशयादिभिः ॥ १४२ क ॥

तद्रूपेण रसस्य जन्म यथा,—

कृष्णेनाम्ब गतेन रन्तुमधुना मृद्भक्षिता स्वेच्छया
सत्यं कृष्ण क एवमाह मुसली मिथ्याम्ब पश्याननम्।
व्यादेहीति विदारिते तु वदने दृष्ट्वा समस्तं जगन्-
माता यस्य जगाम विस्मयवशं पायात् स वः केशवः ॥

अत्र शिशोर्मुखे जगद्दर्शनमालम्बनविभावः। सत्यामसत्यमैश्वर्यादा-लोकनमुद्दीपनविभावः। विस्मयवशं जगामेत्यनेनानुपात्ता अपि सञ्चारिणोऽनुभावाश्च गृह्यन्ते ॥

स्तम्भश्चेष्टाप्रतीघातो भयरागामयादिभिः ॥ १४३ ॥

तद्रूपेण रसस्य पुष्टिर्यथा,—

तं ताणं हअच्छाअं णिच्चललोअणसिहं पलत्थपआवं।
आलेक्खपईवाण व णिअअं पअइ चडुलत्तणं पि विअलिअं ॥

अयञ्च पुष्टोऽपि सात्त्विकत्वात् सदैवान्यानुयायीति नानुभावादिभि-रनुबध्यते ॥

हर्षाद्भुतभयादिभ्यो रोमाञ्चो रोमविक्रिया ॥ १४४ क ॥

तद्रूपेण रसस्य जन्म यथा,—

करिमरिअआलगज्जिरजलआसणिपडिरवो एसो।
पइणो धणुरवकाङ्खिणि रोमञ्चं किं मुहा वहसि ॥

अस्यापि सात्त्विकत्वादन्यानुबन्धादयो न भवन्ति ॥

मदप्रमदपीडादेर्वैस्वर्यं गद्गदं विदुः ॥ १४५ ॥

तद्रूपेण रसस्य निष्पत्तिर्यथा,—

पि पि प्रिय स स स्वयं मु मु मुखासवं देहि मे
त त त्यज दु दु द्रुतं भ भ भ भाजनं काञ्चनम्।
इति स्खलितजल्पितं मदवशात् कुरङ्गीदृशः

प्रगे हसितहेतवे सहचरीभिरध्यैयत ॥

अयमपि सात्त्विकत्वान् निष्पन्नो नान्यैरनुबध्यते ॥

वपुर्जलोद्गमः स्वेदो रतिघर्मश्रमादिभिः ॥ १४५ क ॥

तद्रूपेण रसस्य जन्म यथा,—

हिमव्यपायाद्विशदाधराणामापाण्डरीभूतमुखच्छवीनाम् ।
स्वेदोद्गमः किम्पुरुषाङ्गनानां चक्रे पदं पत्रविशेषकेषु ॥

अत्रापि पूर्ववदन्यानुषङ्गो न भवति ॥

रागरोषभयादिभ्यः कम्पो गात्रस्य वेपथुः ॥ १४५ ॥

तद्रूपेण रसस्य जन्म यथा,—

मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति ।
अन्यापि किं न सखि भाजनमीदृशीनाम्
वैरी न चेद्भवति वेपथुरन्तरायः ॥

अयमपि प्राग्वदेव नानैरनुगम्यते ॥

विषादमदरोषाद्यैर्वर्णान्यत्वं विवर्णता ॥ १४६ क ॥

तद्रूपेण रसस्य निष्पत्तिर्यथा,—

सहि सा हसु तेण समं अहं पि किं णिग्गआपह अम्मि ।
असव्विअ दीसइ जेण दप्पणे कावि सा सुमुही ॥

अयमपि नानैरनुबध्यते ॥

अश्रुनेत्रोद्भवं वारि दुःखशोकप्रहर्षजम् ॥ १४६ ॥

तद्रूपेण रसस्यानुबन्धो यथा,—

उत्पक्ष्मणो नयनयोरुपरुद्धवृत्तिम्
बाष्पं कुरु स्थिरतया श्लथितानुबन्धम् ।
अस्मिन्नलक्षितनतोन्नतभूविभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥

अत्र बाष्पशब्देन लोचनाश्रयमश्रूच्यते, न कण्ठाद्याश्रयो दुःखावेगो

यथा,—विललाप स बाष्पगद्गदम्॥

मुकुलैन: कण्ठे तरलयति बाष्प: स्तनतटीमिति॥

प्रलयस्तीव्रदुःखादेरिन्द्रियास्तमयो मत:॥ १४७ क॥

तद्रूपेण रसस्य निष्पत्ति यथा,—

तीव्राभिषङ्गप्रभवेण दृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम्।

अज्ञातभर्तृव्यसना मुहूर्त्तं कृतोपकारेव रति र्बभूव॥

अत्र मोहशब्देन मूर्च्छोच्यते न वध्यमाणलक्षणो मोह:॥

स्मृति: पूर्वानुभूतार्थविषयं ज्ञानमुच्यते॥ १४७॥

तद्रूपेण रसस्यानुबन्धो यथा,—

इत: प्रत्यादेशात् स्वजनमनुगन्तुं व्यवसिता

स्थिता तिष्ठेत्युच्चै र्वदति गुरुशिष्ये गुरुसमे।

पुन र्दृष्टिं बाष्पप्रकरकलुषामर्पितवती

मयि क्रूरे यत् तत् सविषमिव शल्यं दहति माम्॥

अत्र सविशेषा स्मृतिरिच्छया वागारम्भेण चानुबध्यते॥ तिष्ठेत्यादय: पुनरस्या रत्यादिनिष्पत्तिष्वेव द्रष्टव्या:। रत्यादयो हि स्मृतिमूलत्वात्मकसंपर्कमेवानुवर्त्तन्ते॥

ऊहो वितर्क उच्यते: पदार्थेषु यथामति॥ १४८ क॥

तद्रूपेण रसस्य निष्पत्ति यथा,—

चित्ते निवेश्य परिकल्पितसत्त्वयोगा-

द्रूपोच्चयेन घटिता मनसा कृता नु।

स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे

धातु र्विभुत्वमनुचिन्त्य वपुश्च तस्या:॥

सोऽयमसत्य: सत्यो वा स्मृतिध्यानचिन्तनादिद्वारेण निश्चयान्तो निष्पन्न उच्यते॥

उत्कण्ठेष्टानवाप्तौ योऽभिलाष: स्यात्तदाप्तये॥ १४८॥

तद्रूपेण रसस्य निष्पत्तिरुत्कण्ठासौ यथा,—

यासत्यद्य प्रकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
वाष्पस्तम्भितकण्ठवृत्ति वचनं चिन्ताजडं दर्शनम्।
वैक्लव्यं मम तावदीदृशमिदं स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः॥

अत्र विभावानुभावव्यभिचारिसंयोगात् प्रीतिरिवोत्कण्ठापि तदनुपङ्गिणी निष्पन्ना उत्तरार्द्धप्रतिपादेन तथाविधेनैव विस्मयादिनाभिभूयमाना ह्रास इत्युच्यते। प्रकर्षश्चास्या ममारण्यौकस इत्यनेन निवार्यते॥

प्रयत्नपूर्विकार्थेषु स्मृतिश्चिन्तेति कथ्यते॥ १४८ क॥

तद्रूपेण रसस्य प्रकर्षो यथा,—

चिन्ता णिअदइअसमागमम्मि कअमण्णुआइ भरिऊण।
सुण्णं कलहाअन्ती सहीहिरुण्णा ण ओहसिआ॥

अत्र सखीरोदनेन शून्यकलहः शून्यकलहेन साक्षात्कारः साक्षात्कारेण चिन्ता चिन्तया तु मूलभूता रतिः प्रकृष्यते॥

आत्मप्रकाशनपरा चेष्टा चपलतोच्यते॥ १४८॥

तद्रूपेण रसस्य जन्म यथा,—

कश्चित् कराभ्यामुपगूढनालमालोलपत्राभिहतद्विरेफम्।
रजोभिरन्तःपरिवेषबन्धि लीलारविन्दं भ्रमयाञ्चकार॥

अत्र लीलारविन्दभ्रमणचेष्टया कश्चिदिन्दुमतीं निष्ठत॥

शास्त्रोक्तार्थानुसन्धानादर्थनिर्धारणं मतिः॥ १५० क॥

तद्रूपेण रसस्यानुबन्धो यथा,—

असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः॥

अत्र पूर्वार्धोक्तार्थनिर्धारणरूपा मतिरुत्तरार्धेनानुबध्यते॥

गर्वोऽन्येषामवज्ञानमात्मसम्भावनादिभिः॥ १५०॥

तद्रूपेण रसस्य पुष्टिर्यथा,—

हतायुधो यावदहं तावदन्यैः किमायुधैः ।
यद्वा न सिद्धमस्त्रेण मम तत् केन सेत्स्यति ॥

अत्र कार्य्यस्यासम्भावनयास्त्रत्यागमन्यवज्ञानं प्रख्यायते ॥

अहेतुरनिवर्त्ती च स्नेहश्चित्तार्द्रता मता ॥ १५१ क ॥

तद्रूपेण रसस्य निष्पत्तिर्यथा,—

अनेन कस्यापि कुलाङ्कुरेण स्पृष्टेषु गात्रेषु सुखं ममैतत् ।
कां निर्वृतिं चेतसि तस्य कुर्याद् यस्यायमङ्गात् कृतिनः प्ररूढः ॥

अत्र दुष्मन्तस्य सर्व्वदमनदर्शनादुत्पन्नसादृश्यस्पर्शसुखादिभिरुद्दीपितः स्पृहामतिवितर्कावागारम्भैः संसृज्यमानः स्नेहो निष्पद्यते ॥

अभीष्टार्थस्य सम्प्राप्तौ स्पृहा*पर्याप्तता धृतिः ॥ १५१ ॥ * पर्याप्तना ।

तद्रूपेण रसप्रकर्षो यथा,—

नीतो विक्रमबाहुरात्मसमतां प्राप्तेयमुर्वीतले
सारं सागरिका ससागरमहीप्राप्त्येकहेतुः प्रिया ।
देवी प्रीतिमुपागता च भगिनी लाभाज्जिताः कोशलाः
किं नास्ति त्वयि सत्यमात्यवृषभे यस्मिन् करोमि स्पृहाम् ॥

अत्र वत्सराजस्य सर्वात्मना मनोरथसिद्धयो धृतेः प्रकर्षमावहन्ति ॥

चेतोनिमीलनं व्रीडा त्वङ्गरागस्तवादिभिः ॥ १५२ क ॥

तद्रूपेण रसप्रकर्षात्क्रोधशोकाभ्यां सङ्करो यथा,—

अक्षुद्रारिकृताभिमन्युनिधनात् संक्रान्ततीव्रक्रुधः
पार्थस्याकृतशात्रवप्रतिकृते रन्तःशुचा मुह्यतः ।
कीर्णा बाष्पकणैः पतन्ति धनुषि व्रीडाजड़ा दृष्टयो
हा वत्सेति गिरः स्फुरन्ति न पुनर्निर्यान्ति कण्ठाद्बहिः ॥

अत्रार्जुनस्यान्यायेनाभिमन्युवधादुद्भूतौ दीप्तावेव क्रोधशोकावुद्भूतविप्रतीकारोत्थया तथाविधयैव व्रीड़या सङ्कीर्यते। तथाहि क्रोधशोकयोरनुभावभूता दृष्टयो वाचश्च व्रीड़ाजड़ा इति विशेषणानि सम्बध्यन्ते।

अवहित्थं तु लज्जादेर्हर्षाद्याकारगोपनम् ॥ १५२ ॥

तद्रूपेण रसस्यानुबन्धो यथा,—

एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीलाकमलपत्राणि गणयामास पार्वती ॥

अत्र प्रणम्य शितिकण्ठाय विबुधास्तदनन्तरम्। चरणौ रञ्जयन्त्वस्याश्चूडामणिमरीचिभिः॥ इत्यादि मुनिवाक्याद्दूरसमर्पाकारो गुरुसन्निधौ लज्जितया लीलाकमलपत्रगणनेन गौर्या गोप्यते ॥

सुखदुःखादिजनितो मोहश्चित्तस्य मूढता ॥ १५३ क ॥

तद्रूपेण रसस्य निष्पत्तिर्यथा,—

कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धनाद्
वासश्च श्लथमेखलागुणधृतं किञ्चिन्नितम्बे स्थितम्।
एतावत् सखि वेद्मि साम्प्रतमहं तस्याङ्गसङ्गे पुनः
कोऽसौ कास्मि रतञ्च किं कथमिति स्वल्पापि मे न स्मृतिः ॥

अत्र स्थायिनी रतिर्मोहनिष्पन्नतया प्रकाश्यते ॥

सम्मोहानन्दसम्भेदो मदिरादिकृतो मदः ॥ १५३ ॥

तद्रूपेण रसस्य निष्पत्तिर्यथा,—

घूर्णमाननयनं स्खलत्कथं स्वेदबिन्दुमदकारणस्मितम्।
आननेन न तु तावदीश्वरश्चक्षुषा चिरमुमामुखं पपौ ॥

अत्र नयनघूर्णनाकारणस्मितादयः सम्मोहानन्दसम्भेदा उद्भवन्तो मदं निष्पादयन्ति ॥

मनःप्रसादो हर्षः स्यादिष्टावाप्तिस्तवादिभिः॥ १५४ क ॥

तद्रूपेण रसस्य प्रकर्षो यथा,—

जातस्य ते पितुरपीन्द्रजितो निहन्तु-
र्वत्सस्य वत्स कति नाम दिनान्यमूनि।
तस्याप्यपत्यमधितिष्ठति वीरधर्मे
दिष्ट्या गतं दशरथस्य कुलं प्रतिष्ठाम् ॥

अत्र दशरथमुद्दिश्य सुमन्त्रसारथेः प्रभुकुलप्रतिष्ठामाशंसतस्तत्सुतमिन्द्र-

जितो हन्तारं पश्यतो मनोरथावाप्त्या हर्षो निष्पन्नस्तदपत्येऽपि वीरधर्माचरिष्णौ प्रकृष्टो दिष्ट्येत्यव्ययेन सूच्यते ॥

क्रोधः कृतापराधेषु स्थिरोऽमर्षत्वमश्नुते ॥ १५४ ॥

तद्रूपेण रसस्य प्रकर्षो यथा,—

लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्टपाण्डववधूपरिधानकेशाः
स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः ॥

अत्र भीमसेनस्य धार्तराष्ट्रेषु स्वस्था इति नाम्नोऽप्यसहनाल्लाक्षागृहादपकारजन्मामर्षः प्रतीयते ॥

असूयान्यगुणर्द्धीनामौद्धत्यादसहिष्णुता ॥ १५५ क ॥

तद्रूपेण रसस्य जन्म यथा,—

वन्द्यास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्तते
सुन्दस्त्रीनिधनेऽप्यखण्डयशसो लोके महान्तो हि ते ।
यानि त्रीणि कुतोमुखान्यपि पदान्यासन् खरायोधने
यद्वा कौशलमिन्द्रसूनुदमने तत्राप्यभिज्ञो जनः ॥

अत्र यद्यपि सोल्लुण्ठदोषकीर्तनादिभिर्जुगुप्सा निष्पद्यते तथापि न तया स्वनिष्पत्तिहेतुरसूया सङ्कीर्यते ॥

ईर्ष्यामाहुः समानेषु मानदानाद्यमर्षणम् ॥ १५५ ॥

तद्रूपेण रसस्य प्रकर्षो यथा,—

हुं निल्लज्ज समोसरन्तं पिअ अणुणेसु जाइ दे एअं ।
पाअग्गउट्ठालत्तएण तिलअं वि णिम्मविअं ॥

अत्र कस्याश्चित् प्रेयसि सपत्नीं प्रसादयितुं गते तन्मानमसहमानायाः समुत्पन्नेर्ष्या प्रियानुनयादिभिर्वर्ध्यमानतया निष्पन्नालक्तकतिलकानुमेयैरुत्पादपतनादिभिरुद्दीप्ता हुङ्काराद्युपभर्त्सनप्रतिभेदाविनाभूतैर्भ्रूभङ्गताडनाद्युपक्षेपयुक्तैर्गद्गदादिभिः संसृज्यमाना प्रकृष्यते ॥

विषादश्चेतसो ग्लानिरुपायाभावनाशयोः ॥ १५६ क ॥

तद्रूपेण रसस्य प्रकर्षो यथा,—

व्ययं यत्र कपीन्द्रसख्यमपि मे वीर्यं हरीणां वृथा
प्रज्ञा जाम्बवतोऽपि यत्र न गतिः पुत्रस्य वायोरपि ।
मार्गं यत्र न विश्वकर्मतनयः कर्तुं नलोऽपि क्षमः
सौमित्रेरपि पत्रिणामविषयस्तत्र प्रिया क्वापि मे ॥

अत्र सीतासमागमविषये रामस्य हृष्टावदानसुग्रीवसख्यादेरुपायस्याभावात् विषादः प्रकृष्यते ॥

सत्त्वत्यागादनुत्कर्षो वाक्यादेर्दैन्यमुच्यते ॥ १५६ ॥

तद्रूपेण रसस्यानुबन्धो यथा,—

अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां भावप्रवृत्तिश्च ताम् ।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्याधीनमतःपरं न खलु तद्वाच्यं वधूबन्धुभिः ॥

अत्र स्नेहप्रभवं पादत्रयोक्तमर्थितादैन्यं तुरीयपादोपक्षिप्तया वाचा दैन्यान्तरेणानुबध्यते ॥

विड् वाग्दण्डपारुष्यमुग्रतामपकारिषु ॥ १५७ क ॥

तद्रूपेण रसस्य प्रकर्षो यथा,—

प्रणयिसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥

अत्र माधवस्य प्रकृष्टापकारिण्यघोरघण्टे विषये प्रकृष्टमेव वाक्पारुष्यं दण्डपारुष्यञ्च जायते ॥

त्रासश्चित्तचमत्कारः प्राकस्मिकभयादिभिः ॥ १५७ ॥

तद्रूपेण रसस्य जन्म यथा,—

परिस्फुरन्मीनविघट्टितोरवः सुराङ्गनास्त्रासविलोलदृष्टयः।
उपाययुः कम्पितपाणिपल्लवाः सखीजनस्यापि विलोकनीयताम्॥
अत्र लोलदृष्टिता करावधूननञ्च स्त्रीणां स्वभावभीरुत्वविलासित्वाभ्यामपि भवतीति तासाविर्भावेऽप्यसमर्थमिति नानुबन्धो भवतीति।

अनिष्टाभ्यागमोत्प्रेक्षा शङ्कामापद्यते बुधाः॥ १५८ क॥

तद्रूपेण रसस्य प्रकर्षो यथा,—

सहसा मा साहिज्जउ पिअागमो तीअ विरहकिसिआए।
अच्चन्तपहरिसेण वि जा अमुआ सा मुआव्वेअ॥

अत्र विरहिण्याः कार्श्यातिशयमुद्वीक्षमाणायाः कस्याश्चिद्वयस्यायाः स्नेहातिशयात् प्रेम पश्यति भयान्यपदेऽपीति प्रियागमहर्षातिशयभावेऽप्यसहिष्णुतया तन्मरणशङ्का प्रकाश्यते॥

विरहादेर्मनस्तापः शरीरान्तकरो गदः॥ १५८॥

तद्रूपेण रसस्य जन्म यथा,—

स्थितमुरसि विशालं पद्मिनीपत्रमेतत्
कथयति न तथान्तर्मन्मथोत्थामवस्थाम्।
अतिशयपरितापग्लापिताभ्यां यथास्याः
स्तनयुगपरिणाहं मण्डलाभ्यां ब्रवीति॥

अत्र सागरिकायाः स्तननिहितसरोजिनीदलग्लापनेन वपुःसन्तापो निष्पद्यते॥

बलस्यापचयो ग्लानिराधिव्याधिप्रकर्षभूः॥ १५९ क॥

तद्रूपेण रसस्यानुबन्धो यथा,—

किसलयमिव मुग्धं बन्धनाद्विप्रलूनम्
हृदयकुसुमशोषी दारुणो दीर्घशोकः।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरम्
शरदिज इव घर्मः केतकीगर्भपत्रम्॥

अत्र प्रकृष्टशोकानुबन्धिनी ग्लानिर्वैवर्ण्यक्षामताभ्यामनुबध्यते॥

उत्कण्ठाहर्षशोकादेरस्मादश्चित्तविप्लवः ॥ १५९ ॥

तद्रूपेण रसस्य निष्पत्ति र्यथा,—

क्वाकार्यं क्व कलाकरस्य च कुलं भूयोऽपि दृश्येत सा
दोषाणामुपशान्तये श्रुतमहो कोपेऽपि शान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियो स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥

अत्र विरहिणोऽपयातौत्कण्ठादिभिः प्रेमप्रकर्षादसत्प्रलापरूप उन्मादो निष्पद्यते ॥

आदरातिशयाच्चेतसश्चावेगः सम्भ्रमो मतः ॥ १६० क ॥

तद्रूपेण रसस्य सङ्करो यथा,—

अलमलमतिमात्रं साहसेनामुना ते
त्वरितमपि विमुञ्च त्वं लतापाशमेनम् ।
चलितमिव निरोद्धुं जीवितं जीवितेशे
क्षणमिह मम कण्ठे बाहुपाशं निधेहि ॥

अत्र रतिजन्मा सम्भ्रमातिशयो रतिजन्मनैव रतिप्रकर्षेण सङ्कीर्यते ॥

मनःशरीरयोः खेदः क्रियातिशयतः श्रमः ॥ १६० ॥

तद्रूपेण रससङ्करो यथा,—

स्खलयति वचनं ते संश्रयत्यङ्गमङ्गम्
जनयति मुखचन्द्रोद्भासिनः स्वेदबिन्दून् ।
मुकुलयति च नेत्रे सर्वथा सुभ्रु, खेद-
स्त्वयि विलसति तुल्यं वल्लभालोकनेन ॥

अत्र मालत्याः पुष्पावचयजन्मा श्रमो माधवावलोकनजा च रतिः स्वेदगद्गदाङ्गसादनयनमुकुलनैस्तुल्यधर्मिणौ मिथः सङ्कीर्यते ॥

चित्तस्य खेदो निर्वेदस्तत्त्वज्ञानोदयादिभिः ॥ १६१ क ॥

तद्रूपेण रसस्य शेषो यथा,—

जरामरणदौर्गत्यव्याधयस्तावदासताम् ।

मन्ये जन्मैव धीराणां भूयो भूयस्त्वपाकरम् ॥

अत्र मोघायोत्सहमानस्य कस्यचिन्निर्वेदागमो गम्यते ॥

क्रियास्वपाटवं जाड्यं चिन्तोत्कण्ठाभयादिभिः ॥ १६१ ॥

तद्रूपेण रसस्य निष्पत्ति र्यथा,—

शिथिलशिथिलं न्यस्य स्वैरं धनुःशिखरे शिरो
नयनसलिलैः कुर्वन् मौर्वीं लतामपरामिव ।
अहह विकलः श्रुत्वा श्रुत्वा घनस्तनितध्वनिम्
किमपि किमपि ध्यायन्नार्यो न याति न तिष्ठति ॥

अत्र विरहिणो रामस्य क्रियास्वपाटवं निष्पद्यते ॥

क्रियाविक्षेप आलस्यं सुखर्सविमदादिभिः ॥ १६२ क ॥

तद्रूपेण रसस्य निष्पत्ति र्यथा,—

घरिणिघणत्थणपेल्लणसुहेल्लिपडिअस्स होन्ति पहिअस्स ।
आवसउणंगरअवाविहिदिअसा सुहवेन्ति ॥

अत्र रतिसुखानुभवाभिगमिषोरपत्रगच्छत आलस्यं निष्पद्यते ॥

निद्रा व्यापारवैमुख्यमिन्द्रियाणां श्रमादिभिः ॥ १६२ ॥

तद्रूपेण रसस्यानुबन्धो यथा,—

णिद्दालसवुभिरतं सवलं तह्तारआलोआ ।
कामस्स वि दुंव्विसहा दिट्ठिणिवाआ ससिमुहीए ॥

अत्र रतिश्रमजागरादिजनितनिद्रालसदृष्टिनिपातास्तारकाघूर्णनपक्ष्मस्खलनादिभिरनुबध्यन्ते ॥

निद्रादिजनितं सुप्तं बाह्येन्द्रियनिमीलनम् ॥ १६३ क ॥

तद्रूपेण रसप्रकर्षो यथा,—

'ओसुअइ दिण्णपडिवक्खवेअणं पसिढिलेहिं अङ्गेहिं ।
णिव्वत्तिअसुरअरसाणुबन्धसुहणिब्भरं सोण्हा ॥

अत्र निर्भरपदेनैव प्रकर्षः प्रतिपाद्यते ॥

निद्रापगमहेतुभ्यः प्रबोधश्चेतनागमः ॥ १६३ ॥

तद्रूपेण रससम्बन्धो यथा,—

प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणा-
मात्मव्यापारगुर्वी जनितजललवाजृम्भणैः साङ्गभङ्गैः ।
नागाङ्कं मोक्तुमिच्छोः शयनमुरुफणाचक्रवालोपधानम्
निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः ॥

अत्र हरेः प्रत्यग्रोन्मेषजिह्मतादिभिः प्रबोधो नाद्यापि निष्पद्यत इति प्रतीयते ॥

उक्ता भावादिभेदेन तेऽमी रत्यादयो रसाः ।
अथैतेष्वेव केषाञ्चिद्विशेषानभिदध्महे ॥ १६४ ॥

तत्र, शृङ्गारवीरकरुणा रौद्राद्भुतभयानकाः ।
बीभत्सहास्यप्रेयांसः शान्तोदात्तोद्धता रसाः ॥ १६५ ॥
रति र्निसर्गसंसर्गौपम्याध्यात्माभियोगजा ।
संप्रयोगाभिमानोत्था विषयोत्था च कथ्यते ॥ १६६ ॥
प्रीतिरपेत्रवमेव सर्वान्तरसरा सांप्रयोगिकी ।
अन्यासिकी तु तत्स्थाने तदुदाहृतयो यथा ॥ १६७ ॥
स्तौति प्रेत्य सङ्गन्तुं यथा मे मरणं मतम् ।
सैवावन्ती मया लब्धा कथमत्रैव जन्मनि ॥

अत्र स्थायिनो विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति रतिरेव शृङ्गाररूपेण निष्पद्यते। अत्रावन्त्यां वासवदत्ताया आलम्बनविभावभूतायाः सकाशादुत्पन्नो वत्सेश्वरस्य रतिस्थायिभावस्तस्याः पुन र्जीवनादिभि रुद्दीप्यमानो स्तौतीत्यादिना वागारम्भानुभावेनानुमीयमानो हर्षधृतिप्रभृतिभिः सुखात्मभि र्व्यभिचारिभिः संसृज्यमानः करुणान्तरसम्भोगशृङ्गाराख्यां लभते ॥

अजित्वा सार्णवामुर्वीमनिष्ट्वा विविधै र्मखैः ।
अदत्वा चार्थमर्थिभ्यो भवेयं पार्थिवः कथम् ॥

अत्र वसुधाविजयादेवालम्बनविभावादुत्पन्नः स्थायिरूपाद्भावः स्थैर्य-

धैर्यादिभिरुद्दीप्यमानः समुत्पन्नेषु वागारम्भानुमीयमानेषु स्मृतिमति-वितर्कादिषु निष्पन्नो वीररससंज्ञया व्यवह्रियते ॥

यस्याः कुसुमशय्यापि कोमलाङ्ग्या रुजाकरी।
साऽधिशेते कथं देवी हुताशनवतीं चिताम् ॥

अत्र चालम्बनविभावभूतदेवीमरणादुत्पन्नः शोकस्थायिभावश्चितानिवेशनहुताशनाङ्गज्वालादिभिरुद्दीपनविभावैरुद्दीप्यमानो वागारम्भानुमेयैर्निर्वेदग्लानिवैवर्ण्यादिभिर्व्यभिचारिभिः संसृज्यमानः करुण इति ख्यायते ॥

निगृह्य केशेष्वाकृष्टा कृष्णा येन ममाग्रतः।
सोऽयं दुःशासनः पापो लब्धः किं जीवति क्षणम् ॥

अत्र दुःशासनालम्बनविभावाय क्रुध्यतो भीमसेनस्य पूर्वमुत्पन्नक्रोधस्थायिभावस्तदवाप्तेः स्मर्यमाणसमक्षकृतद्रौपदीनिग्रहकेशाकर्षणादिभिरुद्दीपनविभावैरुद्दीप्यमानः समुत्पन्नेषु वागारम्भानुभावेष्वनुमीयमानेष्वसूयावेगश्वेदपरुषत्वादिषु दुःखात्मकेषु व्यभिचारिषु निष्पाद्यमानो रौद्र इति निष्पद्यते ॥

अंशुकानि प्रवालानि पुष्पं हारादिभूषणम्।
फलं मधूनि हर्म्याणि शाखा नन्दनशाखिनाम् ॥

अत्र शाखिनां प्रवालपुष्पफलशाखासंपन्नं निजं रूपम् नन्दनशाखिनां पुनः प्रवालादिस्थानेंऽशुकहारमधुमन्दिराणि तदेतदाश्चर्यमतश्चैतेभ्य आलम्बनविभावेभ्यः कस्यचिद् देवभूयं गतस्य समुत्पन्नो विस्मयस्थायिभावं स्तदीयावयवदर्शनादिभिरुद्दीपनविभावैरुद्दीप्यमानः समुत्पन्नेषु वागारम्भानुमेयेषु हर्षरोमोद्गमस्वेदगद्गदादिषु व्यभिचारिषु निष्पाद्यमानोऽद्भुत इत्युच्यते ॥

इदं मघोनः कुलिशं धारासंनिहितानलम्।
स्मरणं यस्य दैत्यस्त्रीगर्भपाताय कल्पते ॥

अत्र महेन्द्रकुलिशात् धारासंनिहितानलालम्बनविभावात् स्मर्यमा-

णादपि दैत्यस्त्रीणामुत्पन्नो भयस्थायिभावस्तद्विदीर्णदानवसंरम्भ-स्यापादिभि रुद्दीपनविभावैरुद्दीप्यमानः स्वगर्भपातादिभिरनुभावै-स्तदनुमितैश्च स्वेदस्तम्भवेपथुप्रभृतिभि र्व्यभिचारिभिः संसृज्यमानो भयानकरसरूपेण निष्पन्नः केनचिदाख्यायमानोऽपि भयानक इत्या-ख्यायते ॥

पायं पायं तवारीणां शोणितं करसंपुटैः ।
कौणपाः सह नृत्यन्ति कबन्धैरन्त्रभूषणाः ॥

अत्रालम्बनविभावभूतेभ्यः कौणपेभ्यः कस्यचिद् रिपुविजयाशंसिनः पुंस उत्पन्नो जुगुप्सास्थायिभावः शिरश्छेदविगलद्रुधिरधारापरिसृतमवर्तित-कबन्धकौणपान्त्रभूषणशोणितपानादिभिरुद्दीपनविभावैरुद्दीप्यमानः स-मुत्पन्नेषु वागारम्भानुमेयेषु भयावेगशङ्कावहित्थादिषु व्यभिचारिषु निष्पन्नो बीभत्स इति निगद्यते ॥

इदमन्यानमानाया लग्नं स्तनतटे तव ।
छाद्यतामुत्तरीयेण नवं नखपदं सखि ॥

अत्र काचित् सखी पूर्वं भर्त्तरि प्रगृहीतमाना तेनैव नवनखपदा-ङ्कितस्तनामालम्बनविभावभूतामुपलभमानायाः कस्याश्चित् सख्या उ-त्पन्नो हासस्थायिभावस्तदीयमानपरिग्रहस्मरणादिभिरुद्दीपनविभावै-रुद्दीप्यमानः समुत्पन्नेषु वागारम्भानुमितेषु व्रीडावहित्थगद्गदादि-व्यभिचारिषु निष्पद्यमानो हासशब्देनाभिधीयते ॥

यदेव रोचते मह्यं तदेव कुरुते प्रिया ।
इति वेत्ति न जानाति यत् प्रियं तत् करोति सा ॥

अत्र यत्नमकृते धीरतया ललितनायकस्य प्रियानुभावादुत्पन्नः स्नेह-स्थायिभावो विषयसौकुमार्यात्मसंवित्त्यादिभिरुद्दीपनविभावैरुद्दीप्यमानः समुपजायमाने मौग्ध्यमतिधृतिस्मृत्यादिभि र्व्यभिचारिभावैरनुभावैश्च प्रशंसादिभिः संसृज्यमानो निष्पन्नः प्रेयानिति प्रतीयते । रतिप्रीत्यो-रपि चायमेव मूलप्रकृतिरिष्यते ॥ यदिदमाहुः ॥

अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया।
स हि स्नेहात्मकस्तन्तुरन्तर्मर्माणि सीव्यति॥

सर्वाः सम्पत्तयस्तस्य सन्तुष्टं यस्य मानसम्।
उपानद्गूढपादस्य ननु चर्मावृतेव भूः॥

अत्र कस्यचिदुपशान्तप्रकृते र्धीरप्रशान्तनायकस्य यथोपनतमनोऽनुकूलदारादिसम्पत्तेरालम्बनविभावभूतायाः समुत्पन्नो धृतिस्थायिभावो वस्तुतत्त्वालोचनादिभिरुद्दीपनविभावैरुद्दीप्यमानः समुपजायमानस्मृतिमत्यादिभि र्व्यभिचारिभावै र्वागारम्भादिभिरनुभावैरनुबध्यमानो निष्पन्नः शान्त इति गीयते॥ अनेन पुनरस्य प्रशमं प्रकृतिमामनन्ति॥ स तु धृतेरेव विशेषो भवति॥

साधारण्यान्निरातङ्कः कन्यामन्योऽपि याचते।
किं पुन र्जगतां जेता प्रपौत्रः परमेष्ठिनः॥

अत्र रामस्योदात्तप्रकृते र्निसर्गत एव तत्त्वाभिनिवेशिनी मति र्नासत्यविषये प्रवर्त्तते। न च प्रवृत्तोपरमति। सा च सीतेयं मम स्वीकारयोग्येत्येवं रूपेण प्रवृत्ता रावणप्रार्थनालक्षणप्रोत्साहनाभ्यामुद्दीप्यमाना समुपजायमानचिन्तावितर्कव्रीडाऽवहित्थस्मृत्यादिभिः कालोचितोत्तरानुमीयमानैश्च विवेकचातुर्यौदार्यधैर्यादिभिः संबध्यमानोदात्तरसरूपेण निष्पद्यते॥

अपकर्त्ताहमस्मीति मा ते मनसि भूद्भयम्।
विमुखेषु न मे खड्गः प्रहर्त्तुं जातु वाञ्छति॥

अत्र मयाऽस्यापकारः कृत इति यत्ते चेतसि भयं तन्माभूत्, न मम खड्गः पराङ्मुखेषु कदाचिदपि प्रहर्त्तुमुत्सहत इति सर्वदैव दृढाहङ्कारः प्रतीयते॥ सोऽयं गर्वप्रकृतिरुद्धतो नाम रसः॥ केचित् पुनः "आस्थामालम्ब्य नीतेषु वशं क्षुद्रेष्वरातिषु। व्यक्तिमायाति महतां माहात्म्यमनुकम्पया"॥ इत्येवमूर्जस्वीत्युदाहरणे निःक्षिपन्तः पूर्वोक्तमेव गर्वप्रकर्षोदाहरणं धृतायुधो यावदहमित्याद्युद्धतनिष्पत्ती पर्य-

यन्ति ॥ रतिविशेषेषु नैसर्गिकी यथा,—

इयं महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य मानिनी ।
अरूपहार्यं मदनस्य निग्रहात् पिनाकपाणिं पतिमाप्तुमिच्छति ॥

अत्र जन्मान्तरवासनया निसर्गत इयं भवति ॥ सांसर्गिकी यथा,—

भित्त्वा सद्यः किसलयपुटान् देवदारुद्रुमाणां
ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः ।
आलिङ्ग्यन्ते गुणवति मया ते तुषाराद्रिवाताः
पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥

अत्र शैत्यसौरभादिभि र्विरहिणां उद्वेजनीया अपि वायवः प्रियतमाङ्गसंसर्गसम्भावनया समालिङ्ग्यन्त इति संसर्गादियं रति र्भवति ॥ औपमानिकी यथा,—

अपि जनकसुतायास्तच्च तच्चानुरूपं
स्फुटमिह शिशुयुग्मे नैपुणोन्नेयमस्ति ।
ननु पुनरिव तन्मे गोचरीभूतमक्ष्णोः
अभिनवशतपत्त्रश्रीमदास्यं प्रियायाः ॥

सेयं सीताविषयिणी रति स्तदुपमानदर्शनेन रामं रमयते ॥ आध्यात्मिकी यथा,—

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुने स्तनयाम् ।
बलवत्तु दूयमानं प्रत्याययतीव मे चेतः ॥

अत्र सेयं दुर्वाससः शापादिस्मृतविवाहादिवृत्तान्तस्य दुष्यन्तस्य शकुन्तलायां रतिरध्यात्मं भवति ॥ आभियोगिकी यथा,—

अलसवलितमुग्धस्निग्धनिष्पन्दमन्दैः
अधिकविकसदन्तर्विस्मयस्मेरतारैः ।
हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षैः
अपहृतमपविद्धं पीतमुन्मूलितञ्च ॥

सेयमनुरागातिशयस्तबकमालतीकटाक्षाभियोगे माधवस्य रतिरेषो-

स्मर्यते ॥ साम्प्रयोगिकी यथा,—

उन्नमयन् सकचग्रहमास्यं चुम्बति प्रियतमे हठवृत्त्या।
हुं हुं मुञ्च मम मेति च मन्दं जल्पितं जयति मानधनायाः॥

अत्र तर्जनार्थमोक्षार्थवारणार्थानां मन्दं मन्दं प्रयोगान्मानवत्या संप्रयोगे रत्युन्नतिः प्रतीयते ॥ आभिमानिकी यथा,—

इयं गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयोः
असावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः॥

अत्र रुचिविशेषोऽभिमानस्तत एवंप्राया रतयो भवन्ति। वैषयिकीषु शब्दे यथा,—

विलासमसृणोल्लसन्मुसललोलदोःकन्दली
परस्परपरिस्खलद्वलयनिःस्वनोद्दन्तुराः।
हरन्ति कलहुङ्कृतिप्रसभकम्पितोरःस्थली-
त्रुटद्गमकसङ्कुलाः कलमकण्डनीगीतयः॥

स्पर्शे यथा,—

प्रत्यङ्गेषु रोमाञ्चं कुर्वन् मनसि निर्वृतिम्।
नेत्रे निमीलयन्नेष प्रियास्पर्शः प्रवर्त्तते॥ रूपे यथा,—

तं राघवं दृष्टिभिरापिबन्त्यः नार्यो न जग्मुर्विषयान्तराणि।
तथा हि शेषेन्द्रियवृत्तिरासां सर्वात्मना चक्षुरिव प्रविष्टा॥

रसे यथा,—कस्य नो कुरुते नन्वि पिपासाकुलितं मनः।
अयं ते विद्रुमच्छायो मरुमार्ग इवाधरः॥

गन्धो यथा,—

रन्धणकम्मणिउणिए मा जूरसु रत्तपाडलसुअन्धं।
मुहमारुअं पिअन्तो धूमाइ सिही ण पज्जलइ॥

प्रीतिविशेषेषु नैसर्गिकी यथा,—

आलक्ष्य दन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्कागतान् प्रणयिनस्तनयान् वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥

अत्र यदा रतिर्जायते तदा पुत्रेषु स्निह्यति पुत्ररूपेण वा जायत इति जन्मान्तरवासनारूपो निसर्गः सङ्क्रान्तः ॥ सांसर्गिकी यथा,—

विश्वम्भरा भगवती भवतीमसूत
राजा प्रजापतिसमो जनकः पिता ते ।
तेषां वधूस्त्वमसि नन्दिनि पार्थिवानां
येषां कुलेषु सविता च गुरुर्वयं च ॥

अत्र विश्वम्भरादिसंसर्गात् सीतायां वशिष्ठमिश्राः स्निह्यन्ति ॥ औपमानिकी यथा,—

कुवलयदलस्निग्धश्यामः शिखण्डकमण्डनो
वटुपरिषदं पुण्यश्रीकः श्रियैव सभाजयन् ।
पुनरपि शिशुर्भूत्वा वत्सः स मे रघुनन्दनो
झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम् ॥

अत्र रामौपम्याल्लवे जनकः प्रीयते ॥ आध्यात्मिकी यथा,—

परितप्तं यथा स्तनुः स्नेहेन परितप्यते ।
अविज्ञातेऽपि बन्धौ हि बलात् प्रह्लादते मनः ॥

अत्राविज्ञातोऽपि वासवः स्वसुतमर्जुनं दृष्टः प्रीणयति ॥ आभियोगिकी यथा,—दुःखैकबन्धुरयमृक्षहरीश्वरो मे

पौलस्त्य एष समरेषु पुरः प्रहर्ता ।
इत्यादृतेन कथितौ रघुनन्दनेन
व्युत्क्रम्य लक्ष्मणमुभौ भरतो ववन्दे ॥

अत्र सीताम्वेषणादेरभियोगाद् रामस्य सुग्रीवविभीषणयोः प्रीतिरुत्पद्यते ॥ साम्प्रयोगिकी स्थाने आभ्यासिकी यथा,—

इति विसृज्य तान्यकरणीयमात्मनः सचिवावलम्बितधुरं नराधिपम्।
परिवृद्धरागमनुबद्धसेवया मृगया जहार चतुरेव कामिनी॥

अत्र, शब्दादिभ्यो वहिर्भूता या कर्माभ्यासलक्षणा।
प्रीतिः साऽभ्यासिकी ज्ञेया मृगयादिषु कर्मसु॥

इति लक्षणं घटते॥ आभिमानिकी यथा,—

दत्तेन्द्राभयदक्षिणैर्भगवतो वैवस्वतादा मनोः
दृप्तानां दमनाय दीपितनिजक्षात्रप्रतापाग्निभिः।
आदित्यै यदि विग्रही नृपतिभिर्धन्यं ममैतत् ततो
दीप्ताक्षस्फुरदुग्रदीधितिशिखैर्नीराजितज्यं धनुः॥

अत्राभिमतमतिद्वन्द्विलाभात् लवानुपदी कुमस्तुष्यति॥ वैषयिकी यथा,—

लावण्यैः क्षणदाविरामममधुराः किञ्चिद्विनिद्रालसं
श्रोत्रैः स्रवणमुग्धचारणवधूदन्तच्छदावासिनः।
पीयन्ते मदुवक्त्रपौरमरुतः पौराणगीतिक्रम-
व्यालोलाङ्गुलिपद्मसुक्तसुषिरश्रेणीधरा वेणवः॥

स्पर्शे यथा,—

प्रशान्तघर्माभिभवः शनैर्विवान् विलासिनीभ्यः परिमृष्टपङ्कजः।
ददौ भुजालम्बमिवात्तशीकरः तरङ्गमालान्तरगोचरोऽनिलः॥

रूपे यथा,—अयमभिनवमेघश्यामलोत्तुङ्गसानुः
मदमुदितमयूरीवृन्दविश्रब्धरत्यः।
शकुनिशवलनीलानोकहस्निग्धवर्ष्मा
वितरति ऋजुदृष्टिः पर्वतः प्रीतिमक्ष्णोः॥

रसे यथा,—इक्षुदण्डस्य मण्डस्य दध्नः पिष्टकृतस्य च।
वाराहस्य च मांसस्य सोऽयं गच्छति फाल्गुनः॥

गन्धे यथा, कपोलकण्डूः करिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम्।
यत्र स्रुतक्षीरतया प्रसूतः सानूनि गन्धः सुरभीकरोति॥

उपलक्षणमेतत्॥ तेन उत्साहस्य युद्धदानदयावीरादयः, क्रोधस्य

भीमसन्त्वासादयः हासस्य स्मितहसितविहसितादयः प्रसुप्तप्रलय-मत्यादीनां स्वप्नमरणप्रमादयो भेदा जायन्ते ॥ तत्र यद्यपि अजित्वा सार्णवामुर्वीम् इत्यनेन युद्धवीरः, अनिष्ट्वा विविधैर्मखैः इत्यनेन दानवीरः, अदत्वा चार्थमर्थिभ्यः इत्यनेन दयावीरश्च उत्साहरूपेण रसनिष्पत्तौ वर्त्तते तथापि एकत्रोऽपि रसद्रसनिष्पत्तिरस्तीति प्रदर्श्यन्ते ॥

तेषु युद्धवीरो यथा,—

एतां पश्य पुरस्तटीमिह किल क्रीडाकिरातो हरः
कोदण्डेन किरीटिना सरभसं चूडान्तरे ताडितः ।
इत्याकर्ण्य कथाऽद्भुतं हिमनिधावद्रौ सुभद्रापतेः
मन्दं मन्दमकारि येन निजयो र्दोर्दण्डयो र्मण्डनम् ॥

दानवीरो यथा,—दधिचीरघृताम्भोधिस्थस्तनस्तृणीयया ।
महादानोत्सवे यस्य हन्त कारायितं भुवा ॥

दयावीरो यथा,—

स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्तयितुं यसस्व ।
दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं महर्षेः ॥

क्रोधस्य भीमादयो विशेषाश्चतुर्विंशतिः संभवन्ति तथापि ललिताललितोभयभेदेन रूपेण क्रमेण सर्वसंग्रहात् तत्र त्रय एव प्रकाराः प्रदर्श्यन्ते ॥ तेषु स्त्रीणां ललितः कोपाभावो यथा,—

भ्रूभेदिभिः प्रकम्पोष्ठैः ललिताङ्गुलितर्जनैः ।
यत्र कोपैः कृताः स्त्रीणां सप्रसादार्थिनः प्रियाः ॥

प्रियापराधजन्मा दुःखोत्पीडो मनुष्य यथा,—

धण्णाविप्पणवग्गरिविरहअकसावअं सतुप्पेच्छे ।
वाहगब्भे णिसम्मइ वाहीए बङ्कमुहे दिट्ठी ॥

ननु इयमीर्ष्या कस्मान् न भवति नात मानदानामर्षणमात्रविषया अपि तु तज्जनितो दुःखातिशय इति ॥ प्रियादिषु व्याजनिन्दोत्प्रासो यथा,—

पहवंति च्चिअ पुरिसा महिलाणं किं खु सुहअ विहिओसि।
अणुराअलोह्मिआए को दोसो आहिजाईए॥

हासस्त्र यद्यपि उपहासादयो भेदाः सम्भवन्ति तथापि विहसितेन सेषासुपसंग्रहादेषन्यूनाधिकमिति त्रयस्तद्भेदा उदाह्रियन्ते॥ तत्र-पक्षसितं स्मितं यथा,—

पुष्पं प्रवालोपहितं यदि स्यात् मुक्ताफलं वा स्फुटविद्रुमस्थम्।
ततोऽनुकुर्याद्विशदस्य तस्याः ताम्रौष्ठपर्यस्तरुचः स्मितस्य॥

दृष्टदशनकान्तिहसितं यथा,—

तिमिरनिरुद्धभीमरजनीमुखचन्द्रिकया
गणयति ताण्डवाभिनयदर्शनदीपिकया।
अभिभवसि त्वमद्य शशिनः श्रियमुत्कण्ठया
दशनमयूखमञ्जरितया हसितप्रभया॥

तदेव सविशेषं विहसितं यथा,—

चुम्बतामिन्दो र्लेखां रतिकलहभग्नस्य वलयं
द्वयं चक्रीकृतय प्रहसितमुखी शैलतनया।
अवोचद्यं पश्येत्यवतु स शिवः सा च गिरिजा
स च क्रीडाचन्द्रो दशनकिरणापूरिततनुः॥

सुप्तविशेषः स्वप्नो यथा,—

जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मां संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः।
नो यावत्परिरभ्य चाटुकशतैराश्वासयामि क्षणं
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः॥

मूर्च्छाविशेषो मरणं यथा,—

क्षणमालसखीं सुजातयोः स्तनयोस्तामवलोक्य विह्वला।
निमिमील नरेन्द्रसुन्दरी हृतचन्द्रा तमसेव शर्वरी॥

गतिविशेषः श्रमो यथा,—

यदासीदज्ञानं स्मरतिमिरसंस्कारजनितं
तदा दृष्टं नारीमयमिदमशेषं जगदपि ।
इदानीमस्माकं पटुतरविवेकाञ्जनजुषाम्
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥

एवमन्येऽपि विज्ञेयाः रसा भावादि संश्रयाः ॥
विशेषः प्राप्तकालोऽय * परिपोषो निगद्यते ॥ १९८ ॥ *परिशेषो
तत्राश्रयस्त्रिधा पुमान् स्त्री तिर्यगादयः ।

तेषु पुमान् यथा,—आश्चर्यमुत्पलदृशो वदनामलेन्दु-
सान्निध्यतो मम मुहुर्जडिमानमेत्य ।
जाड्येन चन्द्रमणिनेव महीधरस्य
संधार्यते द्रवमयो मनसा विकारः ॥

स्त्री यथा,—तेनाथ नाथ दुरादाहरणातपेन
सौम्यापि नाम परुषत्वमभिप्रपन्ना ।
जज्वाल तीव्रविशदाः सहसोद्गिरन्ती
वागर्चिषस्तपनकान्तशिलेव सीता ॥

तिर्यगादिषु यथा,—

उत्कूजति श्वसिति मुह्यति याति तीरं
तीरात् तरुं तरुतलात् पुनरेव वापीम् ।
वाप्यां न रज्यति न चाश्नाति मृणालखण्डं
चक्रः क्षपासु विरहे खलु चक्रवाक्याः ॥

विषयस्त्रिधा चेतनस्तिर्यगचेतनश्च ॥ तेषु चेतनो यथा,—

इयं सा लोलाक्षी त्रिभुवनललामैकवसतिः
स चायं दुष्टात्मा स्वसुरपकृतं येन मम तत् ।
इतस्तीव्रः कामो गुरुरयमितः क्रोधदहनः
कृतो वेषश्चायं कथमिदमिति भ्राम्यति मनः ॥

तिर्यग् यथा,—

आयाते दयिते मरुस्थलभुवां सञ्चिन्त्य दुर्लङ्घ्यतां
गेहिन्याः परितोषवाष्पतरलामासज्य दृष्टिं मयि।
दत्वा पीलुशमीकरीरकवलान् स्वेनाञ्चलेनादरात्
उन्मृष्टं करभस्य केसरसटाभाराग्रलग्नं रजः॥

अचेतनो यथा,—

चिप्तं पुरो न जगृहे मुहुरिक्षुकाण्डं
नापेक्षते स्म निकटोपगतां करेणुम्।
सस्मार वारणपतिः परिमीलिताक्षं
इच्छाविहारवनवासमहोत्सवानाम्॥

ज्ञानं त्रिधा दृष्टं श्रुतं अनुमानञ्च॥ तेषु दृष्टं यथा,—

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशो र्लक्ष्म लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनम्॥

श्रुतं यथा,—किं रूपं स्फुटमेव सा शशिमुखी धत्ते तदत्यद्भुतं
मामुत्पादयितुं परापकरणे चित्तं किमस्यात्स्वसुः।
इत्यन्तर्विकसद्वितर्कविधुरं चेतस्तथा वर्त्तते
स्वल्पोऽप्येष मम प्रयाति पुरतः पन्था यथा दीर्घताम्॥

अनुमानं यथा,—

शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य।
अथ वा भवितव्यानां द्वाराणि भवन्ति सर्वत्र॥

संस्कारस्त्रिधा आहतः पटुरभ्यस्तश्चेति॥ तत्राश्रयगुणेनादराद्वृत्तमन्न आहितो यथा,—

कन्यारत्नमयोनिजन्म भवतामास्ते वयञ्चार्थिनः
रत्नं यत्क्वचिदस्ति तत्परिणमत्यश्मास्तु शक्रादपि।
कन्यायाश्च परार्थतैव हि मता तस्याः प्रदानादहं

बन्ध यो भविता पुलस्त्यपुलहप्रष्ठाय सम्बन्धिनः॥

विषय गुणेन पटुप्रत्ययादुत्पन्नः पटु र्यथा,—

उत्पत्ति र्देवयजनात् ब्रह्मवादी नृपः पिता।

सुप्रसन्नोज्ज्वला मूर्त्तिरस्याः स्नेहं करोति मे॥

स्थानमौनःपुन्येनाभ्यासप्रत्ययादुत्पन्नोऽभ्यस्तः। स यथा,—

भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं

दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था।

साक्षात् कामं नवमिव रतिं मालती माधवं यत्

गाढोत्कण्ठालुलितलुलितैरङ्गकैस्ताम्यतीति॥

अत्र यद्यपि विषयगुणात् पटुः आश्रयगुणाच्चादृतोऽपि प्रत्ययः पटु-माहतं संस्कारं प्रसूयते तथापि अभ्यासात् पटीयानादृततमश्च जायमानोऽभ्यस्त इत्युच्यते॥ उद्दीपनविभावेषु माल्यवस्त्रविभूषणादयो माल्यादयः॥ तेषु माल्यं यथा,—

अशोकनिर्भर्त्सितपद्मरागं आकृष्टहेमद्युतिकर्णिकारम्।

मुक्ताकलापीकृतसिन्धुवारं वसन्तपुष्पाभरणं वहन्ती॥

वस्त्रं यथा,—

आवर्जिता किञ्चिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम्।

सुजातपुष्पस्तवकावनम्रा सञ्चारिणी पल्लविनी लतेव॥

विभूषणं यथा,—

कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य।

अन्योन्यशोभाजननाद् बभूव साधारणो भूषणभूष्यभावः॥

ऋतुधर्मोसदादय ऋत्वादयः। तेषु ऋतुर्यथा,—

इदमसुलभवस्तुप्रार्थनादुर्निवारं

प्रथममपि मनो मे पञ्चबाणः क्षिणोति।

किमुत मलयवातोन्मूलितापाण्डुपत्रैः

उपवनसहकारै र्दर्शितेष्वङ्कुरेषु॥

वयो यथा,—मा मूमुहत् खलु भवन्तमनन्यजन्मा
मा ते मलीमसविकारघना मतिर्भूत्।
इत्यादि नन्विह निरर्थकमेव यस्मात्
कामश्च जृम्भितगुणो नवयौवनञ्च॥
मदो यथा,—तत्क्षणं विपरिवर्त्तितह्रियो: नेष्यतो: शयनमिद्धरागयो:।
सा बभूव वशवर्त्तिनी तयो: शूलिन: सुवदना मदस्य च॥
चन्दनस्नानधूपादय: चन्दनादय:। तेषु चन्दनं यथा,—
चन्दनं विषधराश्रय: शशी वारुणी च विषमोदरावुभौ।
तापयन्ति विरहे किमुच्यते मारयन्ति न यदेतदद्भुतम्॥
स्नानं यथा,—आअम्बलोअणाणं उल्लंसुअपाअडोरुजहणाणं।
अवरण्हमज्जिरीणं कएण कामो वहइ चावं॥
धूपो यथा,—स्नानार्द्रमुक्तेष्वनुधूपवासं विन्यस्तसायन्तनमल्लिकेषु।
कामो वसन्तातपमन्दवीर्य: केशेषु लेभे बलमङ्गनानाम्॥
चन्द्रोदयो घनध्वनिरुपकारस्मरणमित्याद्याश्चन्द्रोदयादय:। तेषु चन्द्रोदयो यथा,—विलिम्पत्येतस्मिन् मलयरजसार्द्रेण महसा
दिशां वक्त्रं चन्द्रे सुकृतमय तस्या मृगदृश:।
दृशो वाष्प: पाणौ वदनमसव: कण्ठकुहरे
हृदि त्वं ह्री: पृष्ठे वचसि च गुणा एव भवत:॥
घनध्वनि र्यथा,—
अज्ज मए तेण विणा अणुभूअ सुहाइ अणिसं भरन्तीए।
अहिणवमेहाणरवो णिसामिओ वज्झपडहो व्व॥
उपकारस्मरणं यथा,—तन्मे मन: क्षिपति यत्सरसप्रहारं
आलोक्य मामगणितस्खलदुत्तरीया।
त्रस्तैकहायनकुरङ्गविलोलदृष्टि:
श्लिष्टवत्यमरसम्बलितैरिवाङ्गै:॥
अनुभावे स्मरति र्यथा,—

खणमेत्तपि ण फिट्टइ अणुदिअहदिण्णगरुअसंतावा ।
पच्छण्णपावसङ्क व्व सामलीमज्झ हिअआ हि ॥

वाञ्छति यथा,—ए मेअअकअउत्ता अप्पत्तमणोरहा विवज्जिस्सं ।
जणवाओ वि ण जाओ तेण समं हलिअउत्तेण ॥

ईहे यथा,—गोत्तक्खलणं सोऊण पिअअमे अज्ज मामिच्छणदिअहे
वज्झमहिसस्स मालव्व मण्डणं से ण पडिहाइ ॥

प्रयतते यथा,—अनुगच्छन् मुनितनयां सहसा विनयेन वारितप्रसरः
स्वस्थानाद्‌चलन्नपि गत्वेव पुनः प्रतिनिवृत्तः ॥

अवैति यथा,—चन्दसरिसं मुहं से सरिसो अमअस्स मुहरसो तिस्सा
सकअग्गाहरहसुज्जअचुम्बणं कस्स सरिसं से ॥

मन्यते यथा,—परिवड्ढ दिवसेसं सहइ मंडलिअकुसुमाडहं व अणंगं ।
विरहम्मि मणइ हरीणाहे अणत्थे पडिउत्थिअं मिअंकं ॥

वक्ति यथा,—बालाओ मा दिज्जउ लोअविरुद्धं त्ति नाम का जण
समुहा पडिए कोवेविए वि दिट्ठिं ण पाडेइ ॥

चेष्टते यथा,—अज्ज मए गन्तव्वं घणंधआरम्मि तस्स सुहअस्स ।
अज्जा णिमीलिअच्छी पअ पडिवाडिं घरे कुणइ ॥

सञ्चारिषु स्वेदरोमाञ्चवेपथवो यथा,—
दिट्ठे जं पुलइज्जसि रह घरसि पिअम्मि जं समासण्णे ।
तुह संभासणसेओ सिअंसणे किं वि णिज्जिहसि ॥

अश्रु यथा,—णअणब्भन्तरघोलंतवाहभरमन्थराए दिट्ठीए ।
पुणरुत्तपेच्छरीए बालअ किं कुं ण भणिओसि ॥

हर्षो यथा,—
सव्वङ्गम्मि विदिट्ठे तहवि ह्ण हिअअस्स णिव्वुदि ओ च्चं ।
जं तेण णअरडाहे हत्थाहत्थि कुण्डो गहिओ ॥

अमर्षो यथा,—कत्तो संपडइ मह पिअसहि पिअसङ्गमो पओसे वि ।
जं जिअइ गहिअकुरणिअरसिसिरीचन्दचण्डालो ॥

लीलादिषु प्रियजनचेष्टाऽनुकृति र्लीला यथा,—

जं जं करेसि जं जं जम्पसि जं जं णिअच्छेसि ।
तं समणुसिक्खिरीए दीहो दिअहो ण संपडइ ॥

नेत्रभ्रूवक्त्रकर्मणां विशेषेण लसनं विलासो यथा,—

सभ्रूविलासमथ सोयमितीरयित्वा
संप्रत्यभिज्ञमिव मामवलोक्य तस्याः ।
अन्योन्यभावचतुरेण सखीजनेन
मुक्तास्तदा स्मितसुधामधुराः कटाक्षाः ॥

विभूषणादीनामनादरविन्यासो विच्छित्ति र्यथा,—

अङ्गानि चन्दनरजःपरिधूसराणि
ताम्बूलरागसुभगोऽधरपल्लवश्च ।
अच्छाञ्जने च नयने वसनं तनीयः
कान्तासु भूषणमिदं विभवश्च शेषः ॥

विभूषणादीनामस्थानप्रयोगो विभ्रमो यथा,—

चकार काचित् सितचन्दनाङ्के
काञ्चीकलापं स्तनभारपृष्ठे ।
प्रियं प्रति प्रेषितचित्तवृत्तिः
नितम्बबिम्बे च बभार हारम् ॥

स्मितहसितरुदितादीनां हर्षादसकृदेकीकरणं किलकिञ्चितं यथा,—

पाणिपल्लवविधूननमन्तःसीत्कृतानि घनरोमविभेदाः ।
योषितो रहसि गद्गदवाचा मस्त्रतामुपययु र्मदनस्य ॥

इष्टजनकथायां तद्भावभावनोत्थितविकारो मोट्टायितं यथा,—

तव सा कथासु परिघट्टयति श्रवणं यदङ्गुलिमुखेन मुहुः ।
घनतां ध्रुवं नयति तेन भवद्गुणपूगपूरितमतृप्ततया ॥

केशस्तनाधरादिग्रहणाद् दुःखेऽपि सुखबुद्धिचेष्टा कुट्टमितं यथा,—

स्त्रीभरादघनतं परिरम्भे रागवानवटजेष्ववशश्च ।

खणमेत्तमपि ण फिट्टइ अणुदिअहदिण्णगरुअसंतावा।
पच्छण्णपावसङ्क व्व सामलीमज्झहिअआ हि॥

वाञ्छति यथा,—ए मेअअकअउणा अप्पत्तमणोरहा विवज्जिस्सं।
जणवाओ वि ण जाओ तेण समं हलिअउत्तेण॥

द्वेष्टि यथा,—गोत्तक्खलणं सोऊण पिअअमे अज्ज मामिच्छणदिअहे।
वज्झमहिसस्स मालव्व मण्डणं से ण पडिहाइ॥

प्रयतते यथा,—अनुगच्छन् मुनितनयां सहसा विनयेन वारितप्रसरः।
स्वस्थानादचलन्नपि गत्वेव पुनः प्रतिनिवृत्तः॥

अवैति यथा,—चन्दसरिसं मुहं से सरिसो अमअस्स मुहरसो तिस्सा।
सकअग्गहरहसुज्जलचुम्बणं कस्स सरिसं से॥

मन्यते यथा,—परिवट्टइ विअलिअं सइ मंडलिअकुसुमाउहं व अणंगं।
विरहम्मि मआइ हरीणाहे अणत्थे पडिउत्थिअं मिअंकं॥

वक्ति यथा,—बालाओ मा दिज्जउ लोअविरुद्धं त्ति नाम काऊण।
समुहा पडिए कोविरिए वि दिट्ठिं ण पाडेइ॥

चेष्टते यथा,—अज्ज मए गन्तव्वं घणंधआरम्मि तस्स सुहअस्स।
अज्जा णिमीलिअच्छी पअ पडिवाडिघरे कुणइ॥

सत्त्वादिषु स्वेदरोमाञ्चवेपथवो यथा,—
दिट्ठे जं पुलइज्जसि रइ घरसि पिअम्मि जं समासण्णे।
तुह संभासणसेओल्लिअंमणे किं वि णिज्जिहसि॥

अश्रु यथा,—णअणब्भंतरघोलंतवाहभरमन्थराए दिट्ठीए।
पुणरुत्तपेच्छरीए बालअ किं जं ण भणिओसि॥

हर्षो यथा,—
सम्मसुम्मि विइट्ठे सहवि ऊ हिअअस्स णिव्वुदि ओ मे।
जं तेण णअरउाहे हत्थाहत्थि कुणन्ते गहिओ॥

अमर्षो यथा,—कत्तो संपडइ मई पिअसहि पिअसङ्गमो पओसे वि।
जं जिअइ गहिअकरणिअरखिखिरीचन्दचण्डालो॥

लीलादिषु प्रियजनचेष्टाऽनुकृतिर्लीला यथा,—

जं जं करेसि जं जं जम्पसि जं जं णिअच्छेसि।
तं समणुसिक्खिरीए दीहो दिअहो ण संपड़इ॥

नेत्रभ्रूवक्त्रकर्मणां विशेषेण लसनं विलासो यथा,—

सभ्रूविलासमथ सोयमितीरयित्वा
संभ्रत्यभिन्नमिव मामवलोक्य तस्याः।
अन्योन्यभावचतुरेण सखीजनेन
मुक्तास्तदा स्मितसुधामधुराः कटाक्षाः॥

विभूषणादीनामनादरविन्यासो विच्छित्तिर्यथा,—

अङ्गानि चन्दनरजःपरिधूसराणि
ताम्बूलरागसुलभोऽधरपल्लवश्च।
अच्छाञ्जने च नयने वसनं तनीयः
कान्तासु भूषणमिदं विभवश्च शेषः॥

विभूषणादीनामस्थानप्रयोगो विभ्रमो यथा,—

चकार काचित् सितचन्दनाङ्के
काञ्चीकलापं स्तनभारपृष्ठे।
प्रियं प्रति प्रेषितचित्तवृत्तिः
नितम्बबिम्बे च बभार हारम्॥

स्मितरुदितहसितादीनां हर्षादसकृदेकीकरणं किलकिञ्चितं यथा,—

पाणिपल्लवविधूननमन्तःसीत्कृतानि घनरोमविभेदाः।
योषितां रहसि गद्गदवाचा मस्त्रतामुपययुर्मदनस्य॥

इष्टजनकथायां तद्भावभावनोत्थितविकारो मोट्टायितं यथा,—

तव सा कथासु परिघट्टयति श्रवणं यदङ्गुलिमुखेन मुहुः।
घनतां ध्रुवं नयति तेन भवद्गुणपूगपूरितमतृप्ततया॥

केशस्तनाधरादिग्रहणाद् दुःखेऽपि सुखबुद्धिचेष्टा कुट्टमितं यथा,—

क्षौमराद्वनतं परिरम्भे रागवानवटजेष्ववरुध्य।

चर्चितोष्ठदलमाननपद्मं योषितो मुकुलिताक्षमधासीत्॥

अभीष्टप्राप्तावभिमानगर्वसम्भावनाऽनादरस्ततो विकारो बिब्बोको यथा,—

निर्विभुज्य दशनच्छदं ततः वाचि भर्तुरवधीरणापरा।
शैलराजतनया समीपगां आललाप विजयामहेतुकम्॥

सुकुमारतया करचरणाङ्गन्यासो ललितं यथा,—

गुरुतरकलनूपुरानुरावं सुललितनर्त्तितवामपादपद्मा।
इतरदनतिलोलमादधाना पदमथ मन्मथमन्थरं जगाम॥

वक्तव्यसमयेऽपि वचसाऽनभिधाय क्रियाऽनुष्ठानं विहृतं यथा,—

पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम्।
सा रञ्जयित्वा चरणौ कृताशीः माल्येन तां निर्वचनं जघान॥

बाल्यकौमारयौवनसाधारणो विहारविशेषः क्रीडितं यथा,—

मन्दाकिनीसैकतवेदिकाभिः सा कन्दुकैः कृत्रिमपुत्रकैश्च।
रेमे मुहुर्मध्यगता सखीनां क्रीडारसं निर्विशतीव बाल्ये॥

क्रीडितमेव प्रियतमविषये केलि यथा,—

व्यपोहितुं लोचनतो मुखानिलैः अपारयन्तः किलपुष्पजं रजः।
पयोधरेणोरसि काचिदुन्मनाः प्रियं जघानोन्नतपीवरस्तनी॥

हेलादिषु रागतः सहसा प्रवर्त्तिहेतु चित्तोल्लासो हेला। सा स्त्रियां यथा,—देहइ पिअपरिरम्भणपसारिअं सुरअमंदिरद्दारे।
हेलाहलहलिअथोरयणहरे भुअलआकअलम्॥

सैव पुरुषे यथा,—

उत्क्षिप्तान्या रतान्ते भरसुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विलुलितकबरीभारमंसे वहन्त्याः।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु॥

हेलैव सवचनविन्यासो हावः॥ स स्त्रियां यथा,—

जइ ण छिवसि पुप्फवइं पुरओ ता कीस वारिओ ठासि।

छिन्तो सि सुलुसुलन्तो हिं पहाविळणमइ हत्थे हि ॥

स एव पुरुषे यथा,—

लोओ झूरइ झूरउ वअणिज्जं होइ होउ तं णाम।

एहि णिसिज्ज सुपासे पुप्फवइण एइ मे णिद्दा ॥

आदिग्रहणेन भावादयो गृह्यन्ते। तेषु भावः स्त्रियां यथा,—

तावच्चिअ रइसमए महिलाणं विब्भमा विराअन्ति।

जाव ण कुबलअदलसच्छाहाइं मउलन्ति णअणाइं ॥

व्याजः पुंसो यथा,—

अलिअपसुत्तविणिमीलिअच्छ दे सुहअ मज्झ ओआसं।

गण्डपरिउम्बणापुलइअं गण्ड ण्णो चिराइस्सं ॥

विस्रम्भभाषणं स्त्रियां यथा,—

जाओ सो वि विलक्खो मए विहसिऊण गाढमुवऊढो।

पढमो पसरिअस्स णिअंसणस्स गण्ठिविमग्गन्तो ॥

चाटुः स्त्रीपुंसयो र्यथा,—

एक्कं पहरुव्वाअं हत्थं मुहमारुएण वीअन्तो।

सो वि हसन्तीए मए गहिओ वीएण कण्ठम्मि ॥

प्रेमाभिसन्धानं पुंसो यथा,—

केलीगोत्तक्खलणे वरस्स पप्फुल्लइन्दिं हिन्देइ।

वह्लवासअवासहरे वह्लए वाहोल्लिआ दिट्ठी।

परिहासः स्त्रियां यथा,—

अइ दिअर किं ण पेच्छसि आआसं किं मुहा पलोएसि।

जाआए वाहुमूलम्मि अद्धअंदाण परिवाडिं ॥

कुतूहलं पुंसो यथा,—

असमत्तमण्डण च्चिअ वच्चघरं सेसकोउहल्लस्स।

वोलाविआ हलहलस्स पुत्ति चित्तेण लग्गिहिसि ॥

चकितं स्त्रिया यथा,—

णवलइआ पहाइं तुट्ठाए तं कअं किंपि हलिअसोण्हाए।
जं अज्जवि जुअइजणो घरे घरे सिक्खिउं भमइ ॥

हेला भावश्च हावश्च व्याजो विस्रम्भभाषणम् ॥
चाटुप्रेमाभिसन्धानं परिहासः कुतूहलम् ॥ १९८ ॥
चकितञ्चेति निर्दिष्टा चेष्टाः काश्चिद् विलासिनाम्।
शेषाणां विप्रलम्भादौ रूपमाविर्भविष्यति ॥ १९९ ॥

तत्र नायकयोः प्रागसङ्गतयोः सङ्गतयोश्च सङ्गतवियुक्तयोर्वा मिथोदर्शनश्रवणाभ्यामवस्थिताभिमानजन्मा परस्परानुरागो वा अभिलषणीयालिङ्गनादीनामनवाप्तौ सत्यां समुपजायमाने स्वे औत्सुक्यादिभिर्व्यभिचारिभावैः मनोवाग्बुद्धिशरीरारम्भजन्मभिश्चानुभावैरनुबद्धः प्राप्तप्राप्यप्रकर्षावस्थो विप्रलम्भशृङ्गाराख्यां लभते। स चतुर्द्धा पूर्वानुरागो मानः प्रवासः करुणश्च ॥ तेषु प्रागसङ्गतयोः पूर्वानुरागः पुरुषप्रकाण्डे यथा,—दूरं मुक्तालतया बिसस्मितया विप्रलभ्यमानो मे।
हंस इव दर्शिताशो मानसजन्मा त्वया नीतः ॥

अत्र पुण्डरीकस्य महाश्वेतायां प्रागसङ्गतायां सङ्कल्परमणीयोऽभिलाषस्वादनवाप्तौ उक्तप्रकारेण प्रकृष्यमाणः त्वया स मानसजन्मा दूरं नीत इत्युन्मादकामावस्थया प्रकाश्यते ॥ स एव स्त्रीप्रकाण्डे यथा,—

दुल्लहजणाणुराओ लज्जा गरुई परवसो अप्पा।
पिअसहि विसमं पेम्मं मरणं सरणं णवरि एक्कं ॥

अत्रापि प्राग्वदेव सागरिकायाः वत्सराजेऽनुरागः प्रकृष्यमाणो मरणं शरणमित्युन्नतस्यैव कामावस्थया कथ्यते ॥ सङ्गतयोर्मानः स निर्हेतुर्यथा,—पच्चक्खहसणं रणपसिज्जाण अलिअवअणणिव्वन्धे।
उम्मच्छरसन्तावो पुत्तअ पअवी सिणेहस्स ॥

अत्र प्रेमगतेः स्वभावकौटिल्याद्धेतुमन्तरेणोपजायमानो निर्हेतुरुच्यते ॥
स एव सहेतुर्यथा,—

पडिउल्लिआ ण जंपइ गहिआ विप्फुरइ चुम्बिआ रुसइ।

तुण्हिं भुआ णववज्झआ काआ वण्हेण दङ्ढण्ण॥

अत्र यद्यपि आलिङ्गनादेर्मेति नेत्यादिभिः प्रतिषेधो न विद्यते तथापि तदर्थोऽस्त्येव इति मानलक्षणं घटते॥ सङ्गतवियुक्तयोः प्रवासः सनवानुरागो यथा,—

प्रियमाधवे किमसि मय्यवत्सला ननु सोऽहमेव यमनन्दयत् पुरा।
स्वयमागृहीतकमनीयकङ्कणः सखि मूर्त्तिमानिव महोत्सवः करः॥

अत्र विवाहानन्तरमेव मालत्याः कपालकुण्डलयापहारात् माधवमालत्योरयं नवानुरागः प्रवास इत्युच्यते॥ स एव प्रौढानुरागो यथा,—

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलायां
आत्मानं ते चरणपतितं यावदिच्छामि कर्त्तुम्।
अस्रैस्तावत् मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः॥

अत्र प्राचीनप्रणयप्रसादनादिभिरनुरागस्य प्रौढिरवगम्यते॥ सङ्गतयोरेवान्यतरव्यपाये करुणः। स स्त्रीव्यपाये पुरुषस्य यथा,—

ध्रुवमस्मि शठः शुचिस्मिते कलितः कैतववत्सलस्त्वया।
परलोकमसन्निवृत्तये यदनामन्त्र्य गतासि मामितः॥

अत्र अजेरिन्दुमतीव्यपायादजस्य दुःखातिशयः करुण उच्यते॥ स एव पुरुषस्य व्यपाये स्त्रिया यथा,—

हृदये वससीति मत्प्रियं यदवोचस्तदवैमि कैतवम्।
उपचारपदं न चेदिदं त्वमनङ्गः कथमक्षता रतिः॥

अत्र अनङ्गविषये रतेः शोकप्रकर्षात् करुण इत्याख्यायते॥ हीनपात्रादिषु चैतदाभासा भवन्ति॥ तत्र हीनपात्रेषु पुंसि प्रेमानुरागो यथा,—

कअलीगब्भसरिच्छे ऊरू दट्ठूण हलिअसोण्हाए।
उल्ललइ ण्हवन्ताणचाद्दैलस्स सेउल्लिअकरस्स॥

अत्रैव स्त्रियां मानो यथा,—

पढमघरिणी असमत्तं तुअ पिण्डारे दरकुण्णंतम्मि।

पाअबड्ढआइ सरीसं सव्वङ्गिअ वच्छआ सुका ॥

तिर्य्यक्षु पचिषि प्रवासो यथा,—

आपृच्छामि व्यथयति मनो दुर्बला वासरश्रीः
एह्यालिङ्ग चपय रजनीमेकिका चक्रवाकि।
नान्यासक्तो न खलु कुपितो नानुरागच्युतो वा
दैवाधीनः सपदि भवतीमस्ततन्त्रस्त्यजामि ॥

अत्रैव करिणीकरुणो यथा,—

नान्तर्वर्त्तयति ध्वनत्सु जलदेष्वामन्द्रमुद्गर्जितं
नासन्नात् सरसः करोति कवलानावर्ज्जितैः शैवलैः।
दानजानिविपन्नमूकमधुपव्यासङ्गदीनाननो
नूनं प्राणसमावियोगविधुरस्तम्बेरमस्ताम्यति ॥

अथ सम्भोगः ॥ तत्र नायकयोः प्रागसङ्गतयोः सङ्गतिविमुक्तयोर्वा मिथः समागमे प्रागुत्पन्न स्तदानीन्तनो वा रत्याख्यः स्थायिभावः अभिलषणीय्यालिङ्गनादीनामवाप्तौ सत्यां समुपजायमानैः हर्षधृतिस्मृतिमतिप्रभृतिभि र्व्यभिचारिभावैः संसृज्यमानः चन्द्रोद्यानोपगमजलक्रीड़ापर्व्वतोपदेशप्रसाधनग्रहणमधुपानेन्दूदयादिभिरुद्दीपनविभावैरुद्दीप्यमानः सविभ्रमभ्रूकटाक्षविक्षेपालापसस्मितादिभिरनुभावैरभिव्यज्यमानः ईप्सितमासादयन् जिहासितञ्चाजिहानः प्राप्तप्राप्यप्रकर्षारम्भः सम्भोगशृङ्गाराख्यां लभते। स चतुर्धा प्रथमानुरागानन्तरः मानानन्तरः प्रवासानन्तरः करुणानन्तर इति ॥ तेषु प्रथमानुरागानन्तरो यथा,—

पाणिग्गहणे च्चिअ पव्वईअ णाअं सहीहि सोहग्गं।
पसुवइणा वासुइकङ्कणम्मि ओसारिए दूरं ॥

मानानन्तरो यथा,—

उज्झइ दूइअगहिआहरोट्ठभिज्जं सरोसमोइण्णाअं।
पाणोसरं तमइरं चसअं व णिअं मुहं वाला ॥

प्रवासानन्तरो यथा,—

मङ्गलवलअं जीअं व रक्खिअं जं पउत्थिआअ वहूआए।
पत्तपिअदंसणसिअवाळुलइआए तम्भिए॥

करुणानन्तरो यथा,—

पमुअम्मि सुए विपिए दिट्ठो ढणं पिअअमो जिअन्तीए।
दूआ लज्जा अ महरिज्जासो तीए हिअए ण संमाइ॥

तेऽमी चत्वारोऽपि सम्भोगाः चतुर्भिरेव विप्रलम्भैः प्रकर्षमापद्यन्ते।
तेषु प्रथमानुरागेण यथा,—

दूरं येन न निन्द्यते न मधुरं दूतीवचः श्रूयते
नालापा निपतन्ति वाष्पकलुषा नोपैति कार्श्यं वपुः।
स्वाधीनामनुकूलिनीं निजवधूमालिङ्ग्य यत्सुप्यते
तत्किं प्रेम गृहाश्रमव्रतमिदं कष्टं समाचर्यते॥

मानेन यथा,—

रइविग्गहम्मि कुण्ठीकआओ धाराओ पेम्मखग्गस्स।
अणमआइं व सिज्जंति मानसाइं पाइं मिहुणाणं॥

प्रवासेन यथा,—शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
मासानेतान् गमय चतुरो लोचने मीलयित्वा।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु॥

करुणेन यथा,—

न मर्त्यलोकस्त्रिदिवात् प्रहीयते म्रियेत नार्यं यदि वल्लभो जनः।
निवृत्तमेव त्रिदिवप्रयोजनं मृतः स चेज्जीवत एव जीवति॥

तिर्यगादिषु चैतदाभासा भवन्ति। तेषु सरीसृपपक्षिणोः यथा,—

मधुद्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्त्तमानः।
शृङ्गेण संस्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः॥

पशुपक्षिणो यथा,—

ददौ सरःपङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः।

अर्धोपभुक्तेन बिसेन जायां सम्भावयामास रथाङ्गनामा ॥

किन्नरेषु यथा,—

गीतान्तरेषु श्रमवारिलेशैः किञ्चित् समुच्छ्वासितपत्रलेखम्
पुष्पासवाघूर्णितनेत्रशोभि प्रियामुखं किम्पुरुषश्चुचुम्बे ॥

तरुषु यथा,—

पर्य्याप्तपुष्पस्तवकस्तनाभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः ।
लतावधूभ्य स्तरवोऽप्यवापुः विनम्रशाखाभुजबन्धनानि ॥

विप्रलम्भचेष्टासु प्रथमानुरागे स्त्रिया यथा,—

पेच्छइ अलद्धलच्छदीहं णीससइ सुस्सअं हसइ ।
जह जंपइ अप्फुड़न्तं तह से हिअअट्ठिअं किम्पि ॥ पुंसो यथा,—
सो तुह कएण सुंदरि तह च्छीणो सुमहिलओ हलिअउत्तो ।
जह सेमच्छरिणी अविदोव्वजाआइ पड़िवणं ॥

माने स्त्रियाः यथा,—

कत्तु,त्तुआ वगाइ सा ध्वज्ज तए कआ वराहेण ।
जम्भाइआरुकुखपलोअइआइं दिअहेण सिक्खविआ ॥

पुंसो यथा,—

अविभाविअरआणिमुहं तस्स असम्पुरिअविमलचन्द,ज्जोअं ।
जाअं पिआ विरोहे वड्ढन्ताणुसआ मूढ़लकुरुहिअअं ॥

प्रवासे स्त्रिया यथा,—

पिअसंभरणपल्लोट्टन्तवाहधाराणिवाअभीआए ।
दिज्जवङ्कगीवाइ दीवओ पहिअजाआए ॥

पुंसो यथा,—मज्झण्हपत्थिअस्स वि गिम्हे पहिअस्स हरइ संतावं ।
हिअअट्ठिअजाआमुहमिअंकजोण्हाजलप्पवहो ॥

करुणे स्त्रिया यथा,—

णवरि अपसारिअगीरअभरिउय्याहपुड्ढसेणोविंधा पड़िला ।
चरसंदाणिअसहिअलचवालइमत्यणी जणअसुआ ॥

पुंसो यथा,—अन्तोहुत्तं डज्झइ जाआसुण्णे घरे हलिअउत्तो।
उक्खित्तणिहाणाइं व रमिअट्ठाणाइं पेक्खन्तो॥
एवमन्यत्रापि॥ करुणवर्जं स्त्रिया यथा,—
सौधादुद्विजते त्यजत्युपवनं द्वेष्टि प्रभामैन्दवीं
द्वारात् त्रस्यति चित्रकेलिसदसो वेषं विषं मन्यते।
आस्ते केवलमब्जिनीकिसलयप्रस्तारशय्यातले
सङ्कल्पोपनतत्वदाकृतिरसायत्तेन चित्तेन सा॥
स्त्रिया एव प्रथमानुरागवर्जं यथा,—
तिष्ठ द्वारि भवाङ्गणे व्रज बहिः स प्रेति वर्त्मावते
शालामत्र तमङ्गमत्र वलभीमत्रेति वेश्मास्वति।
दूतीं सन्दिश सन्दिशेति बहुशः सन्दिश्य सास्ते तथा
तल्पे कल्पमयीव निर्घृण यथा नान्तं निशा गच्छति॥
प्रथमानुरागवर्जं पुंसो यथा,—
रम्यं द्वेष्टि पुरा यथा प्रकृतिभि र्न प्रत्यहं सेव्यते
शय्योपान्तविवर्तनै र्विगमयत्युन्निद्र एव क्षपाः।
दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
गोत्रेषु स्खलितस्तदा भवति स व्रीडाविलक्षश्चिरम्॥
पुंस एव प्रवासकरुणयो र्यथा,—
सीता वेश्म यतो निरीक्ष्य हरते दृष्टिं झटित्याकुलाम्
अन्योन्यार्पितचञ्चुदत्तकवलैः पारावतै र्भूयते।
इन्दो र्दूरत एव नश्यति विशत्यन्तर्गृहं दुःखितः
प्रच्छाद्याननमञ्चलेन रजनीष्वस्तत्रपं रोदिति॥
सम्भोगचेष्टासु पूर्वानुरागानन्तरे चुम्बनं यथा,—
आअरपणामिओट्ठं अघडिअणासं असंवलिअणिडालं।
वण्णघअलुप्पमुहीए तीए परिउम्बणं भरिमो॥
अत्रैवालिङ्गनं यथा,—

तावमवणेइ ण तहा चन्दणपङ्को वि कामिमिहुणाणं ।
जह दूसहे गिह्मे अणोण्णालिङ्गणसुहेल्ली ॥

मानानन्तरे चुम्बनं यथा,—

जह जह से पडिउत्थइ राया भरियाइ णिड्डवणे दइओ
अच्छीइं उवरि उवरि तह तह मिणाइं विगलन्ति ॥

अतैवालिङ्गनं यथा,—

माणदुमपरुसपवणस्स भामिसन्नंगणिग्गुहिअरस्स।
उवऊहणस्स भद्दं रइणाडअपुव्वरङ्गस्स ॥

प्रवासानन्तरं चुम्बनं यथा,—

दीनचिन्ताधुरसुलभरागं वाम्यतममधिकं विरहेषु ।
ओष्ठपल्लवमपास्य मुहूर्त्तं सुभ्रुवः सरसमधि चुचुम्बे ॥

करुणानन्तरमालिङ्गनं यथा,—

चन्द्रापीडं सा च जग्राह कण्ठे कण्ठस्थानं जीवितञ्च प्रपेदे ।
तेनापूर्वां सा समुल्लासलक्ष्मीमिन्दुं स्पृष्ट्वा सिन्धुवेलेव भेजे ॥

प्रथमानुरागानन्तरं दशनक्षतं यथा,—

पासं व सा कवोले अज्ज वि तुह दन्तमण्डलं बाला ।
उब्भिण्णपुलअपरिवेढपरिगअं रक्खइ वराही ॥

तदेव मानानन्तरे यथा,—

पणुव्वे सिअसाङ्कलिलए वसहिअदन्तमण्डले ॥
ऊरुचटुआरम्भं माइ पुत्ति जणहासिअं कुणसु ॥

प्रवासानन्तरे दन्तक्षतादयो यथा,—

दन्तक्खयं कवोले अ गाढव्वेल्लिओ अ धम्मिल्लो ॥
पडिवुग्गिरा अ दिट्ठी पिआगमं साहइ वहूए ॥

प्रथमानुरागानन्तरे नखक्षतं यथा,—

अम्माइ णवणहक्खअणिरिक्खणे गरुअजोव्वणुत्तुङ्गं ।
पडिमागअणिअणअणुप्पलं पिअं होइ थणवट्टं ॥

अंतेव पुरुषायितं यथा,—

दरवेविरोवजुअलासु मउलिअच्छीसु ललिअचिउरासु।
पुरुसाइरीसु कामो पिआसु सज्जाउहो वसइ॥

सर्वं सर्वत्र यथा,—

पोढ़महिलाणं जं जं सुट्ठसिक्खिअं तं रइए सुहावेदि।
जं जेण अ सिक्खिअं णववहूणं तं तं रइं देइ॥

विप्रलम्भपरीष्टिष्वभियोगतः प्रेमपरीक्षा यथा,—

हंहो कण्णुल्लीणा भणामि रे सुहअ किम्पि भासुर।
निज्जणपारद्धासु कइं पि पुणो हिं लद्धोसि॥

प्रत्यभियोगतो यथा,—

गोलाविसमोआरच्छलेण अप्पा उरम्मि से मुक्को।
अणुअम्पाणिद्दोसं तेण वि सा गाढ़मुवऊढ़ा॥

विपक्षणेन यथा,—

अज्ज वि सेअजलोल्लं पव्वाइ ण तीअ हलिअसोण्हाए।
फग्गुच्छणचिक्खिल्लं जं तइ दिण्णं त्थणुच्छङ्गे॥

विसर्जनेन यथा,—

सत्तोञ्चिअणेति कहा किआ सन्ति रत्तिं रत्तिं समल्लन्ति।
किं मणे मारच्छाए ण जुआणो इमो गामो॥

यज्ञमानेन यथा,—

तेण इरणवलआए दिण्णो पहरो इमीअ त्थणवट्टे।
गामतरुणीहिं अज्ज वि दिअहं परिवाजिआ भमइ॥

मायया यथा,—सा तइ सहत्थदिण्णं फग्गुच्छणकद्दमं त्थणुच्छङ्गे।
परिकुविआ इव साहइ सलाहिरी गामतरुणीणं॥

इङ्गितेन यथा,—तइ सो ण वल्लहच्चिअणामगाहणेण तस्स सहि कीम।
रोइ मुहं ते रविअरफंसविसट्टं व तामरसं॥

दूतसम्प्रेषणेन यथा,—

सेउल्लिअसव्वङ्गी णामग्गहणेण तस्स सुहअस्स ।
दूइं अप्पा हेन्ती तस्से अ घरगणं पत्ता ॥ दूतप्रश्नेन यथा,—
कह णु गआ कह दिट्ठा किं भणिआ किं च तेण पडिवण्णं ।
एअं चिअ ण समप्पइ पुणरुत्तअंपमाणीए ॥

लेखविधानेन यथा,—
वेविरिसि स्स करङ्गुलि परिग्गहक्खलिअलेहणीमग्गे ।
सोत्थि च्चिअ ण समप्पइ पिअसहिलेहम्मि किं लिहिमो ॥

लेखवाचनेन यथा,—
प्रीत्या स्वस्ति पदं विलोकितवती स्थानं श्रुतं तुष्टया
पश्चाज्ज्ञातमनुक्रमेण पुरतस्तत् तावकं नामकम् ।
तन्वङ्ग्या संमदनिर्भरेण मनसा तद्वाचयन्त्या मुहु-
र्न प्राप्तो घनवाष्पपूरितदृशा लेखेऽपि कण्ठग्रहः ॥

सम्भोगपरीष्टिषु प्रथमानुरागानन्तरे साध्वसेन पुंसो यथा,—
लीलाइअणिअसणे रक्खउ तं राहिआइ थणवट्टे ।
हरिणोपढमसमागमसज्झसवरेहिं वेविरो हत्थो ॥

अत्रैव दोहदेन मुग्धाया यथा,—
किं किं दे पडिहासइ सहीहिं इअ पुच्छिआए मुद्धाए ।
पढमुल्लअदोहलिणीए णवरि दइअं गआ दिट्ठी ॥

अत्रैव प्रगल्भयाः प्रियवाक्यवर्णनं यथा,—
ऊं ऊ ह्रे भणसु पुणो ण सुअन्ति करेइ कालविक्खेवं ।
घरिणोहिअअसुहाइं पइणो कण्णे भणन्तस्स ॥

मानानन्तरे स्त्रियाः कैतवस्वप्ने यथा,—
अरिमो से सअणपरम्मुहीए विअलन्तमाणपसराए ।
कइअवसुत्तुव्वत्तणत्थणहरप्पेल्लणसुहेल्लिं ॥

स्त्रिया एव सखीवाक्यस्याक्षेपेण यथा,—
भिउडीहिं पलोइस्सं णिब्भच्छिस्सं परम्मुही होस्सं ।

जं भणइ तं करिस्सं सहिओ जइ तं ण पेच्छिस्सं ॥

तस्या एव तदनुष्ठानविघ्नेन यथा,—

ग्रन्थिमुद्ग्रथयितुं हृदयेशे वाससः स्पृशति मानधनायाः।
भ्रूयुगेन सपदि प्रतिपेदे रोमभिश्च सममेव विभेदः ॥

प्रवासानन्तरे स्त्रिया यथा,—

अत्थक्का गअच्छिअए वल्लहा दइअउम्मिजणपुरओ।
भुरइ विअंलताणं हरिसविसट्ठाणवलआणं ॥

अत्रैव स्त्रीपुंसयो र्यथा,—

रमिऊण पइम्मि गए जाहे अवगूहिअ पडिणिउत्तो।
अहअं पउत्थ पइअ व्व तक्खणं सोपवासिव्व ॥

सामान्यत एव प्रवाससाध्वसेन स्त्रिया यथा,—

होन्त पहिअस्स जाआ आउच्छणजीवधारणरहस्सं।
पुच्छन्ती भमइ घरं घरेण पिअविरहसहिरीआ ॥

प्रवासविलम्बेनैव पुंसो यथा,—

एक्को वि कालसारो ण देइ गन्तुं पआहिण वसन्तो।
किं उण बाहाउलिअं लोअणजुअलं मअच्छीए ॥

परिहारे स्वेदादिभिः स्त्रिया यथा,—

उल्लाअइ से अङ्गं जरू वेवन्ति कूवलो गलइ।
छुच्छुराले हिअअं पिआगमे पुप्फइआइए ॥

करुणान्तरं पुंसो यथा,—

करस्पर्शारम्भोत्पुलकितपृथूरोजकलशे
अमाग्गो वामार्धे वहति मदनाकूतसुभगम्।
विभो वारं वारं सतसमयिकोद्घूननविधे-
स्तनौ भस्मस्नानं कथमपि समाप्तं विजयते ॥

विप्रलम्भनिरुक्तिषु प्रथमानुरागे प्रतिश्रुत्यादानं यथा,—

किं ण भणिओ सि बालअ गामणिधूआए गुरुअणसमक्खं।

अणिमिसमक्कवलं तथ्यणणण्यणहृदिट्ठेहिं ॥

अत्र वर्त्तिचितादिभिः प्रतिश्रुत्यालिङ्गनादयः स्त्रीभयादिभिर्न दीयन्ते॥ माने विसंवादनं यथा,—

णुन्न णाइं कुविआ उवऊहसु किं मुहा पसाएसि।
तुह मण्णुसमुप्पण्णेण मज्झ माणेण वि ण कज्जं॥

अत्र मानिनी पूर्वमालिङ्गनादीन् निषिध्य पश्चादयथावत् प्रयच्छति यथा कश्चित् अष्टशतं प्रदास्यामि इति प्रतिश्रुत्य अष्टाभिरधिकं शतं प्रयच्छति न तु अष्टौ शतानि इति। तदेतद् व्यलीकविप्रयोगादिभि-रालिङ्गनादीनां निराकरणमयथावत् प्रदानत्वाद् विसंवादनमेवो-च्यते॥ प्रवासे कालहरणं यथा,—

एहि इसो पउत्थो अहअं कुप्पेज्ज सो अणुणेज्ज।
इअ कस्स वि फलइ मणोरहाण माला पिअअमम्मि॥

अत्र आलिङ्गनादीनां स्यत्नैव कालहरणप्रतीतिः॥ करुणे प्रत्यादानं यथा,—समसोक्खदुक्खपरिवड्ढिआण कालेण रूढपेम्माणं।
मिहुणाणं मरइ जं तं खु जिअइ इअरं मुअं होइ॥

अत्र-सुहृदिव प्रकटय्य सुखप्रदः प्रथममेकरसामनुकूलताम्। पुनरकाण्ड-विवर्त्तनदारुणः प्रविशिनष्टि विधिर्मनसो रुजम्॥ इत्ययमर्थः सम्बध्यते। तदत्र च प्रत्यादानमेवार्थो भवति॥ प्रथमानुरागे वञ्चनमात्रं विविधं यथा,—दिट्ठाए जं ण दिट्ठा आलविआए वि जं ण आलत्तो।
उवआरो जं ण कओ तं चिअ कलिअं छइल्लेहिं॥

अत्र व्रीडादिभिर्दर्शनादिभिर्वैविध्यं प्रतीयते॥ माने विरुद्धं यथा,—

ण मुअन्ति दीहसासे ण रुअन्ति ण होन्ति विरहकिसिआओ।
धण्णाओ ताओ जाणं बहुवल्लह वल्लहो ण तुमं॥

अत्र ईर्ष्यायितादिभिर्यस्मभालिङ्गनादिविरहे मानवती वञ्चते॥ प्रवासे व्याविद्धं यथा,—

कइ आगओ पिओ अज्जपुत्ति अज्जेअ कइ दिणा होंति।

एक्को एहहमेत्तो भणिअं मोहं गआ वाला ॥

अत्र एकत्रापि दिवसस्य वर्ण्यमानतया प्रियालिङ्गनादिवर्ज्जनया विशेषतो द्वैधं प्रतीयते ॥ करुणे निषिद्धं यथा,—

आवाअभअअरं विअ ण होइ दुक्खस्स दारुणं अवसाणं।

थाह जिअन्तीए]मए दिट्ठं सहिअं अ तुह दुःखं अवसाणं ॥

तदेतद्रामविषये सीतायाश्चिरार्शसितसमागमसुखावाप्तिमयरूपं वचनं करुणमिति निषिध्यते ॥ प्रथमानुरागेण सह रागो यथा,—

सा मइइ तस्स एहाउं अणुसोत्ते सा वि से समुम्बहइ।

त्थणवट्टभिडणविलुलिअकल्लोलमहग्घिए सलिले ॥

अत्र युष्ययो र्द्वयोरपेत्रकालमन्योन्यानुरागः प्रतीयते। तत्रैका लावण्यादिना रज्यते द्वितीयस्तु स्नेहादिना रज्यत इति ॥ तत्रैव पश्चाद्यथा,—मामि हिअअं व पीअं तेण जुआणेण मज्जमाणाए।

एहाणहलद्दाकलुअं अणुसोत्तजलं पिअंतेण ॥

अत्रैकस्यानुरागं दृष्ट्वा पश्चाद् द्वितीयो रज्यते ॥ तत्रैवानुरूपं यथा,—

सच्चं जाणइ दट्ठुं सरिसम्मि जणम्मि जुज्जए राओ।

मरउ ण तुमं भणिस्सं मरणं पि सलाहणिज्जं से ॥

अत्र न केवलं लावण्यादिनैव रज्यते किं तर्हि अनुरूपविषयिणाभिलाषेणापीति प्रतीयते ॥ तत्रैवानुगतो यथा,—

गहवइसुएण समअं सच्चं अलिअं व किं विआरेइ।

धण्णाइ हलिअकुमारिआइ ठाणम्मि जणवाओ ॥

अत्र यद्यपि सौभाग्यादिप्रसिद्धितमानुरूप्यं न विद्यते तथापि स्त्रिया उत्तमप्रार्थनमगर्हितत्वादनुगतमेव भवति। सोऽयं करणसाधारणसाधनोत्पत्तिपक्षे उक्तः। भावसाधनपक्षे तु सर्वत्र सहार्थादिविशिष्टे रति र्दीप्ति र्वानुरागशब्देनोच्यते। प्रथमं चोपजायमानत्वादयं प्रथमानुराग इति ॥ प्रथमतो मानः मान्यते येनेति। यथा,—

माणपमइणाण मुद्धे रइसवलामोडिअवाण।

दंसणमेत्तपसिज्जरिचुक्का वङ्कश्चा ण सोक्खाण ॥

अत्र मान पूजायामिति धातोः स्वार्थे णिजन्तात् णिचि प्रज्ञि म मान इति रूपम्। स हि प्रेयांसमस्राः पादपतनादिपूजायां प्रयो-जयति ॥ यं प्रियत्वेन मन्यते यथा,—

कारणगहिओ वि मए माणो एमेअ जं समो सरिओ।

अत्थक्कपुह्लिअं कोल तुम्भ तं मत्थए पडउ ॥

अत्र मन ज्ञाने इति धातुः। तथाहि मानं प्रियत्वेन मन्यमाना मद-पक्षाविर्णोऽङ्कोल्लाय कापि कामिनी कुप्यति ॥ यः प्रेम मनुते यथा,—

जत्थ ण उज्जागरओ जत्थ ण ईसाविसूरणं माणं।

सब्भाववाडुअं जत्थ णत्थि णेहो तहिं णत्थि ॥

अत्र मनु अवबोधने इति धातुः मानेन हि प्रेमास्ति नास्ति वा इति जनो बुध्यते। तस्य च करणभूतस्यापि प्राधान्यादत्र कर्तृत्वोपचारः ॥ तद् यथा, प्रज्ञा पश्यति नो चक्षु र्दृष्टिः सारस्वती हि सा ॥ इति ॥ प्रेम मिमीते यथा,—

कुविआ अ सच्चहामा समेवि वङ्कआणा णवर माणक्खलणे।

पाअपडिअहिअअसारो पेम्मासंधरिसो मअड्ढ मए ॥

अत्र माङ् माने इति धातोः अत्यलुरटो वङ्कलं इति कर्तरि लुरट् ॥ कोऽसावनुमान इति भाष्यप्रयोगात् ॥ तेन च यद्यपि करणभूतेनैव आत्मनि रुक्मिणयाश्च प्रियप्रेम्णः परिमाणं सत्यभामा प्रत्याययति तथा-पि इहापि अयं पूर्ववत् कर्तृत्वे नोपयुज्यते ॥ प्रवासे वसन्त इत्युपल-लक्षणेन (न) आत्मानसङ्गना भूषयन्ति यथा,—

णाडीणे पि पिअअमे पत्ते विच्छूणे ण मण्डिओ अप्पा।

दुक्खिअपउत्थवइअं सअज्झिअं संठवन्तीए ॥

अत्र वस आच्छादने इत्यस्य मस्यरति इत्यादिवन्निपेधार्थे प्रपूर्वस्य यञ्जि च रूपं निरूप्यते ॥ युवानः प्रियासन्निधौ न वसन्ति यथा,—

विरहाणलो सहिज्जइ आसावन्धेण दुल्लहजणस्स।

एक्कग्गामपवासो माए मरणं विसेसेइ ॥

अत्र दूरस्थयोरिव अन्तिकस्थयोरपि सन्निकर्षाभावात् प्रवासो भवति ॥ उत्कण्ठादिभिश्चेतो वासयति यथा,—

आलोअन्ति दिसाओ ससन्त जम्भन्त गन्त रोअन्त।
मुज्झन्त पडन्त हसन्त पहिअ किं तेण पउत्थेण ॥

अत्रोत्कण्ठादिभि र्वासिते चेतसि शून्यावलोकनादयोऽनुभावा जायन्ते ॥ प्रमापयति यथा,—

सञ्जीवणोसहिम्मि व पिअस्स रक्खेइ अणणवावारां।
सा ब्भूणवप्फइं सणकण्ठागअजीविआं सोण्हां ॥

अत्र प्रसादं करोतीत्यादिवत् प्रमापणोपक्रमोऽपि प्रमापणमुपचर्यते ॥ करणे करोतेरनुभूतोपादानार्थत्वे कुरुते मूर्च्छां यथा,—

विअलिअविओअविअणं तक्खणपब्भट्ठरामरणाआसं।
जणअतणआए णवरं लद्धं मुच्छाणिमीलिअच्छीअ सुहं ॥

अत्र सीतायाः पतिशोकप्रकर्षप्रभूता मूर्च्छा उत्पद्यते ॥ उच्चारणार्थत्वे कुरुते विलापं यथा,—

पुहवीअ होइ हि पइ बहुपुरिसविसेसचञ्चला राअसिरी।
कह ता महच्चिअ इमपिसामाण्णं उवट्ठिअं वेहव्वं ॥

अत्र प्रवासदुःखेन सीता विलपन्ती इदमुच्चरति ॥ अवस्थापनार्थत्वे कुरुते साहसे मनो यथा,—

इयमेत्य पतङ्गवर्त्मना पुनरङ्काश्रयणी भवामि ते।
चतुरैः सुरकामिनीजनैः प्रिय यावन्न विलोभ्यसे दिवि ॥

अत्र रतेः कामशोकेन मरणसाहसे मनोऽवस्थाप्यते॥ अभ्यञ्जनार्थत्वे करोति चित्तं दुःखेन यथा,—

दलति हृदयं गाढोद्वेगं द्विधा न तु भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम्।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्

प्रहरति विधि र्मर्मच्छेदी न सन्तति जीवितम् ॥

अत्र रामादे र्दुःखेन चित्तमभ्यणत्रते ॥ सम्भोगनिवृत्तिषु प्रथमानुरागानन्तरे मालत्यां यथा,—

दृष्टा दृष्टिमधो दधाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
जाता वामतयैव सम्प्रति मम प्रीतैव नवोढा प्रिया

अत्राप्रागल्भ्यवामताभ्यामननुकूलायामपि नवोढायामिच्छातुष्टतया रतिः पाल्यते ॥ मानानन्तरे कौटिल्यायां यथा,—

पादे मूर्द्धनि ताम्रतामुपगते कर्णोत्पले चूर्णिते
च्छिन्ने हारलतागुणे करतले संजातजातव्रणे।
अप्राप्तप्रियताड़नव्यतिकरा हन्तुं पुनस्तं तथा
वाञ्छन्ती मुखरेणबाष्पनयना पर्याकुला रोदिति ॥

अत्र प्रेम्णः स्वभावकुटिलत्वान्मानवत्याः कचग्रहणेन यत्प्रहारताड़नादिरूपाः कुटिला एव सम्भोगा जायन्ते ॥ प्रवासानन्तरेऽव्यवहारायां यथा,—

वशिष्ठधेनोरनुयायिनं समावर्त्तमानं वनिता वनान्तात्।
पपौ निमेषालसपक्ष्मपङ्क्तिरुपोषिताभ्यामिव लोचनाभ्याम्।

अत्र उत्तरार्धे उपोषितस्य भक्तोपयोग इव प्रियालोकजन्मा पिबतेरव्यवहारार्थः कथ्यते ॥ करुणानन्तरे परभवायां यथा,—

अणुसरणपत्थिआए पच्चागअजीविए पिअअम्मि।
वेहव्वमण्डणं कुलवइहअ सोहग्गं जाअं ॥

अत्र यथेयं मत्प्राणभूता एवमस्या अहमपि जीवितमेवेति पत्या विस्त्रम्भो राग. पत्न्याः पुनः प्रेत्यापि यत्सङ्गमो मयाभिलषितः सोऽयं जीवन्त्यैव जीवितेश्वरः समासादित इति विस्त्रम्भादतिसुखमेवानुभूयते ॥ अत प्रथमानुरागानन्तरे सम्भोगः संक्षिप्तो यथा,—

अपेतव्याहारं धुतविविधशिल्पव्यतिकरं
करस्पर्शारम्भप्रगलितदुकूलान्तशयनम् ।
मुहुर्बद्धोत्कम्पं दिशि दिशि मुहुः प्रेरितदृशो-
रहल्यासुत्राम्णोः क्षणिकमिह तत् सङ्गतमभूत् ॥

अत्र संक्षेपो निगदेनैव व्याख्यायते ॥ स एव मानानन्तरे सङ्कीर्णो यथा,—

अणुणिअखणलद्धसुहे पुणो वि संभरिअमण्णु दूमिअविहले ।
हिअए माणवईणं चिरेण पणअगरुओ पसम्मइ रोसो ॥

अत्रावस्थिता प्रकृष्टा च रतिर्व्यलीकस्मरणादिभिः संकीर्यते ॥
प्रवासानन्तरे संपूर्णो यथा,—

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
मासानेतान् गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं सं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥

अत्रामुना विरहिवाक्येनापि निर्वेक्ष्याव इति भविष्यत्कालोपाधेः प्रवेशानन्तरेऽप्यविरुध्यमानेन सं तमात्माभिलाषमित्यादिना तदानीन्तनभोगस्य संपूर्णत्वं वर्ण्यते ॥ करुणानन्तरे समृद्धो यथा,—

तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वो-
र्देहत्यागादमरगणनालेख्यमासाद्य सद्यः ।
पूर्वाकाराधिकतररुचा सङ्गतः कान्तयासौ
लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु ॥

अत्रोत्तरार्धेनेन्दुमत्यजयोर्लोकान्तरमनुप्रत्युज्जीवनेन सम्भोगसमृद्धिः प्रतिपाद्यते ॥ प्रथमानुरागानन्तरे सहार्थान्वयो यथा,—

मुहपेच्छओ पई से सा वि हु पिअरूअदंसणुम्मइआ ।
दो वि कअत्था पुहविअ पुरिसमहिलं ति मण्णन्ति ॥

अत्र पूर्वार्धे रञ्जयत्यर्थे उत्तरार्धे राजत्यर्थः प्रथमानुरागे सह सिद्धभावेन सिद्धस्तदनन्तरेऽपि तथैवानुवर्तते ॥ तत्रैव पश्चादर्थान्वयो यथा,—

अद्यप्रभृत्यवनताङ्गि तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ।
अह्नाय सा नियमजं क्लममुत्ससर्ज
क्लेशः फलेन हि पुन र्नवतां विधत्ते ॥

अत्र रञ्जयत्यर्थः प्रथमानुरागे पुंसि पश्चाद्भावेन सिद्धस्तदनन्तरेऽपि तथैवानुवर्त्तते ॥ अत्रैवानुरूपार्थान्वयो यथा,—

शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जह्नुकन्यावतीर्णा ।
इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥

अत्र राजत्यर्थः प्रथमानुरागे स्त्रीपुंसयोरपरानुरूपेण सिद्धस्तदनन्तरेऽपि तथैवानुवर्त्तते ॥ अत्रैवानुगतार्थान्वयो यथा,—

स्थाने तपो दुश्चरमेतदर्थमपर्णया पेलवयाभितप्तम् ।
या दास्यमप्यस्य लभेत नारी सा स्यात् कृतार्था किमुताङ्कशय्याम् ॥

अत्र पूर्वार्धे रञ्जयत्यर्थः प्रथमानुगतार्थत्वेन सिद्धस्तथैवानुवर्त्तते । सोऽयं करणसाधनः प्रत्ययोत्पत्तिपक्ष उक्तः । भावसाधनपक्षे तु सर्वत्र सद्भावादिविशिष्टा रति र्दीप्ति र्वानुरागशब्देनोच्यमाना तदनन्तरेऽपि समाससामर्थ्यादनुवर्त्तते ॥ कः पुनरत्र समासः, षष्ठीलक्षणस्तत्पुरुषः । प्रथमानुरागस्यानन्तर इति प्रथमानुरागानन्तर इति ॥ कात्र वृत्तिः, अजहत्स्वार्था । नह्यत्र नायकौ मिथःसमागतावपि प्रथमानुरागमुत्सृजतः । युक्तम् । पुन र्यदजहत्स्वार्था परार्थाभिधानरूपा वृत्तिः स्यात्, अवश्यं ह्यनेन परस्यार्थमभिदधता स्वार्थ उत्स्रष्टव्यः । बाढं युक्तम् । एवं हि दृश्यते लोके भिक्षुको यद् द्वितीयां भिक्षामासाद्य पूर्वां न जहाति सञ्चयायैव यतते । एवं तर्हि द्वयो र्द्विवचनमिति द्विवचनं प्राप्नोति । कस्या विभक्तेः, षष्ठ्याः । न षष्ठीसमर्थोऽनन्तरः । तर्हि प्रथमायाः, न प्रथमासमर्थः प्रथमानुरागः सम्बन्धाधिक्यात् । अभिहितः सोऽर्थोऽन्तर्भूतः

प्रातिपदिकार्थः सम्पन्न इति सामर्थ्य भविष्यति । नैवं । इह प्रथमानुरागानन्तरे इत्यस्मात्समुदायाद्विभक्त्या उत्पत्तव्यम् । तेन चैकोऽर्थपिण्डो हस्तिखण्ड इवाविभागोत्पन्नपांशूदकविभागोऽवयवार्थशक्त्यानुगृहीतः पृथगव्यपदेश्यावयवशक्तिरभिधीयते । तस्मिंश्च समुदायार्थे एकत्वं समवेतमतो विद्यमानायामप्यवयवसंख्यायां तदाश्रया सुबुत्पत्तिर्न भविष्यति ॥ मानानन्तरे पूजार्थान्वयो यथा,—

न स्पृष्टोऽसि त्रिदशसरिता दूरमीर्ष्यानुबन्धात्
नाप्युत्सृष्टो भुजगपतिना तर्जनाभि र्जयायाः ।
मानस्यान्ते नयनसलिलैः क्षालितः शैलपुत्र्या
पत्युर्मौलौ नतिशुजि जयत्यात्मनः पादपांसुः ॥

अत्र पादपतनादिपूजा मानसिद्धा तदनन्तरेऽप्यनुवर्त्तते ॥ अत्रैव मानं प्रति प्रियत्वाभिमानान्वयो यथा,—

विहायैतन्मानव्यसनमनयोरुन्नकुचयो-
र्विधेयः प्रेयांस्ते यदि वयमनुल्लङ्घ्यवचसः ।
सखीभ्यः स्निग्धाभ्यः शिवमिति निशम्यैणनयना
निवापाम्भो दत्ते नयनसलिलैर्मानसुहृदे ॥

अत्र मानं प्रति प्रियत्वाभिमानो मानानन्तरेऽप्यनुवर्त्तते ॥ अत्रैव प्रेमावरोधार्थान्वयो यथा,—

दूमंन्ति जे मुहुत्तं कुविअ दासव्व जे पसाअन्ति ।
ते च्चिअ महिलाण पिआ सेसा सामिच्चिअवरोआ ॥

अत्रास्यामपि प्रेमास्ति न वेति जिज्ञासुः प्रियः प्रियां केलीगोत्रस्खलनादिना दुनोति । सा च प्रेमवत्त्वबश्यमसौ कुप्यति स चोपलब्धप्रेमा तद्दासवदेनां प्रसादयति । अथैषात्मनि प्रेम्णोऽस्तित्वमनुबुध्यते । सोऽयं मानसिद्धोऽर्थस्तदनन्तरेऽप्यनुवर्त्तते ॥ तत्रैव प्रेमप्रमाणार्थान्वयो यथा,—

सुरकुसुमेहिं कलुसिअं जइ तेहिं चिअ पुणो पसाएमि तुमं ।
तो पेम्मस्स किसोअरि अवराहस्स अ ण मे कअं अणुरूअं ॥

अत्र हविर्मयाः सुरकुसुममञ्जरी दत्ता मम तु सुरतरुरेव प्रेयसा प्रतिपन्नसदृशमस्याः सदृशगुणेन प्रियतमेति सत्यभामा स्वप्रेमाणं प्रमिमीते। स चायमर्थो मानेन विच्छेदनन्तरेऽपि समासस्यसामर्थ्याद्नुवर्त्तते॥ कः पुनरत्र समासः, षष्ठीतत्पुरुष एव। का वृत्तिः, प्रथमानुरागानन्तरमजहत्स्वार्थैव। युक्तं, तत्र विप्रलम्भादावपि प्रथमानुरागस्य विद्यमानत्वात्। इह तु माननिवृत्तौ मानापगमादयो जायन्ते। अन्यथाविशेषणं भविष्यति। तद्यथा, घृतघटस्तैलघट इति निर्गतेऽपि घृते तैले वा अयं घृतघटः अयं तैलघटः इत्यन्वयात् पूर्वपदार्थो विशेषणं भवति। तत्र या च यावती वार्थमात्रा इहापि तत्तुल्यमेव। तथा हि,

सकअग्गाह संसुणा मिञ्चाणणा पिअइ पिअअम विइस्सं।
त्योअं त्योअं रोसो मइं व माणं विणोमरर॥

सकचग्राहेरेव वाक्यैर नायकं निस्तुदती प्रयणीयं गच्छेदिति मानशेषान्वयो दृश्यते। प्रवासानन्तरे प्रिया न वसते इत्यर्थस्यान्वयो यथा,—

वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणिः।
अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्ति॥

अत्र दुष्मन्तेन शकुन्तलायाः प्रवासे विभूषणाद्यग्रहणं यदवगतं तदनन्तरेऽप्यनुवर्तमानं प्रेम प्रकर्षाय भवति॥ अत्रैव युवानः प्रियासन्निधौ न वसन्तीत्यर्थस्यान्वयो यथा,—

समर्थये यत् प्रथमं प्रियां प्रति क्षणेन तन्मे परिवर्त्ततेऽन्यथा।
अतो विनिद्रे सहसा विलोचने करोमि न स्पर्शविभावितप्रियः॥

अत्र पुरूरवाः प्रवासान्मत्त उर्वशीबुद्ध्या लतादिकं यद्यदासृजाद तत्तदनेकशोऽन्यथा बभूव। तत्संस्कारात्सायं यस्या लताक्ष्पपरिवर्त्तनं प्रतीयते सोऽयं प्रियासन्निधौ यूनामवासः प्रवासः संविहसदनन्तरेऽप्यनुवर्त्तते। अत्रैवोत्कण्ठादिभिस्तैो वासयतीत्यर्थस्यान्वयो, यथा,—

अज्जो वुत्तरआरम्भ पुणो वि तत्तिं करेसि गमणस्स।

अज्ज वि ण होंति सरला वेणी अ तरङ्गिणी विङ्करा ॥

अत्र प्रवासोद्भतभयोत्कण्ठादिभिश्चित्तवासना प्रवासानन्तरेऽपि तस्या नोपशाम्यतीति वेणिकावर्णनादिना सूच्यते। अत्रैव प्रमापयती-त्यर्थस्यान्वयो यथा,—

त्वद्वियोगोद्भवे चण्डि मया तमसि मज्जता।
दिष्ट्या प्रत्युपलब्धासि चेतनेव गतासुना॥

अत्रोर्वशीविरहे पुरूरवा उत्तरां कामावस्थामापन्नः प्रियाप्राप्तौ प्रेतेव प्रत्युज्जीवितस्तदेवानुसन्धत्ते। सोऽयं प्रमापणार्थः प्रवासः सिद्धसदन-न्तरेऽपि समाससामर्थ्यादनुवर्त्तते। कः पुनरत्र समासः, षष्ठीतत्पुरुष एव। कात्र वृत्तिः, न तावदजहत्स्वार्था, न हि मोघसमागतयोः प्रवास-सम्बन्धोऽपि विद्यते। उत्सृष्टस्वार्था तदिह भवतु युक्तं पुन र्यदुत्सृष्टस्वार्था नाम वृत्तिः स्यात्। वाढं युक्तं, एवं हि दृश्यते लोके पुरुषोऽयं परकर्मणि प्रवर्त्तमानः स्वकर्मोत्सृजति। तद्यथा, तक्षा राजकर्मणि प्रवर्त्तमान-स्तक्षकर्मोत्सृजति। नन्वेवं सति राजपुरुषमानयेत्युक्ते पुरुषमात्र-स्यानयनं प्राप्नोति। नैष दोषः, उत्सृजन्नयासौ स्वार्थं नात्यन्तमुत्सृजति। यः परार्थविरोधी स्वार्थस्तमेवोत्सृजति। तद्यथा, तक्षा राजकर्मणि प्रवर्त्तमानस्तक्षकर्मोत्सृजति, न तु चुम्बितस्मितविहसितकम्पनादीनि। न चायमर्थः परार्थविरोधी विशेषणं नाम। तस्मान्नोत्सृज्यति। करणान-न्तरेऽनुभूतप्रादुर्भावार्थान्वयार्थो यथा,—

जयन्ति जायास्निग्धस्य शम्भोरम्भोधिमन्थने।
संस्मारितविषास्वादमूर्च्छामनोमुदः॥

च्छायायणया हैमवतीत्वेन करणानन्तरत्वम्। तत्र करणदुःखेन मूर्च्छा-दयः प्रादुरासन्, इह तु आनन्देन ते प्रादुर्भवन्ति॥ तत्रैवोच्चारणा-न्वयार्थो यथा,—

क्षाम्यन्ती यदुपेक्षितासि पुरतः कामो यदग्रे स्मरः
क्लिष्टं यत्तपसा वपु र्यदपि च प्रोक्ता वटुव्याजिना।

तावद्यं प्रणतस्य मेऽद्य रुदितैर्दासायपि त्वय्यता-

मित्युक्ता चरणाब्जयोर्विलपते तुभ्यं न्ववाया: श्रिय: ॥

अत्र करुणावस्थायां प्रियापादाब्जयोर्लुण्ठता शोकेन यो विलापः कृतः स इह प्रकर्षालापत्वेन परिणमति। अत्रैव मनोऽवस्थापनान्वयार्थो यथा,—अवधिदिवसं प्रेम लभस्व पतुरवितुरत्यन्ते गाभिकमा णा नम्बा ।

तथा तु तस्यार्धशरीरलाभादधःकृताः स्निग्धजनाशिषोऽपि ।

अत्रैव, यदैव पूर्वे जनने शरीरं सा दक्षरोषात् सुदती ससर्ज ।

ततः प्रभृत्येव विमुक्तसङ्गः पतिः पशूनामपरिग्रहोऽभूत् ॥

इति करुणावस्थायामतिस्नेहेनापरिग्रहत्वमाश्रित्य यन्मनोऽवस्थापितं तदि-हार्धशरीरप्रदानमहाराज्यसमेवावतिष्ठते ॥ तत्रैवाभ्यञ्जनान्वयार्थो यथा,—

भिन्ने सद्यः समाधावुपरमति परज्योतिषि स्पन्दसंज्ञे

संज्ञामापद्यमाने मृदुमनसि मनागुन्मिषत्स्विन्द्रियेषु ।

व्यापारे पारवश्यं विसृजति भवति ब्रह्मसब्रह्मचारी

वामार्धस्पर्शजन्मा जयति पुररिपोरन्तरानन्दपूरः ॥

अत्र यत्करुणावस्थायां मनः शोकप्रकर्षेणाभ्यस्तमासीत्तदिह प्रियाश्लेषजन्मना परमानन्देनाभ्यज्यते। सोऽयं करुणधर्मसमन्वयः तदनन्तरेऽपि समाससामर्थ्याद्भवति। कः पुनरत्र समासः, षष्ठीतत्पुरुष एव। का वृत्तिः, जहत्स्वार्था। न ह्यत्र करुणार्थस्य गन्धोऽपि कथं तर्हि अन्वयः। यथा, मल्लिकापुटचम्पकपुट इत्यत्र निर्गतेष्वपि सुमनःसु मल्लिकादिवासनावशाद्विशेषणं भवति :—अयं मल्लिकापुटोऽयं चम्पकपुट इति। एवं निवृत्तेऽपि स्वार्थे वासनावशात्करुणोऽनन्तरस्य विशेषणं भवति। अथ वा पयसानुरागादिष्वपि अजहत्स्वार्थैव वृत्तिः, नन्वेवं राजपुरुषमानयेत्युक्ते पुरुषमात्रस्यानयनं प्राप्नोति। नैष दोषः, वृत्तौ समर्थाधिकारः क्रियते, सामर्थ्यं च भेदः संसर्ग उभयं वा। तत्र राज्ञ इत्युक्ते सर्वं स्वं प्रसक्तं, पुरुष इत्युक्ते सर्वः स्वामी प्रसक्तः। इहेदानीं राजपुरुषमानयेत्युक्ते राजा पुरुषं

निवर्तयत्यन्येभ्यः स्वामिभ्यः, पुरुषोऽपि राजानमन्येभ्यः स्वेभ्यः। एवमस्मिन्नुभयतो व्यवच्छिन्ने यदि राजार्थो निवर्तते कामं निवर्त्ततास्, न जातु क्वचित् पुरुषमात्रस्यानयनं भविष्यति। प्राक् प्रवृत्तेरस्तार्थस्य निवृत्तौ सामर्थ्याभावाद्वृत्तिरेव न स्यात्, वृत्तिनिमित्ता च निवृत्तिस्तस्माददोष इति। तत्र राज्ञः पुरुष इत्यत्र यदा तावदवगतपरायत्तवृत्तिरयं पुरुषो न स्वतन्त्रस्तदा स्वामिसंसर्गस्यावगतत्वात् स्वामिविशेषस्यानायोपादीयमानो राजशब्दः स्वाम्यन्तरेभ्यः पुरुषं व्यावर्तयति। सोऽयं स्वाम्यन्तरव्यवच्छेदो भेद उच्यते। यदा पुनरवगतपरायत्तभावस्य पुरुषस्य स्वामिसम्बन्धद्योतनाय राजशब्दः प्रयुज्यते, तदा विशेषसंसर्गस्याभिसन्धायोपसर्जनस्य शब्दोपादानत्वादनवकाशो विशेषान्तरसंपात इत्यशब्दा स्वाम्यन्तरनिवृत्तिरवसीयते। यदा त्वर्थान्तरनिवृत्तिं स्वार्थसंसर्गस्याभिसन्धायोपसर्जनपदानि प्रयुज्यन्ते, तदा शब्दार्थसामर्थ्ययोः प्रतिपत्तिनिबन्धनयोरभेदापेक्षायां भेदसंसर्गसमुदायः सामर्थ्यं भवति। यथा, नीलञ्च तदुत्पलञ्चेति नीलोत्पलं, प्रथमश्चासौ अनुरागश्चेति प्रथमानुराग इति। प्रथमानुरागानन्तर इत्यादिषु च भेदसामर्थ्यं यथा राज्ञो भृत्य इति। यतोऽनन्तर इत्युक्ते ऽवधृतमिदं कस्याप्यवधेरनन्तरोऽयं न स्वतन्त्र इति सर्वोऽवधिः प्रसक्तः। प्रथमानुरागस्येत्युक्ते सर्वः सम्बन्धी प्रसक्तः। इहेदानीं प्रथमानुरागानन्तर इत्युक्ते प्रथमानुरागोऽनन्तरं निवर्त्तयत्यन्येभ्योऽवधिभ्यः। अनन्तरः प्रथमानुरागं निवर्त्तयत्यन्येभ्यः सम्बन्धिभ्यः। तत्र योऽसौ भेदस्तत्सामर्थ्यं तन्निमित्ता च वृत्तिः। भेदनिमित्तायाञ्च वृत्तौ सत्यां वृत्त्यभिमुखस्य भेदमुपजनयतोपसर्जनस्य प्रथमानुरागस्यार्थो निवर्तते। यस्यापि प्रधानस्यानन्तरस्यावधिमत्त्वेन निवर्त्तते सोऽप्यवधिमवच्छिनत्ति। एवमुभयतो व्यवच्छेदे निर्ज्ञातेऽनन्तरविशेषे समुदायार्थे चान्यस्मिन् प्रादुर्भवति। यदि प्रथमानुरागादर्थो निवर्तते कामं निवर्त्तताम्। न जातु क्वचिदवधिमन्मात्रस्य संप्रत्ययो

भविष्यति। ननु चान्वयव्यतिरेकाभ्यां जहत्स्वार्थत्वं नोपपद्यते॥ तथा हि प्रथमानुरागानन्तरे इत्युक्ते कश्चिच्छब्दः श्रूयते ।—प्रथमानुरागेणानन्तरेति च प्रतीयमानविभागः। अर्थोऽपि कश्चिदवगम्यते कन्याविस्रम्भणादिरवधिमत्त्वञ्च । मानानन्तरे इत्युक्ते कश्चिच्छब्दभागो हीयते, कश्चिदुपजायते, कश्चिदन्वयी—प्रथमानुरागेति हीयते, मान्येतुत्रपजायते, अनन्तर इत्यन्वयी । अर्थोऽपि कश्चित् हीयते, कश्चिदुपजायते, कश्चिदन्वयी—कन्याविस्रम्भणादि हीयते, मानशैथिल्यादिरुपजायते, अवधिमत्त्वमन्वयित्वेन मन्यामहे । यः शब्दभागो हीयते तस्यासावर्थः योऽर्थो हीयते, य उपजायते तस्यायमर्थः योऽर्थ उपजायते, योऽन्वयी तस्यासावर्थः योऽर्थोऽन्वयीति । मैवं । यतोऽनन्यथासिद्धाभ्यामेवान्वयव्यतिरेकाभ्यां शब्दार्थयोः सम्बन्धावधारणमन्यथासिद्धौ चेमौ। तथा हि, यत्र हंसितं हीयते, कम्पितमुपजायते, रेणुचक्रमन्वयि, तत्र हस्तिनो हीयन्ते, अश्वा उपजायन्ते, पिपीलिका अन्वयिन्यः । न चैतावता रेणुचक्रादिपिपीलिकाः कारणं भवन्ति। यत्र वा क्षीरं हीयते, दध्युपजायते, पात्रमन्वयि, तत्र माधुर्यं हीयते, अम्लतोपजायते, तृप्तिरन्वयिनी । न चैतावता पात्रस्य तृप्तिः कार्यं भवति । अवश्यं हि सामर्थ्यमन्वयव्यतिरेकाभ्यां प्रविभज्यते । यथा, लोके बधिरोऽपि चक्षुष्मानालोकयति, सत्यपि श्रोत्रे उपहतचक्षुर्नालोकयति रूपमित्यन्वयव्यतिरेकाभ्यां चक्षुःश्रोत्रसन्निधाने रूपालोकनं चक्षुष एव व्यवस्थाप्यते न श्रोत्रस्य। यस्य केवलस्य योऽर्थोऽवगतः पदार्थान्तरसन्निधानेऽपि तस्य स एव। न हि रसनसन्निधौ दर्शनस्य मधुरादिव्यञ्जकं दर्शनसन्निधौ नीलादिव्यक्तिं प्रति सामर्थ्यं लभते। प्रथमानुरागशब्दस्य केवलस्योत्कण्ठादिषु मानशब्दस्येर्ष्यायितादिष्वनन्तरशब्दस्य पुनरवधिमत्त्वस्येव सामर्थ्यमवधृतमतस्तेषां तावानेवार्थो भवति। यः पुनः पदयोरन्योन्योपश्लेषादिस्रम्भणादिभिर्मानशैथिल्यादिभिर्वावधिमद्विशेषोऽन्यावधिकः प्रतीयते

वोऽर्थः स भवतीति। यदि च यथानपेक्षितावयवार्था वृक्षश्रोत्रियपाकगोपादयः स्वसामर्थ्यात्रियतमर्थमाचक्षते तथा संज्ञा एवैते प्रथमानुरागानन्तरादयो राजपुरुषादयश्चानपेक्षितावयवार्था यथासामर्थ्यमर्थेषु निविशन्ते। ननु चाव्यपदेश्यपूर्वापरविभागाभिन्नार्थाभिधायिनो वृक्षादयः, प्रतीयमानभागभेदानुयाताः सम्बन्धिपदार्थपक्षितभेदवृत्त्यभिधायिनः पुनरिमे, तत् कथं प्रथमानुरागानन्तरादयो वृक्षादिवद्रूढिशब्दा भवितुमर्हन्ति। तदसत्। रूढिशब्दा यौगिका इति हि विभागोऽभेददर्शनादर्शनाभ्यासमभिनिविशतेऽभिनिविष्टबुद्धेः प्रतिपादनोपाय एव। अयथाभिनिविष्टो ह्यर्थं क्रमेण तथाद्ययान्विवर्तयितव्यः। ततोऽत्राप्रत्यभिज्ञायमानप्रकृतयः श्रोत्रियक्षत्रियादयो दर्श्यन्ते। न ह्यत्र प्रकृतिरूपमवसीयते। यतः प्रकृत्यर्थानवच्छिन्नः प्रत्ययार्थोऽभिधीयते ततोऽनवसीयमानावयवविभागा रूढयः काश्चिदुपन्यस्यन्ते यत्रात्यन्तासम्भवोऽवयवार्थस्य यथा पाकगोपाः, तैलपायिकाः, मण्डप इति। पुनः कदाचित् सन्निहितावयवार्था जातिविशेषाभिधायिनः सप्तपर्णशतमालादय उदाह्रियन्ते। यतः सप्तलाशोऽप्युदुभिन्नपलाशोऽपि च वनस्पतिः, सप्त पर्णान्यस्य पर्वणीति सप्तपर्ण इत्याख्यायते। तथा निष्कीर्णकुसुमस्तबकः अनारब्धकलिकाजालोऽपि लता शालानेनेति शतमाल इत्यभिधीयते। अथ पञ्चाङ्गुलमिवाश्वकर्ण इव पर्णमस्येत्युपचरितार्थावयवा जातिवाचिन एव पञ्चाङ्गुलाश्वकर्णादयो वर्ण्यन्ते। तेषु हि पञ्चाङ्गुलादिव्यपदेशः सोद्भिद्यमानप्रवालमालमपि यावदनुवर्तते। ततः सन्निधीयमानेऽप्यनाश्रीयमाणवृत्तिपदार्थाः लोहितशालिः गौरखरः इत्यादयो निगद्यन्ते तत्र हि सन्नपि वर्णविशेषः समुदायस्य जातिवचनत्वाच्छब्दार्थत्वेन नावसीयते। तदेवमयं प्रकृतीसतवृत्तिपदार्थाभिनिवेशः प्रथमानुरागानन्तरादाविव राजपुरुषादावप्ययथाभिनिवेशं शक्यते त्याजयितुम्। अतएव प्रथमानुरागादीनां विप्रलम्भसम्भोगादीनाञ्च पारिभाषिकोऽपि

संसर्गः सन्निधीयत इति॥ प्रकीर्णकेषु स्त्रूयन्तीव्रतमष्टमीचन्द्रकः स हि चैत्रचतुर्थीतोऽष्टमचतुर्थ्यामुपादीयमानः कामिनीभिरर्च्यते यथा,—

अवसहिअजणो पइणा सलाहमाणेण एच्चिरं हसिओ।
चन्दो त्ति तस्स मुहदिस्सकुसुमं जातविलक्खो॥

यस्यां यवस्य शरेष्वबला लोलन्ति सा कुन्दचतुर्थी यथा,—

लुलिआ गहवइधुआ दिखं व फलं जवेहिं सविसेसं।
एहिं अणिवारिअसेवग्गेहणं चरउ च्छेत्तम्मि॥

वसन्तावतारदिवसः सुवसन्तको यथा,—

कणपिट्ठधूसरत्थणि रुक्कमअसंवच्छि कुवलआहरणे।
कस्स कअ चूअमञ्जरि पुत्ति तुए मण्डिओ गामो॥

यत्र स्त्रियो दोलामारोहन्ति सा आन्दोलनचतुर्थी यथा,—

अन्दोलणक्खणोट्ठिआए दिट्ठे तुमम्मि सुहाए।
आसन्धिज्जइ काओ करपेल्लणणिच्चला दोला॥

एकमेव सकुठमनिर्भरमाशालिष्टवता अत्र सुनिमीलितकादिभिः खेलता क्रीड़ा एकशाल्मली यथा,—

को एसो त्ति पलद्द संवलिवलिअं पिअ परिक्खसइ।
हलिअसुआ सुद्धवहूसेअजलोल्लेण हत्थेण॥

त्रयोदश्यां कामदेवपूजा मदनोत्सवो यथा,—

गामतरुणीओ हिअअं हरन्ति पोढाण थणहरिल्लीओ।
मअणसवम्मि कोसुम्भकञ्चुआहरणमेत्ताओ॥

गन्धोदकपूर्णवंशनाड़ीश्टङ्गकादिभिर्यूनां प्रियजनाभिषेककर्दमेन क्रीड़ा उदकक्ष्वेड़िका यथा,—

अह धाविऊणसङ्गमएण सज्झञ्चिअं पड़िच्छन्ति।
फग्गुच्छे तरुणीओ गहवइसुअहत्था चिक्खल्लं॥

यत्रोत्तमस्त्रियः पदाभिघातेनाशोकं विकास्य तत् कुसुममवतंसयन्ति सा अशोकोत्तंसिका यथा,—

उत्तंसिअण दोहलविअसिआसोअमिन्दुवअणाए।
विरहिणो णिप्फलकंकेल्लिकरणसहो समुप्पुसिओ॥

यत्राङ्गनाभिश्चूतमञ्जर्योऽवतंसत्रानङ्गाय बालरागत्वेनैव दायं दायमवतंसयन्ते सा चूतभञ्जिका यथा,—

रइअम्पितए सोहइ रइजोग्गं कामिणीण चूअपणेवच्छं।
कस्स णाव ण रंज्जइ कवोलघोणन्तपल्लवसहआरं॥

यत्र युवतयो मदिरागण्डूषदोहदेन वकुलं विकास्य तत्पुष्पाण्यवचिन्वन्ति सा पुष्पावचायिका यथा,—

पीणत्थणए सुकेसरदोहलदाणुम्मुहीअ णिवलन्तो।
तुङ्गसिहरग्गपडणम्मि जं फलं तं तए पत्तं॥

यत्र कस्ते प्रियतम इति पृच्छद्भिः पलाशादिनवलताभिः प्रियो जनो हन्यते सा चूतलतिका यथा,—

णवलअपहरं अङ्गे जहिं जहिं महइ देअरो दाउं।
रोमञ्चदण्डराइ तहिं तहिं दीसइ वहूए॥

पञ्चालानुनयन्ती भूतमातृका यथा,—

•विहलइ से णेवच्छं मम्माअइ मण्डणं गई खलइ।
भूअच्छणणच्चमाणि सुहअ माणं पुलोएसु॥

वर्षासु कदम्बनीपकान्द्रिकादिकुसुमैः प्रहरणभूतैर्द्विधा बलं विभज्य कामिनीनां क्रीडा कदम्बयुद्धानि यथा,—

सहिआहि पिअविसज्जिअकलम्बरअभरिअणिव्भरच्छूओ।
दीसइ कलम्बथवओव्व णहरो हलिअसोण्हाए॥

प्रथमवर्षणप्ररूढनवतृणाङ्कुरासु स्थलीषु शाद्वलमभ्यर्च्य भुक्तपीतानां क्षत्रिमविवाहादिक्रीड़ा नवपत्रिका। तत्र च वरणविधानादौ तेषामेवमेवंविधाः परिहासा भवन्ति यथा,—

•ण कुणइ कालहरणं तुवरं तम्मि विवरे विवाहस्स।
णा वंपइण्हवणाइ होन्ति कुमारीअ अङ्गाइं॥

संसर्गः सन्निधीगत इति॥ प्रकीर्णकेषु सुहयन्तीवसमदगीदन्द्रकः स हि चैत्रचतुर्थीतोऽष्टमचतुर्थ्यामुपादीयमानः कामिनीभिरचन्द्रमे यथा,—

अवसहिअजणो पइणा सलाहमाणेण एच्चिरं हसिओ।
चन्दो त्ति तस्स मुहदिण्णकुसुमं जातविलक्खो॥

यत्रां यवसुरेष्वबला लोलन्ति सा कुन्दचतुर्थी यथा,—

लुलिआ गहवइधुआ दिण्णं व फलं जवेहिं सविसेसं।
एहिं अग्गिवारिअसेवणेहणं घरउच्छेत्तम्मि॥

वसन्तावतारदिवसः सुवसन्तको यथा,—

कणपिट्ठधूसरत्थणि मज्झमअतंवच्छि कुवलआहरणे।
कस्स कए चूअमञ्जरि पुत्ति तुए मण्डिओ गामो॥

यत्र स्त्रियो दोलामारोहन्ति सा आन्दोलनचतुर्थी यथा,—

अन्दोलणक्खणोट्ठिआए दिट्ठे तुमम्मि सुहाए।
आसम्भिज्जइ काओ करपेल्लणणिच्चला दोला॥

एकमेव सुकुङ्कुमनिर्भरमाल्मलिहचणा अत्य सुनिमीलितकादिभिः खेलती क्रीड़ा एकशाल्मली यथा,—

को एसो त्ति पलद्धं संवलिवलिअंपिअ परिक्खसइ।
हलिअसुअ मुद्धवहू सेअजलोल्लेण हत्थेण॥

त्रयोदश्यां कामदेवपूजा मदनोत्सवो यथा,—

गामतरुणीओ हिअअं हरन्ति पोढ़ाण त्थणहरिल्लीओ।
मअणसवम्मि कोसुम्भकञ्चुआहरणमेत्ताओ॥

गन्धोदकपूर्णवंशनाड़ीश्टङ्गकादिभि यूनां प्रियजनाभिषेककर्दमेन क्रीड़ा उदकक्ष्वेड़िका यथा,—

अइ धाविऊणसङ्कमएण सअढिअं पडिक्खन्ति।
कस्स हे तरुणीओ गहवइसुअहत्थ चिक्खल्लं॥

यत्रोत्तमस्त्रियः पदाभिघातेनाशोकं विकास्य तत् कुसुममवतंसयन्ति सा अशोकोत्तंसिका यथा,—

उत्तंसिआण दोहलविअसिआसोअमिन्दुवअणाए।
विरहिणो णिप्फलकंकेल्लिकरणसद्दो समुप्पुसिओ॥

यत्राङ्गनाभिश्चूतमञ्जर्योऽवतंसत्वेनैव दायं दाय-
मवतंसयन्ते सा चूतभञ्जिका यथा,—

रइअम्पिताए सोहइ रइजोग्गं कामिणीए चूअणेवच्छं।
कण्णे जाव ण रंज्जइ कवोलघोलन्तपल्लवसरुआरं॥

यत्र युवतयो मदिरागण्डूषदोहदेन वकुलं विकाश्य तत्पुष्पाण्यवचि-
न्वन्ति सा पुष्पावचायिका यथा,—

पीणत्थणए सुके सरदोहलदाणुम्मुहीअ णिवलन्तो।
तुङ्गसिहरग्गपड़णस्स जं फलं तं तए पत्तं॥

यत्र कस्ते प्रियतम इति पृच्छद्भिः पलाशादिनवलताभिः प्रियो जनो
हन्यते सा चूतलतिका यथा,—

णवलअपहरं अङ्गे जहिं जहिं महइ देअरो दाउं।
रोमञ्चदण्डराइ तहिं तहिं दीसइ वहूए॥

यत्रात्मानुनयन्ती भूतमातृका यथा,—

विहलइ से णेवच्छं पम्माअइ मण्डणं गई खलइ।
भूअच्छणणच्चपाम्मि सुहअ मा णं पुलोएसु॥

वर्षासु कदम्बनीपकारिद्रुकादिकुसुमैः प्रहरणभूतैर्द्विधा बलं विभज्य का-
मिनीनां क्रीड़ा कदम्बयुद्धानि यथा,—

सहिआहि पिअविसज्जिअकअम्बअभरिअणिब्भरप्फु घो।
दीसइ कलम्बयवओघत्थणहरो हलिअसोण्हाए॥

प्रथमवर्षणप्ररूढनवतृणाङ्कुरासु स्थलीषु प्राङ्गणभूमिषु भुक्तपीतानां
स्त्रीणां विवाहादिक्रीड़ा नवपत्रिका। तत्र च वरणविधानादौ तेषामेव-
मेवंविधाः परिहासा भवन्ति यथा,—

मा कुणइ कालहरणं तुवरं तम्मि विवरे विवाहस्स।
जा वंचदुण्णत्थमाइ होन्ति कुमारीअ पक्काइं॥

अभिनवविसाङ्कुरोद्भेदाभिरामसरः समाश्रितत्र कामिमिथुनानां क्रीडा विसखादिका यथा,—

गेण्हन्ति पिअअमा पिअमाणवअणाहि विसलअद्धाइं ।
हिअआइं वि कुसुमाउहवाणकआणेअरन्धाइं ॥

वसन्तोत्सवदिवसः शक्रार्चा यथा,—

सच्चं चिअ कट्ठमओ सुरणाहो जेण हलिअधीआए ।
हत्थेहिं कमलदलकोमलेहिं छित्तो ण पल्लविओ ॥

आश्विने पौर्णमासी कौमुदी यथा,—

अह तइ सहत्थदिण्णे कह वि खलन्तामगाणमज्झे ।
तिस्सा थणेसु जाओ विलेवणं कोमुईवासो ॥

दीपोत्सवो यक्षरात्रि र्यथा,—

अस्सिं वि हि होन्ति छणाणं उणो दीआलिआ सरिच्छोहिं ।
जत्थ जहिच्छं गमइ पिअवसदी दीअवमिसेण ॥

अभिधान्यपृथुकधान्यानामार्द्राणामेवाग्निपक्वानामभ्यवहारोऽभ्युपखादिका यथा,—अणग्गिणा करो मे दड्ढो त्ति पुणो पुणो च्चिअ कहेइ ।
हालिकसुआमलिअच्छु सदोहसा पामरजुवाणो ॥

प्रथमत एवेक्षुभक्षणं नवेक्षुभक्षिका यथा,—

दिअरस्स सरअमउअं सुमइलेण देइ हत्थेण ।
पढमं छिण्णं वहुआ पवड्ढा गरुअं सदन्तवणं ॥

ग्रीष्मादौ जलाशयावगाहनं तोयक्रीडा यथा,—

पिसुणेन्ति कामिणीणं जलणुक्काइआवजहहासुहेल्लिं ।
कण्टइअकवोला पप्फुल्लणिच्चलच्छीइ वअणाइं ॥

नाथादिदर्शनं प्रेक्षा यथा,—

णच्चिहिइ णडो पेच्छिहिइ जेण पओसोभोइओ नायकस्स ।
सिट्ठिहिइ णरवइविदअणअरीगहरपुआण पक्खिहिइ ॥

आलिङ्गनादिकेलिप्रधाना हुगेन्द्रादिक्रीडा द्यूतानि यथा,—

आश्लेषे प्रथमं क्रमेण विजिते हृद्याधरस्याहृते
केलीद्यूतविधौ पणं प्रियतमे कान्तां पुनः पृच्छति।
सान्तर्हासनिरुद्धसम्भृतरसोद्भेदस्फुरद्गण्डया
तूष्णीं सारिविसारणाय निहितः स्वेदाम्बुगर्भः करः॥

रागोद्दीपनाय माध्वीकादिसेवा मधुपानं यथा,—

योआरूढमअम्भआ खणपलुट्टदा वराहदिणुआवा।
हसिऊण संठविज्जइ पिएण संभरिअलज्जिआ कावि पिआ॥

प्रेमप्रकारेषु विप्रियादिभिरप्यविनाशनीयो नित्यो यथा,—

दिट्ठा कुविआणुणआ पिआ सहस्साअणपेक्खणम्मि विसहिआ।
जस्स णिसण्णाइ उरे सिरीए पेम्मेण लज्जइआ अप्पाणो॥

तपश्चरणादिजन्मा नैमित्तिको यथा,—

इयेष सा कर्तुमबन्ध्यरूपतां समाधिमास्थाय तपोभिरात्मनः।
अवाप्यते वा कथमन्यथा द्वयं तथाविधं प्रेम पतिश्च तादृशः॥

अनिर्धारितविशेषः सामान्यो यथा,—

कुविआ अ पसण्णाओ ओणामुहीओ विहसमाणीओ।
जह गहिआ तह हिअअं धारेति अणिव्वुअं बाला॥

निर्धारितविशेषप्रकारो विशेषवान् यथा,—

ण वि तह आलावन्ती हिअअं दूमेइ माणिणी अहिअं।
जह दूरे वि अभिअगरुअरोसमज्झत्थभणिएइ॥

इङ्गितादिभिरप्यनवगम्यः प्रच्छन्नो यथा,—

दिअहे दिअहे सूसइ सङ्केअअभङ्गवड्ढिआसङ्का।
आवण्डुरोवणमुही कलमेण समं कलमगोवी॥

संज्ञादिभिरवगतः प्रकाशो यथा,—

जइ होसि ण तस्स पिआ ता दिअहं णीसहेहि अङ्गेहि।
ण वट्टुअ पीअपेऊसमत्तो पाडिव्व किं सुअसि॥

कारणोपाधिकः कृत्रिमो यथा,—

अदंसणेण पुत्तअ सुट्ठु विणहाणु वन्धगट्टिआइं।
हत्थउड़पाणिआइ वि कालेण गलन्ति पेम्माइं॥

कारणनिरपेक्षोऽकृत्रिमो यथा,—

जह जह जरापरिणओ होइ पईइ गाओ विरुवोवि।
कुलपालिआए तह तह अहिअअरं वल्लहो होइ॥

जन्मान्तरसंस्कारजनितः सहजो यथा,—

आलिअपुलओवभेओ सवत्तिपणअपरिधूसरम्मि वि गल्लए।
पिअदंसणे पवड्ढइ मण्णुट्ठाणे वि रुप्पिणीअ पहरिसो॥

उपचारापेक्षप्रकर्ष आहार्यो यथा,—

धरिणीअ कइअव्वं वड्ढलं पिअअमे कुणन्तम्मि।
अकअत्थाइं वि जाआइं गत्तसिढिलिआइं अङ्गाइं॥

यौवनजो यथा,—

संवसुहकआहोआ जह जह थणआ किलेंति कुमरीणं
तह तह लद्धावासो व्व वम्महो हिअअमाविसइ॥

उपचारानपेक्षो विस्रम्भजो यथा,—

ण वि तह छेअरआइं हरन्ति पुणरुत्तराअरसिआइं।
जह जत्थ व तत्थ व जह व तह व सब्भावरसिआइं॥

प्रेमपुष्टिषु चक्षुःप्रीतिर्यथा,—

उत्पत्तिर्देवयजनाद्‌ ब्रह्मवादी नृपः पिता।
सुप्रसन्नोज्ज्वला मूर्तिरस्याः स्नेहं करोति मे॥

मनःसङ्गो यथा,—

एषा मनो मे प्रसभं शरीरात्‌ पितुः पदं मध्यममुत्पतन्ती।
सुराङ्गना कर्षति खण्डिताग्रात्‌ सूत्रं मृणालादिव राजहंसी॥

सङ्कल्पोत्पत्तिर्यथा,—

तं पुलइआ पि पेच्छइ तं विअ णिज्झाअइ तीअ गेण्हइ गोत्तं।
पइगं तस्सा मअणे अणं पि विचित्तं अखिसज्जिअहिअए॥

संलापो यथा,—अमअमअगअणसेहरअणीमुहतिलअ चन्द दे छिवसु ॥
छित्तो जेहि पिअअमो ममं पि तेहिं चिअ करेहिं ॥
जागरो यथा,—तइ विरहज्जागरिओ सिविणे वि ण देइ दंसणसुहाइं।
वाहेण जहा लोअणविलोअणं पि से वि हअं ॥
कार्श्यं यथा,—आइ कोवणा वि सा सुरूआ विआ गअवईए सोहणाए।
पाअपडणोणआए दोसु विगलिएसु वलएसु ॥
अरति विषयान्तरे यथा,—
असंमतो वि समप्पइ अपरिगाहिअलङ्कओ परगुणालावो।
तस्स पिआपडिवद्धा ण समप्पइ रइसुहासमत्ता वि कहा ॥
लज्जाविसर्जनं यथा,—
अगणिअसेसजुआणो वालअवोली ण लोअमज्जाआ।
अह सा भमइ दिसामुहपसारिअच्छी तुह कएण ॥
व्याधि यथा,—असाहणवीरइ च्चिअ परिवड्ढंतुरुगरुअसंतावं।
मरणविणोएण विणा ण विरमावेउ विरहदुक्खं।
उन्मादो यथा,—अवलम्बइ मांसं कहणरसगाहलङ्घिआ परिब्भमइ।
अत्थक्कगज्जिअउत्तन्तहित्थहिअआ पहिअजाआ ॥
मूर्च्छा यथा,—जं मुच्छिआणं अमुओ कलम्बगन्धेण तं गुणो पडिअं।
इअ रइगज्जिअदुसद्दो जीएण विणा ण वोलिन्तो ॥
मरणं यथा,—अज्जं पि ताव एक्कं मासं धारेइ पिअसहि धरन्ति।
पहि जण तम्मि गए जइ ण मरिस्सं ण रोइस्सं ॥
ता इमा विप्रलम्भजन्मानो द्वादशापि प्रेमपुष्टिभूमयः सम्भोगेषु स्वानुरूपामेव प्रेमप्रकर्षभूमिकामास्कन्दयन्ति। नायकेषु कथाव्यापी नायको यथा,—गुरोः शासनमत्येतुं न शशाक स राघवः।
यो रावणशिरश्छेदकार्यभारेऽप्यविक्लवः ॥
प्रतिनायको यथा,—जेतारं लोकपालानां स्वमुखैरर्चितेश्वरम्।
रामस्तुलितकैलासमरातिं बह्वमन्यत ॥

उपनायको यथा,—स हत्वा वालिनं वीरं तत्पदे चिरकाङ्क्षिते ।

धातोः स्थान इवादेशं सुग्रीवं संन्यवेशयत् ॥

अनुनायको यथा,—स मारुतसुतानीतमहौषधिहृतव्यथः ।

लङ्कास्त्रीणां पुनश्चक्रे विलापाचार्यकं शरैः ॥

कथाव्यापिनी नायिका यथा,—

तीए सविसेसदूमिअसवत्तिहिअआइ णिव्वरणन्तसिणेहं ।

पिअ गरुइआइ णिमिअं सोहग्गगुणाण अग्गभूमीअपअं ॥

प्रतिनायिका यथा,—

जंतिअसकुसुमदामं हरिणा णिम्महिअसुरहिगन्धामोअं ।

अप्पणइअं पि दूमिअ पणइ पि हिअएण रुप्पिणीअ विइण्णं ॥

उपनायिका यथा—

देवीस्वीकृतमानसस्य नियतं स्वप्नायमानस्य मे

तद्गोत्रग्रहणादियं सुवदना यायात् कथं न व्यथाम् ॥

इत्थं यन्त्रणया कथं कथमपि क्षीणा निशा जाग्रतो

दाक्षिण्योपहतेन सा प्रियतमा स्वप्नेऽपि नासादिता ॥

अनुनायिका यथा,—

श्लाघ्यानां गुणिनां धुरि स्थितवति श्रेष्ठान्वये त्वयि

प्राप्तस्त्व्यसने महीयसि परं प्रीतोऽस्मि जामातरि ।

तेनेयं मदयन्तिकाद्य भवतः प्रीतैव भवत्प्रेयसे

मित्राय प्रथमानुरागघटिताप्यस्माभिरुत्सृज्यते ॥

आभासेषु नायकाभासो यथा,—

कहं ण हिज्जउ मज्झो इमीअ कन्दोट्टदलसरिच्छेहि ।

अच्छीहि जो ण दीसइ घणथणहरसद्धपसरेहिं ॥

नायिकाभासो यथा,—

कृतसीतापरित्यागः स रत्नाकरमेखलाम् ।

बुभुजे पृथिवीपालः पृथिवीमेव केवलाम् ॥

उभयाभासो यथा,—

अवऊहिअ पुव्वदिसे समअं जोण्हाए सेविअपओसं मुहे।
माइ ण णिज्जइ अरुणो वरदिसाइ तपच्छिमम्मि मिआङ्के॥

तिर्य्यगाभासो यथा,—

ओरत्तपङ्कअमुहिं वमन्तणद्दिअं व सलिलआणिअसणं।
अच्छिअइ तीरणलिणिवाआइ गमेइ सहचरि वक्काओ॥

नायकेषु सर्व्वगुणसम्पद्योगादुत्तमः स यथा,—

रामोऽयं जगतीह विक्रमगुणै र्यातः प्रसिद्धिं परा-
मस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम्।
वन्दीवैष यशांसि गायति मरुद्यस्यैकवाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः॥

पादोनगुणसम्पद्योगान्मध्यमो यथा,—

किं नो व्याप्तदिशां प्रकम्पितभुवामक्षौहिणीनां फलं
किं द्रोणेन किमङ्गराजविशिखैरेवं यदि क्लाम्यसि।
जीवद्भ्रातृशतस्य मे भुजबलच्छायां सुखामाश्रिता
त्वं दुर्योधनकेसरीन्द्रगृहिणी शङ्कास्पदं किं तव॥

अर्द्धगुणसम्पद्योगात् कनिष्ठो यथा,—

एकस्मिन् शयने मया मयसुतामालिङ्ग्य निद्राशया-
मुन्निद्रं शयितेन मच्चरणयोः संवाहनव्यापृता।
पादाग्रेण तिलोत्तमा स्तनतटे सस्नेहमापीड़िता
हर्षादेव समर्पितानि पुलकान्यद्यापि नो मुञ्चति॥

सत्वप्रधानः सात्विको यथा,—

शक्तश्च वक्षसि मग्नया सह मया मूढ़े लवङ्गाधिपे
निद्राणेषु च विद्रवत्सु कपिषु प्राप्तावकाशे द्विषि।
मा भैष्टेति निरुन्धतः कपिभयं तस्योद्भटभ्रूस्थिते
र्मर्मच्छेदविसंष्ठुलाक्षरजड़ा वाचस्त्वया न श्रुताः॥

रजःप्रधानो राजसो यथा,—सामन्तमौलिमणिरञ्जितशासनाङ्क-

मेकातपत्रपवनेन तथा प्रभुत्वम्।

अस्याः सखे चरणयोरधिगम्य सम्यग्

आज्ञाकरत्वमहमद्य यथा कृतार्थः॥

तमःप्रधानस्तामसो यथा,—

तपो वा शस्त्रं वा व्यपदिशति यः कश्चिदिह वः

स दर्पादुद्दामद्विपमसहमानः कलयतु।

अरामां निःक्षीरध्वजदशरथीकृत्य वसुधा-

मतन्त्रस्त्वत्कल्पामपि परशुरामः शमयति॥

अनेकजानिः साधारणो यथा,—

स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसु-

र्द्यूते रात्रिरियं जिता कमलया देवी प्रसाद्याद्य च।

इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते

देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः॥

अनन्यजानिरसाधारणो यथा,—

आ विवाहसमयाद्गृहे वने शैशवे तदनु यौवने पुनः।

स्वापहेतुरनुपासितोऽन्यया रामबाहुरुपधानमेष ते॥

अहङ्कारप्रधानो धीरोद्धतो यथा,—

धर्मं वा मधुरा कृतान्तगृहिणीं दृप्ताग्रपश्चाङ्गुलं

वज्रं भूधरपक्षशोणितसुरापानोन्मदं वा रुषा।

शूलं वासुररक्तबिन्दुनिचितं गृह्णातु शूलायुधो

दृष्टुग्रनमहं निहन्मि समरे कश्चित् परित्रायताम्॥

रत्युपचारप्रधानः धीरललितो यथा,—

आधातुं विनयं निरागसि नरे कुर्वन्तु नामेश्वरा-

स्तेन स्वाशयशुद्धिरेव सुकरा प्रायः प्रभूणां पुरः।

प्रियमानिनि मन्यसे यदि तदा नितरं मनोवर्तिनी

ध्याता नामरसाऽपि चित्तफलके का वा त्वदन्या मया ॥

उपशमप्रधानो धीरप्रशान्तो यथा,—

कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतिशालिनी
भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम्।
प्रकृतिसुभगा ह्येते भावा मदस्य च हेतवो
व्रजति पुरुषो यैरुन्मादं त एव नवाङ्कुशाः ॥

विश्वव्यदारकर्मा धीरोदात्तः स यथा,—

कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरं गण्डोड्डमरपुलकं वक्त्रकमलम्।
मुहुः पश्यन् शृण्वन् रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ॥

कैतवप्रधानः शठो यथा,—

दृष्ट्वैकासनसङ्गते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥

कृतापराधोऽप्यविलक्षो धृष्टो यथा,—

शतं वारानुक्तः प्रियसखि वचोभिः स परुषैः
सहस्रं निर्धूतः पदनिपतितः पार्ष्णिहतिभिः।
कियत् कृत्वा बद्धः पुनरिह न वेद्मि भ्रुकुटय-
स्तथापि क्लिश्नन् मां क्षणमपि न धृष्टो विरमति ॥

हृदयङ्गमप्रवृत्तिरनुकूलो यथा,—

मुञ्च मानमनिमित्तकोपने सन्ध्यया प्रणमितोऽस्मि नान्यया।
किं न वेत्सि सहधर्मचारिणं चक्रवाकसमवृत्तिमात्मनः ॥

औपरोधिकप्रवृत्तिर्दक्षिणो यथा,—

अनेन कल्याणि मृणालकोमलं व्रतेन गात्रं ग्लपयस्यकारणम्।

प्रसादमाकाङ्क्षति यस्तवोत्सुकः स किं त्वया दासजनः प्रसाद्यते
नायिकागुणेषु सर्वगुणसम्पद्योगादुत्तमा यथा,—

हसिआइं समंसलकोमलाइं वीसम्भकोमलं वअणं ।
सब्भावगोमच्छपुलाइअं वणसिमो सुमहिलाणं ॥

पादोनगुणसम्पद्योगान्मध्यमा यथा,—

णिअदइअदंसणुक्खित्त पहिअअणेण वससुपहेण ।
गहवइबहूआ दुल्लङ्घिवाउदाहअपहइगामो ॥

अर्द्धगुणसम्पद्योगादधमा यथा,—

त किं खण विरज्जसि तं किरउ व हससि अलमहिलाओ ।
एहेहि वारवालिइअं सुमइमलं समुप्पिसिओ ॥

वयःकौशलाभ्यामसम्पूर्णा मुग्धा यथा,—

सहिआहिं भणमाणा त्थणए लग्गकुसुम्भपुप्फं ति ।
मुद्धवहूआ हसिज्जइ पप्फोडन्ती णहवआइ ॥

वयसा परिपूर्णा मध्यमा यथा,—

पडिवक्खमत्तउजेला वसउ दे अणइअकुम्भपुरि ।
ससअहिअअधरिए कीस त्थणन्ती त्थणे वहसि ॥

वयःकौशलाभ्यां सम्पूर्णा प्रगल्भा यथा,—

खिण्णस्स वचेइरपइणो गिह्मावरण्हरमिअस्स ।
ओल्लं गलन्त उप्फणहाणसुअंधचिउरभारं ॥

पलायनेऽपमाना धीरा यथा,—

ण वि तह अणालवन्ती हिअअं दूमेइ माणिणी अहिअं ।
जह दूरे वि अभिअगरूअरोसमज्झत्थभणिएहिं ॥

अपलायनेऽपमानाऽधीरा यथा,—

अवलम्बिअमाणपरम्मुहीअ एए तस्स माणिणि पिअस्स ।
पुट्ठिपुलग्गामो तुह कहेइ समुहट्ठिअं हिअअं ॥

आत्मीया स्वा यथा,—

श्लाघनीयमाना ललिता यथा,—

हसिएहि उग्रालम्भा अच्छ वग्रारेहि रूसिग्रव्वाइ ।
अस्सूइ भण्डणाइं एसो मग्गो सुमहिलाणं ॥

अनियतानेकोपभोग्या सामान्या यथा,—

कइएक्कधूमघारे अव्भुत्तणमाग्गणो समप्पिहिइ ।
मुहकमलचुम्बणलेहलम्मि पासत्थिए दिअरे ॥

पत्यन्तरं प्राप्ता पुनर्भूर्यथा,—

मयेन निर्मितां लंकां लब्ध्वा मन्दोदरीमपि ।
विमनक्त दिशामीव लक्ष्मीमिव विभीषणः ॥

स्वातन्त्र्यच्छन्दा स्वैरिणी यथा,—

तह सा जाणइ जारालोए पच्छसामविणग्रं कारं ।
जह पढमं चिग्र लिक्खइ मज्झे चरित्तवतीण ॥

कलाचतुःषष्टिविद् गणिका यथा,—

सच्छन्दरमणदंसणरसवड्ढिग्रगरुअवम्महविलासं ।
सुविअट्ठवेसवाणिग्रारमिग्रंको वण्णिउं तरइ ॥

रूपयौवनमात्रोपजीविनी रूपाजीवा यथा,—

अयमेव दह्यमानस्मरनिर्गतधूमवर्त्तिकाकारः ।
चिकुरभरस्तव सुन्दरि कामिजनं किङ्करीकुरुते ॥

कुट्टिमितादीनां कर्त्री विलासिनी यथा,—

सामग्रसुन्दरीणं विब्भममावहइ अविणग्रोच्चेग्र ।
धूमच्चिग्रपज्जलिग्रा ण वज्जग्रो सुरहिदारुण ॥

यथोक्तलक्षणासु खण्डिता यथा,—

पञ्चसागयणु रत्ताग्रयत्तांसइ लोग्रलोग्रणाणन्द ।
अग्रत्तरव चिग्र सव्वरिणहभूसणवइ णमो दे ॥

कलहान्तरिता यथा,—

अह सो विलक्खहिग्रग्रो मए अहव्वाइ अगणिग्रप्पणग्रो ।

परवज्जणच्चिरीहिँ तुम्हेहिँ उवेक्खिओ जं तो ॥

विप्रलब्धा यथा,—

अह सा तहिँ तहिँ विअ वाणीरवणम्मि चुक्कसङ्केआ।
तुह दंसणं विमग्गइ पब्भट्ठणिहाणठाणाव्व ॥

वासकसज्जा यथा,

एहिइ पिओ त्ति णिमिसं व जग्गिअं जामिणीअ पढमद्धं।
सेसं सतावपरव्वसाए वरिसं व वोलीणं ॥

स्वाधीनपतिका यथा,—

सालोए च्चिअ सूरे घरिणी घरसामिअस्स घेत्तूण।
णेच्छन्तस्स वि पाए धुअइ हसन्ती हसन्तस्स ॥

अभिसारिका यथा,—

रक्खेहि सितसमणसंभार सूरस्सु तरुणि वट्टउ मिअङ्को।
उल्लेइहम्मि वड्चन्दिआए को पेच्छइ सुहं ते ॥

प्रोषितभर्त्तृका यथा,—

गिम्हे दवग्गिमसिमलिआइं दीसन्ति विञ्झसिहराइं।
आसङ्कपउत्थपइए ण होन्ति णवपाउसब्भाइं ॥

विरहोत्कण्ठिता यथा,—

अस्मिन् वर्षसहे न वर्तत इदं यत् कामदेवोत्सवे
स्थेयं पुत्रि निरन्तरा तदधुना किञ्चिन्मुखे दीयताम्।
इत्युक्ते जरतीजनेन कथमप्यध्वन्यवध्वा ततः
पर्यस्तेऽहनि कल्पितश्च कवलो धौतश्च धाराम्बुभिः ॥

हीनपात्रेषु शकारो यथा,—

पलिस्खले लम्बदशाकलाअं पावालयं शुत्तशदेहि दत्तं।
मंशञ्च खाइं तुह तुट्टि काइं चुकुचुकु चुक्कु चुकुचुकुम्मि ॥

ललको यथा,—

कम्बलवाणिएकत्ति फुट्टं मलदन्तिधिछ्ठि लुड्डिए मइयेआलसिलम्मि

सोवरि जग्गिरि ण तुमं सहि खरा
विदुमप्फुलिण लोओ सिं ण आगच्छि ॥

अमात्यादिरासनार्हः पाषण्डादि र्वा पीठमर्दः । तयोरमात्येषु माल्यवान् यथा,—हा वत्साः खरदूषणत्रिशिरसो बध्याः स्थ पापस्य मे

हा हा वत्स विभीषण त्वमपि मे कार्येण हेयः स्थितः ।
हा मद्वत्स वत्स रावण महत् पश्यामि ते सङ्कटं
वत्से केकसि हा हतासि न चिरं त्रीन् पुत्रकान् द्रक्ष्यसि ॥

पाषण्डेषु भैरवानन्दो यथा,—

दंसेमि तं पि ससिणं वसुहावइण्णं थम्भेमि तस्स वि रइस्स रहं णहद्धे ।
आणेमि जक्खसुरसिद्धगणं गणाओ
तं णत्थि भूमिवलए मह जं ण सज्झं ॥

वैहासिकः क्रीडनको विश्वास्यश्च विदूषकः ॥ १७० क ॥

यथा,—फुल्लुक्करं कलमकूरसमं वहन्ति
जे सिन्दुवारविडवा महवल्लहा दे ।
जे गालिदस्स महिसीदहिणो सरिच्छा
रूपन्ति मुद्धविअइल्लपसूणपुञ्जा ॥

मान्यः कलत्रवान् भुक्तविभवो गुणवान् विटः ॥ १७० ॥

स यथा,—शकार किं प्रार्थनया प्रावारेणाजिपेण वा ।
अकार्यवर्जं मे ब्रूहि किमभीष्टं करोमि ते ॥

यात्रे यकादिश्चेटो यथा,—

चन्द्रापीडोऽथ सञ्जातपीडः कादम्बरीं प्रति ।
प्राहिणोत् स्रस्तकेयूरः केयूरकमुपस्थितम् ॥

पताकास्तु,—

स्वात्मोपयोगिन्यन्योपयोगिन्यनुपयोगिनी ।
पताकेत्यापताकेति प्रकरीति प्रकीर्त्यते ॥ १७१ ॥

तासु पताका हनूमान् यथा,—

दिष्ट्या सोऽयं महाबाहुरञ्जनानन्दवर्द्धनः ।
यस्य वीर्येण कृतिनो वयञ्च भुवनानि च ॥

आपत्ताकामकर्यौ मारीचजटायुषौ यथा,—

रक्षसा मृगरूपेण वञ्चयित्वा स राघवौ ।
जहार सीतां पक्षीन्द्रप्रयासक्षणविघ्नितः ॥

सहजा पूर्वजागन्तुः सखीह त्रिविधोच्यते ॥ १७२ क ॥

तासु लवङ्गिकादिः सहजा यथा,—

उज्ज्वलालोकया स्निग्धा त्वया त्यक्ता न राजते ।
मलीमसमुखी वर्त्तिः प्रदीपशिखया यथा ॥

कामन्दक्यादिः पूर्वजा यथा,—

तया विनयनस्यापि यथा मालत्युपायतः ।
नीता कतिपयाहोभिः सखी विस्रम्भसेव्यताम् ॥

त्रिजटादिरागन्तु र्यथा,—

जाणइ सिणेहभणिअं मा रअणिचरित्ति जुगुच्छसु वअणं ।
उज्जाणम्मि वणम्मि अ जं सुरहिं तं लआण गेण्हइ कुसुमं ॥

नायकगुणेषु महाकुलीनत्वं पुंसो यथा,—

वासिष्ठैः सुकृतोद्भवोऽध्वरशतैरस्त्यग्निकुण्डोद्भवः
भूपालः परमार इत्यधिपतिः सप्ताब्धिकाञ्चे भुवः ।
अद्याप्यद्भुतहर्षगद्गदगिरो गायन्ति यस्योद्भटं
विश्वामित्रजयोर्जितस्य भुजयो र्विस्फूर्जितं गुर्जराः ॥

औदार्यं यथा,—

दिङ्मातङ्गघटाविभक्तचतुरा घाटा मही साध्यते
सिद्धा सापि वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत्कथाद्भुतमिदं यत्रैव चास्तं गतम् ॥

महाभाग्यं यथा,—

दोर्निष्पेषविशीर्णवज्रशकलमत्युग्रमुग्रध्वज-
प्रत्युग्रङ्गासिनि भग्नमोघमघवन्मातङ्गदन्तोद्यमे।
भर्तुर्नन्दनदेवताविरचितस्रग्दाम्नि भूमेः सुता
वीरश्रीरिव तस्य वक्षसि जगद्वीरस्य विश्राम्यतु॥

कृतज्ञता यथा,—

कृते च कुपितैर्बाष्पाम्भोभिः सदैन्यविलोकितैः
वनमसि गता यस्य प्रीत्या धृतापि तया त्वया।
नवजलधरश्यामाः पश्यन् दिशो भवतीं विना
कठिनहृदयो जीवत्येव प्रिये स तव प्रियः॥

रूपसम्पद् यथा,—

व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः।
आत्मकर्मक्षमं देहं क्षात्त्रो धर्म इवाश्रितः॥

यौवनसम्पद् यथा,—

महोक्षतां वत्सतरः स्पृशन्निव द्विपेन्द्रभावं कलभः श्रयन्निव।
रघुः क्रमाद् यौवनभिन्नशैशवः पुपोष गम्भीरमनोहरं वपुः॥

वैदग्ध्यसम्पद् यथा,—

कोऽयं भामिनि भूषणं कितव ते शोणः कथं कुङ्कुमात्
कूर्पासान्तरितः प्रिये विनिमयः पश्चापरं कास्ति मे।
पश्यामीत्यभिधाय सान्द्रपुलकौ स्पृशन् स्वदाराः स्तनौ
हस्तेन प्रतिनिर्जितेन्द्रवनितात् पूयते हसन् वो हरः॥

शीलसम्पद् यथा,—

का त्वं शुभे कस्य परिग्रहो वा किं वा मदभ्यागमकारणं ते।
आचक्ष्व मत्वा वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति॥

सौभाग्यसम्पद् यथा,—

असौ विद्याधारः शिशुरपि विनिर्गत्य भवनात्
इहायातः सम्प्रत्यविकलशरच्चन्द्रमधुरः।

यदा लोकस्याने भवति पुरसुन्मादतरलैः
कटाक्षै र्नारीणां कुवलयितवातायनमिव ॥

मानिता यथा,—

यदात्थ कामं भवता स याचनतामिति क्षमं नैतदनल्पचेतसाम्।
कथं प्रसह्याहरणैषिणां प्रियाः परानुवृत्तत्रा मलिनीकृताः श्रियः।

उदारवाक्यत्वं यथा,—

ख्याता एव वयं जगत्सु चरितै र्वाग्भिः किमाख्यायते
संयत्तो भव शक्तिरस्ति भवतः सत्यं मनुष्यो भवान्।
शक्तै रव्यवधीयमानयशसः प्रायो वयं तेषु चेत्
प्राङ्गस्ते ननु सन्ति तेऽपि गिरयो ये वानराः शक्तिणः॥

स्थिरानुरागिता यथा,—

ततः कैरपुत्रक्ते परिणयविधौ काष्ठमुनिभिः
पुराणैरातङ्कग्लपितहृदयेन चिन्तिभृता।
विना वाचं नैतत् क्षपयति निधायाननमधः
पतद्वाष्पाम्भोभि र्निखिलमिव दत्तं प्रतिवचः॥

नायिकागुणेषु स्त्रिया महाकुलीनता यथा,—

मानुषीभ्यः कथं वा स्यादस्य रूपस्य सम्भवः।
न प्रभातरलं ज्योतिरुदेति वसुधातलात्॥

औदार्यं यथा,—

भ्रूभेदे सहसोद्गतेऽपि वदनं नीतं परां नम्रता-
मीषन् मां प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम्।
अन्तर्वाष्पजडीकृतं प्रभुतया चक्षु र्न विस्फारितं
कोपश्च प्रकटीकृतो दयितया मुक्तश्च न प्रश्रयः॥

महाभाग्यं यथा,—

तां नारदः कामचरः कदाचित् कन्यां किल प्रेक्ष्य पितुः समीपे।
समादिदेशैकवधूं भवित्रीं प्रेम्णा शरीरार्द्धहरां हरस्य॥

कृतज्ञता यथा,—

पुरिससरिसं तुह इमं रक्खसस रिसं कअं णिसाअरवइणा ।
कह आचिन्तिज्जं महिलासरिसं ण संपडइ मे मरणं ॥

रूपसम्पद् यथा,—

आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः ।
उपमानस्यापि सखे प्रत्युपमानं वपुस्तस्याः ॥

यौवनसम्पद् यथा,—

उन्मीलितं तूलिकयेव चित्रं सूर्यांशुभि र्भिन्नमिवारविन्दम् ।
बभूव तस्याश्चतुरस्रशोभि वपु र्विभक्तं नवयौवनेन ॥

वैदग्ध्यसम्पद् यथा,—

एकत्रासनसङ्गतिः परिहृता प्रत्युद्गमाद् दूरत-
स्ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः ।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके
कान्तं प्रत्युपकारसश्चतुरया कोपः कृतार्थीकृतः ॥

शीलसम्पद् यथा,—

पत्तुरघरिणी पिअदंसणा अ बाला पउत्थवइआ अ ।
असरसपञ्जिआ उग्गआ अ णइ खण्डिअं सीलं ॥

सौभाग्यसम्पद् यथा,—

सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥

मानिता यथा,—

शैलात्मजाऽपि पितुरुच्छिरसोऽभिलाषं
व्यर्थं समर्थ्य ललितं वपुरात्मनश्च ।
सख्योः समक्षमिति चाधिकजातलज्जा
शून्या जगाम भवनाभिमुखं कथञ्चित् ॥

उदारवाक्यत्वं यथा,—

यथा श्रुतं वेदविदां वर त्वया जनोऽयमुच्चैः पदलङ्घनोत्सुकः।
तपः किलेदं तदवाप्तिसाधनं मनोरथानामगतिर्न विद्यते॥

स्थिरानुरागिता यथा,—

अलं विवादेन यथा श्रुतं त्वया तथाविधस्तावदशेषमस्तु सः।
ममात्र भावैकरसं मनः स्थितं न कामवृत्तिर्वचनीयमीक्षते॥

पाकभक्तिषु आदावस्वादु अन्ते स्वादु मृद्वीकापाकं यथा,—

प्राक् कामं दहता कृतः परिभवो येनाद्य संध्यानतः
सेर्ष्या वोऽवतु चण्डिका चरणयोस्तं पातयन्ती पतिम्।
कुर्वन्त्यभ्यधिकं क्षते प्रतिकृतं मुक्तेन मौलौ मुहु-
र्वाम्येणाततकज्जलेन लिखितं लक्ष्मेव चन्द्रे यया॥

आद्यन्तयोः स्वादु नारिकेलीपाकं यथा,—

जह इच्छा तह रमिअं जाआ पत्ता पई गआ धूआ।
घरसामिअस्स अस्स अज्ज वि सोको उदच्छाइ अच्छीइ॥

आदिमध्यान्तेषु स्वादु स्वादुतरं स्वादुतममितआम्रपाकं यथा,—

आयादस्ति प्रतिहता स्मृतिलोपरूक्षे
भर्त्तर्यपेततमसि प्रभुता तवैव।
छाया न मूर्च्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा॥

यन्नापैति न चातिशोभते तन्नीलीरागं यथा,—

हित्वा सीतां दशमुखरिपुर्नोपयेमे यदन्यां
तस्या एव प्रतिकृतिसखो यत् क्रतूनाजहार।
वृत्तान्तेन श्रवणविषयप्रापिणा तेन भर्तुः
सा दुर्वारं कथमपि परित्यागदुःखं विषेहे॥

यदपैति च शोभते च तत् कुसुम्भरागं यथा,—

बङ्कवलक्खेस ण होइ वल्लहा कह पि पक्खहिअहाइ।
सा किं च्छन्दं मग्गइ कत्तो मिच्छं च यङ्कअ च

यत् नापैति अपि च शोभते तत् मञ्जिष्ठारागं यथा,—

वेवइ जस्स सविड्डिअं वलिउं महइ पुलआइअत्थणकलस
पेम्मसहावविसुद्धिअं बीओवासगमनोसुअं वामङ्गं ॥

गूढ़व्यलीकं अन्तर्व्याजं यथा,—

प्रत्यग्रोज्झितगोकुलस्य शयनादुत्स्वप्नमूढस्य मे
सा गोत्रस्खलनादपैतु च दिवा राधेति भीरोरिति ।
रात्रावस्वपतो दिवा च विजने लक्ष्मीति चाभ्यस्यतः
राधां मस्मरतः श्रियं रमयतः खेदो हरेः पातु वः ॥

अगूढ़व्यलीकं वहिर्व्याजं यथा,—

चक्षुर्यस्य तवाननादपगतं नाभूत् क्वचित् निर्वृतं
येनैषा सततं त्वदेकशयनं वक्षःस्थली कल्पिता ।
येनोक्तासि विना त्वया मम जगच्छून्यं क्षणाज्जायते
सोऽयं दम्भधृतव्रतः प्रियतमः कर्तुं किमभ्युद्यतः ॥

अव्यलीकं निर्व्याजं यथा,—

निं कण्ठे शिथिलीकृतो भुजलतापाशः प्रमादात् मया
निद्राच्छेदविवर्तनेष्वभिमुखं नाद्यासि सम्भाविता ।
अन्यस्त्रीजनसंकथालघुरहं स्वप्ने त्वया वीक्षितः
दोषं पश्यसि किं प्रिये परिजनोपालम्भयोग्ये मयि ॥

धर्मानुबन्धि धर्मोदर्कं यथा,—

अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्वा यूने सितातपवारणम् ।
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥

अर्थानुबन्धि अर्थोदर्कं यथा,—

भूत्वा चिराय सदिगन्तमहीसपत्नी
दौष्मन्तिमप्रतिरथं तनयं प्रसूय ।

तत्सन्निवेशितभरेण सहैव भर्त्रा
श्रान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥

यत् पुनः काममेवानुबध्नाति तत् कामोदर्कं यथा,—

अद्वैतं सुखदुःखयोरनुगुणं सर्वास्ववस्थासु यत्
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः।
कालेनावरणात्ययात् परिणते यत् स्नेहसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि यत् प्रार्थ्यते ॥

नानालङ्कारसंसृष्टः प्रकाराश्च रसोक्तयः। इत्युक्तं, तत्र अलङ्कारसंसृष्टः इत्येव वक्तव्ये नानालङ्कारग्रहणं गुणरसानामुपसङ्ग्रहार्थम्, तेषामपि हि काव्यशोभाकरत्वेनालङ्कारत्वात्। यदाह,—

काव्यशोभाकरान् धर्मान् अलङ्कारान् प्रचक्षते।
ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति ॥
काश्चिन् मार्गविभागार्थमुक्ताः प्रागप्यलङ्क्रियाः।
साधारणमलङ्कारं जातमन्यत् प्रदर्श्यते ॥

तत्र काव्यशोभाकरान् इत्यनेन श्लेषोपमादिवद् गुणरसभावतदाभासप्रसादादीनपि उपगृह्णाति। मार्गविभागकृद्गुणानामलङ्क्रियोपदेशेन श्लेषादीनां गुणत्वमिव अलङ्कारत्वमपि ज्ञापयति—

श्लेषः प्रसादः समता माधुर्यं सुकुमारता।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥
इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः।
तेषां विपर्ययः प्रायो लक्ष्यते गौडवर्त्मनि ॥

इति श्लेषादीनां दशानामेव मार्गप्रविभागकारितां ब्रुवन् काव्यशोभाकरत्वेन गुणान्तराणामपि अलङ्कारत्वमुपकल्पयति ॥ तदाह, कस्तान् कार्त्स्न्येन वक्ष्यति इत्तमिदमुक्तम्। अयुक्तन्त्विदमुक्तं रसानामलङ्कारता इति ॥ तेषां गुणानामिव अलङ्कारव्यपदेशाभावात् नायुक्तम्। उक्तोत्कर्षाणामूर्जस्विरसवत् प्रेयसामलङ्कारेषूपदेशात्।

तद् यथा,—

प्रेयः प्रियतराख्यानं रसवद् रसपेशलम् ।
ऊर्जस्वि रूढाहङ्कारं युक्तोत्कर्षञ्च तत् त्रयम् ॥

तत्र ऊर्जस्वि रूढाहङ्कारमित्यनेन आत्मविशेषनिष्ठस्य उत्कृष्टजन्मनोऽनेकजन्मानुभवसंस्कारा हि तद् ढ़िम्नः संग्रामे गुणसम्पद्वृतपादातिशयहेतोर्विशेषस्य उपसंग्रहादहङ्काराभिमानश्टङ्गारापरनाम्नो रसस्य मानमयविकाररूपेणाभिमानिनां मनसि जाग्रतः परां कोटिमुपवर्णयति । रसवद्रसपेशलमित्यनेन विभावानुभावव्यभिचारिसात्त्विकसंयोगाद्रसनिष्पत्तिरिति रत्यादिरूपेणानेकधाविर्भवतोऽभिवर्धमानस्य परप्रकर्षगामिनः श्टङ्गारस्य मध्यमावस्थां सूचयति । प्रियतराख्यानमित्यनेन समस्तभावमूर्द्धाभिषिक्ताया रतेः प्रकर्षाधिगमाद् भावनाभिगमे भावरूपतामुत्सृज्य प्रेमरूपेण परिणताया उपादानाद् भावान्तराणामपि परप्रकर्षाधिगमे रसरूपेण परिणतिरिति ज्ञापयन्नलङ्कारस्योत्तमां कोटिमुपलक्षयति । सर्वेषामपि हि रत्यादिप्रकर्षाणां रतिप्रियः, रणप्रियः, परिहासप्रियः, अमर्षप्रिय इति प्रेम्ण एव पर्यन्तस्थानं भवति । युक्तोत्कर्षञ्च तत् त्रयमित्यनेनायुक्तोत्कर्षाणां त्रयाणामपूर्जस्विप्रभृतीनां गुणत्वमेव नालङ्कारत्वमित्यवस्थापयति । तथाहि, और्जित्यं भाविकं प्रेय इति गुणेषु भण्यते, कुतः पुनरिदमेकदोर्जस्वि-रसवत्-प्रेयसामलंकारत्वमन्यदा गुणत्वम्, उच्यते—

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥

यथा,—गोमान् देवः, वाचालो वटुः, वाग्मी विपश्चित्, धीरिणो दृप्ताः, बलवान् मल्लः, दण्डी, गोमती शालेति ॥ तत्रोर्जस्विरसवतोरलङ्कारत्वविवक्षायामतिशायने वा भूम्नि वा मतुबर्थीयः । गुणत्वविवक्षायान्तु प्रशंसानित्ययोगयोरिति द्रष्टव्यम् ॥ नित्यो हि काव्येषु गुणयोग इव रसादियोगः, गुणवतो रसवतश्च निश्चितैवास्य प्रशंसा, संसर्गस्तु गुणा-

न मवश्यमुपादानेषु निन्दा पुनर्दोषहानेन वितरति। गुणेषु प्रेम इति रूपाभेदात् कथमलङ्कारत्वे तदुत्कर्षप्रतीतिः, यथा,—युधिष्ठिरः श्रेष्ठतमः कुरूणाम्॥ इति। तत्रातिशायिगुणान्तरेण तदवगतिरिति चेत् इहापि युक्तोत्कर्षश्च तत्त्वयम् इति वाक्यान्तरेण भविष्यति। न चातिशायिकाः स्वार्थातिरिक्तं किमपि ब्रुवते, अपि तु मत्वर्तुप्रत्ययमेव प्रकर्षादिकं गमयन्ति। स्वार्थिकेषु ह्येते विधीयन्ते। एवमवस्थापिते गुणरसानामलङ्कारत्वे षट्प्रकारो रसालङ्कारसङ्करः सम्भवति। गुणसङ्करः, अलङ्कारसङ्करः, गुणालङ्कारसङ्करः, रससङ्करः, रसगुणसङ्करः, रसालङ्कारसङ्करश्चेति॥ नन्वत्र गुणानां सङ्करव्यवहारो नोपपद्यते बहुष्वपि गुणेषु गुणवदित्येव व्यपदेशात्। नैवम् त्रिविधा गुणाः—शब्दगुणाः, अर्थगुणाः, दोषगुणाश्च॥ ते तु प्रत्येकं द्विधा—उल्लेखवन्तः, निरुल्लेखाश्च॥ तत्र शब्दगुणेषु समाधिमाधुर्यौदार्यगाम्भीर्यादयः सोल्लेखाः, श्लेषप्रसादसमतासौकुमार्यादयो निरुल्लेखाः। अर्थगुणेषु प्रसादरीतिकान्त्यादयः सोल्लेखाः, अर्थव्यक्तिसौक्ष्म्यगाम्भीर्यादयो निरुल्लेखाः। दोषगुणेषु ग्राम्यपुनरुक्तापार्थान्यार्थादयः सोल्लेखाः, शब्दहीनसम्भ्रमापक्रमविसन्धयादयो निरुल्लेखाः। तत्र सजातीयानां सोल्लेखानामेव, विजातीयानान्तु निरुल्लेखानामपि सङ्करव्यवहारः प्रवर्त्तते। सजातीयानां शब्दगुणेषु समाध्यादीनां यथा,—

णवपल्लवेसु लोलइ घोलइ विलग्गेसु वलइ सिहरेसु।
पवइ पवएसु अ तहा वसन्तलच्छी असोअस्स॥

अत्रान्यधर्माणामन्यत्रारोपणं समाधिः, पृथक्पदता माधुर्यं, बन्धविकटत्वमुदारता, ध्वनिमत्ता गाम्भीर्यमिति सजातीयाः सङ्कीर्यन्ते। यतो वसन्तलक्ष्मीरशोकस्येति पदयोः शब्दध्वनिरपि परिस्फुरति। यथा कस्यचिदशोकस्य मानिनोऽङ्गेषु प्रियाङ्गना सविलासं चेष्टते तथा अशेषयमिति॥ अर्थगुणेषु श्लेषादीनां यथा,—

जनः पुण्यैर्यायाज्जलधिजलभावं जलमुचः
तथावस्थं चैनं निदधतु शुभैः शुक्तिवदने ।
ततस्तां श्रेयोभिः परिणतिमसौ विन्दतु यथा
रुचिं तन्वन् पीनस्तनि हृदि तवायं विलुठति ॥

अत्र संविधानेषु रूढता श्लेषः, अर्थस्य प्राकट्यं प्रसादः, उत्पत्त्यादिक्रियाक्रमो रीतिः, दीप्तरसत्वं कान्तिरित्यर्थगुणाः सजातीयाः सङ्कीर्यन्ते ॥ दोषगुणेषु ग्राम्यादीनां यथा,—

हन्यते सा वरारोहा स्मरेणाकाण्डवैरिणा ।
हन्यते चारुसर्वाङ्गी हन्यते मञ्जुभाषिणी ॥

अत्र हन्यत इत्यसङ्गतार्थम्, वरारोहेत्यश्लीलार्थम्, हन्यत इति पुनरुक्तम्, चारुसर्वाङ्गीत्युक्ते वरारोहेति व्यर्थम्, त एते सजातीयाश्चत्वारोऽपि दोषगुणाः सङ्कीर्यमाणाः कस्यचिदुन्मत्तभाषिणोऽनुकम्पाद्यतिशयविवक्षायामभ्यनुज्ञायन्ते ॥ यदाह,—

अनुकम्पाद्यतिशयं यदि कश्चिद्विवक्षते ।
न दोषः पुनरुक्तादौ प्रत्युतेयमलङ्क्रिया ॥

अथ सजातीयानां शब्दगुणानामर्थगुणानाञ्च सङ्करो यथा,—

को नाम नोदयति नास्तमुपैति को वा
लोकोत्तरः पुनरयं सविता जगत्सु ।
यत्नोदयास्तमयभाजि रुचां निधाने
द्वेधा भवत्यहरिति क्षणदेति कालः ॥

अत्र यावदर्थपदता सम्मितत्वम्, समग्रबन्धविकटत्वमुदारता, विशेषगुणयोग उदात्तत्वमिति शब्दगुणाः, उक्तार्थनिर्वहणं प्रौढिः, अर्थप्राकट्यं प्रसादः, रूढाहङ्कारतोर्जित्वमित्यर्थगुणाः सङ्कीर्यन्ते । शब्दगुणानां दोषगुणानाञ्च यथा,—

एहेहि वत्स रघुनन्दन पूर्णचन्द्र
चुम्बामि मूर्द्धनि चिराय परिष्वजे त्वाम् ।

ज्यैष्ठे मासि खरार्कतेजसि कथं पान्थ व्रजन् जीवसि ॥

अत्रावन्तिका रीतिः, पदमुद्रा, विभक्तिमुद्रा, अनुप्रासश्चेति शब्दालङ्काराः, जातिः, कारकज्ञापकौ हेतू, चित्रहेतुश्चेत्यर्थालङ्कारा मिथः शब्दे सङ्कीर्यन्ते। शब्दोभयालङ्कारसङ्करो यथा,—

स्तोकस्तोकमभूभिरम्बरतले ताराभिरस्तं गतं

गच्छत्यस्तगिरेः शिरस्तदनु च च्छायादरिद्रः शशी।

प्रत्यासन्नतरोदयस्य तरणेर्बिम्बारुणिम्ना ततो

मञ्जिष्ठारसलोहिनी दिगपि च प्राची समुन्मीलति॥

अत्र समुन्मीलतीति विभक्तिमुद्रा, स्तोकस्तोकमस्तं गच्छतीत्यादिरनुप्रासश्च शब्दालङ्काराः, हेतूपमा, समाधिः, अनुक्रमः, समुच्चयोक्तिश्चेत्युभयालङ्कारा मिथः सङ्कीर्यन्ते॥

अर्थोभयालङ्कारसङ्करो यथा,—

खं वस्ते कलविङ्ककण्ठमलिनं कादम्बिनीकम्बलं

चर्चां पारयतीव दर्दुरकुलं कोलाहलैरुन्मदम्।

गन्धं मुञ्चति सिक्तलाजसुरभिं वर्षेण दग्धा स्थली

दुर्लक्ष्योऽपि विभाव्यते कमलिनीहासेन भासां पतिः॥

अत्र जातिः, अनुमानं, कारकज्ञापकहेतू चेत्यर्थालङ्काराः, रूपकोपमा, हेतूपमा, उत्प्रेक्षोपमा चेति उभयालङ्काराः मिथः सङ्कीर्यन्ते॥ एतेन गुणालङ्कारसङ्करोऽपि व्याख्यातः॥ असौ यद्यपि गुणवत्येव वाक्ये सङ्करयोगः तथापि क्वचिद् गुणस्य प्राधान्यं क्वचिदलङ्कारस्य इति प्रधानाङ्गभावेन गुणालङ्कारयोः सङ्करव्यवहारः प्रवर्तते। स षोढा—शब्दगुणप्रधानः, अर्थगुणप्रधानः, दोषगुणप्रधानः, शब्दालङ्कारप्रधानः, अर्थालङ्कारप्रधानः, उभयालङ्कारप्रधानश्च इति॥ तेषु शब्दगुणप्रधानो यथा,—

प्रालेयेऽपि कथमात् पुनरपि मथितुं मन्दरं वा विदध्यात्

निद्रामर्थस्य पूर्वामनलसमनसो नैव सम्भावयामि।

सेतुं प्रश्नाति भूयः किमिति च सकलद्वीपनाथानुयातः

त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः ॥

अत्र हेतूत्प्रेक्षाभिधाने त्वयि इत्यादौ पदे विष्णोः स्वरूपाध्यासेन तद्भावापत्तौ समाधेः प्राधान्यमिह प्रतीयते ॥ ननु च अयमर्थस्य प्राकट्यात् प्रसादोऽर्थगुणः कस्मान्न भवति अस्मिन्नपि तद्व्यपदेशेन शब्दशक्त्याधिक्यात्। ननु च त्वयि इति एष इति अस्य इति युष्मदेतदिदमां न कश्चन विष्णुवाची स कथं वर्णनीये वस्तुनि तमर्थमभिदध्यात्। उच्यते, सर्वनामत्वेन एषां सर्ववाचित्वात्। सर्वनामानि हि सर्वनामाभिधायीन्यपि प्रकरणादिगम्यविशेषमिव ब्रुवते, स च इह प्राप्तश्रीरितेत्येवमादिभिरभिव्यक्त एवाभिगम्यते इति ॥ अर्थगुणप्रधानो यथा,—

लक्ष्मीवशीकरणचूर्णसहोदराणि
त्वत्पादपङ्कजरजांसि चिरं जयन्ति।
यानि प्रणाममिलितानि नृणां ललाटे
लिम्पन्ति दैवलिखितानि दुरक्षराणि ॥

अत्र हेतुसाम्योभयालङ्काराभिधानेऽपि प्राधान्येनार्थप्राकट्यमर्थगुणः प्रतीयते ॥ दोषगुणप्रधानो यथा,—

येनापविद्धसलिलस्फुटनागसद्मा
देवासुरैरमृतमम्बुनिधिर्ममन्थे।
व्यावर्तनैरहिपतेरयमाहिताङ्कः
खं व्यालिखन्निव विभाति स मन्दराद्रिः॥

अत्र व्यावर्तनैरहिपतेरयमाहिताङ्कः इति ज्ञापकहेतोः, खं व्यालिखन्निव इति उत्प्रेक्षावयवाच्च, देवासुरैरिति नित्यविवक्षायां बहुवचनम्; अमृतमम्बुनिधिर्ममन्थे इति द्विकर्मकेष्वपि मथिप्रभृतीनामुपसंख्यानमिति अमृतशब्दात् द्वितीया इति दोषगुणयोः प्राधान्यं प्रतीयते ॥ ननु च अत्रापि अर्थस्य प्राधान्यं न भवति तद्विषयस्य ज्ञापकहेतुना अपह्नुतत्वात्। सोऽपि अर्थालङ्कार एव गुणालङ्कारयोश्च तुल्यकक्षतायामलङ्कारः प्रधानं भवति न गुणः, गुणे हि गुणभूतैरेव अलङ्काराः प्राय

ारभ्यन्ते ॥ तद् यथा,—

अस्पृष्टा दोषमात्राभिः समग्रगुणगुम्फिता।
विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते ॥ १७३ ॥
समस्तात्युद्भटपदामोजःकान्तिसमन्विताम्।
गौडीयां तां विजानन्ति रीतिं रीतिविचक्षणाः ॥ १७४ ॥
आश्लिष्टश्लथभावाञ्च पुराणच्छायमाश्रिताम्।
मधुरां सुकुमारीञ्च पाञ्चालीं कवयो विदुः ॥ १७५ ॥
माधुर्य्यमपि वाञ्छन्तः प्रसादञ्च सुमेधसः।
समासवन्ति भूयांसि न पदानि प्रयुञ्जते ॥ १७६ ॥
लाटीयावन्तजयो रीत्यो र्मागध्याञ्च क्वचित् क्वचित्।
केचिदोजोऽभिधित्सन्तः समस्यन्ति बहून्यपि ॥ १७७ ॥
प्रतीतशब्दमोजस्वि सुश्लिष्टपदसन्धिमत्।
प्रसादि स्वभिधानञ्चाऽयमर्कं कृतिनां मतम् ॥ १७८ ॥

मा भूत् अलङ्कारतुल्यकक्षतया अर्थप्रधानोदारगुणस्य तु श्लाघ्यविशेषगुणयोग उदात्तत्वमित्यादेः किमिति प्राधान्यं न भवति, दोषगुणानामतीवोल्लेखविधित्वेन प्राधान्यात् ॥

सा वामनप्रसिद्धि र्लङ्घितनभसो बलिद्विषोऽद्यापि।
मत्सरिणः खलु लोकाः मर्माण्य्वानुबध्नन्ति ॥

दोषस्य यो गुणीभावः स ततोऽप्यधिकं प्रकाशते इति ॥ शब्दालङ्कारप्रधानो यथा,—

यच्चन्द्रकोटिकरकोरकभारभाजि बभ्राम बभ्रुणि जटापटले हरस्य।
तद्वः पुनातु हिमशैलशिलानिकुञ्जप्राकारडम्बरविरावि सुरापगाऽम्भः ॥

अत्र अर्थप्राकट्यं प्रसादः, विभवोत्कर्षः उदात्तता, मृदुप्रस्फुटोन्मिश्रवर्णानामवैषम्यं समता, बन्धगाढ़ता और्ज्जित्यम् इत्यादिभ्यो गुणेभ्यः प्राधान्येन शब्दालङ्कारानुप्रासः प्रतीयते ॥ अर्थालङ्कारप्रधानो यथा,—

आश्लेषिणः श्वशुरतक्षमपीतपीतम्

आयामिनो घनमुदो रजनी युवानः।
कण्ठे मुहुर्वलनबन्धनसन्धिलोल-
पादान्तसंवलितलोलपटाः स्वपन्ति॥

अत्र बन्धविकटत्वमुदारता, श्लाघ्यविशेषणयोग उदात्तता, विभवोत्कर्ष औदार्यम्, दीप्तरसत्वं कान्तिरित्यादिभ्यो गुणेभ्यः प्राधान्येन जातिरर्थालङ्कारः प्रतीयते॥ उभयालङ्कारप्रधानो यथा,—

अभ्युन्नता वसुमती दलितं रिपूरः
क्षिप्रक्रमं कवलिता वलिराजलक्ष्मीः।
अत्रैकजन्मनि कृतं यदनेन यूना
जन्मत्रये तदकरोत् पुरुषः पुराणः॥

अत्र उक्तिपरिपाटिः प्रौढिः, बन्धविकटत्वमुदारता, आशयोत्कर्षः उदात्तत्वम्, अर्थप्राकट्यं प्रसादः इत्यादिभ्यो गुणेभ्यः श्लेषोपसर्जना विशेषोक्तिः उभयालङ्कारः प्राधान्येन प्रतीयते॥ रससङ्करोऽपि च अलङ्कारसङ्करवदेव। भावरसाभासप्रशमानां तिलतण्डुलादिप्रकारेण सङ्करः षट्प्रकारो भवति॥ तत्र भावानां तिलतण्डुलप्रकारो यथा,—

न्यक्कारो हृदि वज्रकील इव मे तीव्रः परिस्पन्दते
घोरान्धे तमसीव मज्जति मनः सम्मीलितं लज्जया।
शोकस्तातविपत्तिजो दहति मां नास्त्येव यस्मिन् क्रिया
मर्माणीव पुनश्छिनत्ति करुणा सीतां वराकीं प्रति॥

अत्र अमर्षलज्जाशोकानुकम्पाः समकक्षतया मिथस्तिलतण्डुलवत् सङ्कीर्यमाणा रामस्य विरहिणो वागारम्भानुरागोक्तिपरतया प्रतीयन्ते॥ क्षीरनीरप्रकारो यथा,—

मानोन्नतेत्यसहनेत्यतिपण्डितेति
मय्येव धिक्कृतिरनेकमुखी सखीनाम्।
दाक्षिण्यमात्रमसृणेन विचेष्टितेन
धूर्तस्य तस्य तु गुणा नु परं जयन्ति॥

अत्र सखीषु रोषः प्रियगुणेषु च असूया नीरचीरवन्मिथः सङ्कीर्यमाणे मानिनीवागारम्भपरतया प्रतीयेते ॥ छायादर्शप्रकारो यथा,—

आः सीते पतिगर्वविभ्रमभरभ्रान्तभ्रमद्वान्धव-
मध्व'स्खलितकान्तिमत्तव तदा जातं यदेतन्मुखम् ।
सम्प्रत्येव हठात् तदेव कुरुते केशोच्चयोत्कर्षण-
•त्रासोत्तानितलोललोचनपतद्वाष्पाम्बु तं रावणः ॥

अत्र क्रोधाभावे छायादर्शन्यायेन रत्याभासः सङ्कीर्यते ॥ नरसिंहप्रकारो यथा,—

किं हारि दैवहतिके सहकारकेण
संवर्धितेन विषपादप एष पापः ।
अस्मिन् मनागपि विकाशविकारभाजि
भीमा भवन्ति मदनज्वरसन्निपाताः ॥

अत्र नरसिंहजाताविव सिंहनरशरीरभागारम्भानुसारेण सखीविषयानुकम्पा सहकारविषया च कुत्सा मिथः सङ्कीर्यते ॥ तथा हि दैवहतिकेशब्देन लब्धायां नियतुरपाधौ सर्वथैव अनुकम्प्यमानतायां सहकारसंवर्धननिबन्धनत्वमेव अस्याः कला द्योत्यते एवं नाम त्वं दैवोपहतासि यत् सहकारविषपादपं हारि संवर्धयसि विषपादपशब्देन लब्धायां सहकारस्य सर्वथैव कुत्सायां विकाशकाले कामिनीनामसहस्मरज्वरसन्निपातहेतुकमेव असत्राः कप्रत्ययेन प्रत्याय्यते ॥ तदुक्तं,

कुत्सितत्वेन कुत्सावान् सम्यग् वाऽपि हि कुत्सितः ।
स्वशब्दाभिहिते केन विशिष्टोऽर्थः प्रतीयते ॥
न च साम्प्रतिकी कुत्सा शब्दाभेदे प्रतीयते ।
युज्यते कुत्सितत्वेऽपि प्रशस्तत्वेऽपि कुत्स्यते ॥ तद् यथा,—
एक इह जीवलोके जीवति रूपं न रूपमभ्युदये ।
•सः प्रेमसाश्यौशे स्मरदावनवगोहयां पतति ॥

पांसूदकप्रकारो यथा,—

मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति ।
अन्यापि किं न सखि भाजनमीदृशीनां
वैरी न चेद्भवति वेपथुरन्तरायः ॥

अत्र स्वसौभाग्यवर्णना खल्विखण्डे पांस्दकयोरिव विभागमापाद्यमानयोरसूयागर्वयोः सङ्कर उपपद्यते ॥ चित्रवर्णप्रकारो यथा,—

विरोधो विश्रान्तः प्रसरति रसो निर्वृतिघनः
तदौद्धत्यं क्वापि व्रजति विनयः प्रह्वयति माम् ।
झटित्यस्मिन् दृष्टे किमपि परवानस्मि यदि वा
महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥

अत्र वीरौद्धत्यस्वातन्त्र्यरसानामानन्दप्रशमपारवश्यरसैः तिरस्क्रियमाणानां पटनीलादिभिः सीतादीनां प्रथमाः रामदर्शनप्रभावोद्भवे लवसत्त्वविस्मयातिशयप्रथमजन्मनि वागारम्भानुभावोपमोद्भवे चित्रवर्णवत् सङ्कीर्यमाणाः समुपलभ्यन्ते ॥ अथ रसगुणसङ्करः ॥ ननु दोषहानिरिव गुणोपादानमपि नियमनिर्वर्त्यम्, अलङ्कारयोग इव रसावियोगोऽपि अवश्यं विधेयः । कदाचित् अलङ्कारयोगोऽपि त्यज्यते न तु रसावियोगो गुणयोगश्च व्यभिचरितसम्बन्धौ इति । अत्रोच्यते, यत्र चित्रवर्णवत् नरसिंहवत् पांस्दकवच्च अवयवावयविन्यायेन जातिव्यक्तिन्यायेन च अपृथक्प्रयत्ननिर्वर्त्यानां गुणरसानां वाक्ये सन्निवेशः तत्र सङ्करव्यवहारो न प्रवर्तते ॥ तद्यथा,—

मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः ।
येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः ॥ १७९ ॥
कामं सर्वोऽप्यलङ्कारः रसमर्थे निषिञ्चति ।
तथाप्यग्राम्यतैवैनं भारं वहति भूयसा ॥ १८० ॥
शृङ्गार एव मधुरः परप्रह्लादनो रसः ।
तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति ॥ १८१ ॥

शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत् ।
माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः ॥ १८२ ॥
रौद्रादयो रसा दीप्ता लक्ष्यन्ते काव्यवर्त्तिनः ।
तद्व्यक्तिहेतू शब्दार्थौ ओजोऽधिष्ठाय तिष्ठति ॥ १८३ ॥
समर्थकत्वं वाक्यस्य यत्तु सर्वरसान् प्रति ।
स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः ॥ १८४ ॥

सेयं गुणानां रसारम्भकत्वे सङ्करप्रसिद्धिः । एवं रसानां गुणारम्भकत्वेऽपि तद् यथा,—रूढाहङ्कारतौर्जित्यं भावयतो वाक्यवृत्तिर्भाविकत्वम्, क्रोधादावपि तीव्रता माधुर्यम्, आश्रयोत्कर्षः उदात्तत्वम्, अर्थस्याभीष्टतन्मयता प्रेयः, दीप्तरसत्वं कान्तिरिति । यत्र तु तिलतण्डुलवत् क्षीरनीरवच्छायादर्शवत् तुल्यकक्षतयैव गुणरसानां वाक्ये पृथक्प्रयत्ननिर्वर्त्त्यानां विनिवेशः तत्र सङ्करव्यवहारः प्रवर्त्तते एव ॥ स षोढ़ा—गुणप्रधानः, रसप्रधानः, उभयप्रधानः, उभयाप्रधानः, गुणाधिकः, रसाधिकः इति ॥ तेषु गुणप्रधानो यथा,—

अत्रान्तरे ललितहारलतानितम्ब-
संवाहनस्खलितवेगतरङ्गिताङ्गी ।
देवी व्यपास्य शयनं धृतमानतन्तुः
अन्तःपुरं गतवती सह सौविदल्लैः ॥

अत्र अर्थप्रौढ्यौदार्ययोः अर्थशब्दगुणयोः प्राधान्यं न भवति क्रोधयोरिति गुणप्रधानः ॥ रसप्रधानो यथा,—

अस्मिन्नगृह्णत पिनाकभृता सलीलम्
आरब्धवेपथुरधीरविलोचनायाः ।
विन्यस्तमङ्गलमहौषधिरीश्वरायाः
स्रस्तोरगप्रतिसरेण करेण पाणिः ॥

अत्र श्लाघ्यविशेषणयोग उदात्तत्वम्, बन्धविकटत्वमुदारता, अर्थप्राकट्यं प्रसादः, दीप्तरसत्वं कान्तिरिति गुणाः साध्वसविलासानुरागसम्भ्रमरसे-

रतिप्रयत्नो इति रसप्रधानः॥ उभयप्रधानो यथा,—

आयातमात्ररसिके सरसीरुहस्य
किं बीजमर्पयितुमिच्छसि वापिकायाम्।
कालः कलिर्जगदिदं न कृतज्ञमज्ञे
स्थित्वा हरिष्यति तवैव मुखस्य शोभाम्॥

अत्र भणितिविशेषः उक्तिः, सविधाने स्वच्छलता श्लेषः इति शब्दगुणयो लावण्यविलासवर्णनीयरसयोश्च तुल्यकक्षतया निर्देश इति उभयप्रधानः॥ उभयाप्रधानो यथा,—

अभिनववधूरोषस्वादुः करीषतनूनपाद्
असरलजनाश्लेषक्रूरस्तुषारसमीरणः।
गलितविभवस्याज्ञेवाद्य द्युतिर्मसृणा रवेः
विरहिवनितावक्त्रक्लैव्यं बिभर्ति निशाकरः॥

अत्र स्वादुक्रूरमसृणवक्त्रक्लैव्यमित्यन्यधर्माणामन्यत्रारोपणं समाधिः, अभिनववधूरोषादीनां चतुर्णामप्यर्थानां स्वाद्वादीनाञ्च लक्षणादिलक्षितानां प्राकट्यं प्रसादः, अभिनववधूरोषस्वादुः करीषतनूनपात् इति विशेषणविशेष्याणामुपक्रमेण निवर्त्यं रीतिः, पादचतुष्टये चतुर्णामर्थानां विभक्तसमत्वेन निवेशः सम्मितत्वमिति चत्वारो गुणाः चत्वारश्च रत्यमर्षविषादजुगुप्सात्मानो रसाः कालावस्थानिवेदनपरत्वेन प्रतीयन्ते इत्युभयाप्रधानः॥ गुणाधिको यथा,—

प्रजननिरस्तु विभूतेः प्रपूरणि भवतु सर्वकामानाम्।
मा याचिषि मा सेविषि मा सङ्घिषि पराभवं धनिभः॥

अत्र स्वप्रतिभाद्युत्पत्तिसौशब्द्यं वाक्यानां परिपूर्णत्वमर्थव्यक्तिः, अर्थस्य प्राकट्यं प्रसादः, विभूतेरनुत्पत्तौ कामाः न पूर्यन्ते, अपरिपूर्णकामो याचते, याचमानस्तद्नाप्नुवन् धनिनः सेवते, सेवमानश्च तैः परिभूयते इत्युत्पत्त्यादिक्रियाक्रमो रीतिः इति गुणाश्चत्वारः रसस्तु निर्वेदः एवैकः इति गुणाधिकः॥ रसाधिको यथा,—

कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम्।
सा च सुकुमारसुभगेतुत्पातपरम्परा केयम्॥

अत्र कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम् इतरान्यधर्माणामन्यत्रारोपणं समाधिः, सा च सुकुमारसुभगेतुत्पातपरम्परा केयम् इत्यश्लीलामङ्गलार्थौ दोषगुणावपि श्लाघ्यविशेषणगुणयोगः उदात्तत्वम्, विकटबन्धत्वमुदारता, उपक्रमाभेदो रीतिः, अर्थप्राकट्यं प्रसादः, अनिष्ठुरता सौकुमार्यम्, अभीष्टतमता प्रेयः,दीप्तरसत्वं कान्तिः इति गुणा इश, रसास्तु रत्युत्कर्षहर्षेष्टत्युत्कण्ठावेगविस्मयवितर्कचिन्ताचपलताहासौत्सुक्यस्तम्भगद्गदोन्मादव्रीडाऽवहित्थभयशङ्काः विंशतिः वागारम्भानुभावे श्रृङ्गारिणः प्रियाचाटुकारस्य कस्यचित् प्रतीयन्ते इति रसाधिकः। रसालङ्कारसङ्करोऽपि एतेन व्याख्यातः॥

रसवन्ति हि वस्तूनि सालङ्काराणि कानिचित्।
एकेनैव प्रयत्नेन निवर्त्त्यन्ते महाकवेः॥ १८५॥
रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत्।
अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारः प्रशस्यते॥ १८६॥
रसभावादिविषयविवक्षाविरहे सति।
अलङ्कारनिबन्धो यः स कविभ्यो न रोचते॥ १८७॥

तत्र रसालङ्कारसंकरो द्विधा—रसप्रधानः, अलङ्कारप्रधानश्च॥ तयो र्योऽनुभविनेव वर्ण्यते स रसप्रधानः। तत्र हि अलङ्कारवतो वाक्यस्य वागारम्भानुभावत्वं भवति॥ तत्र रतौ उपमायाः सङ्करो यथा,—

तीए दंसणसुहए पणअकवलणणिश्रो मुहम्मि मणहरे।
रोसो वि हरइ हिअअं मअअं को व्व मअलञ्छणम्मि णिसण्णो॥

अत्र उपमातिरस्कारेण रसवतो हरेर्वचसि वागारम्भरूपे रुक्मिणीप्रदत्तपारिजातमञ्जरीविलोकनप्रभवं सत्यभामाया एव रामणीयकं प्राधान्यतः प्रतीयते॥ रतावेव विपरीतोपमा यथा,—

यत् त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं

मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी ।
योऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गताः
त्वत्साहृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥

अत्र विरहिणो रामस्य प्रियावयवसादृश्यदर्शनेन आत्मानं विनोदयतः उपायत्वंमात् अरतिप्रभवविषादवागारम्भस्वरूपाभिधाने प्रक्षीणशक्तित्वप्राधान्येन उपमा प्रतीयते ॥ एतावेव पर्यायस्य यथा,— •

किं गुरुजहण भरोत्ति
भाअकरअलग्गहलिआए ।
विहिणो खुत्तंगुलियणविब्भमं वहइ से तिवली ॥

अत्र यद्यपि रतिप्रभवेभ्यः विस्मयादिभ्यः संशयहेत्वुत्प्रेक्षोपमादिभ्यश्च पर्यायालङ्कारः प्राधान्येन प्रतीयते, तथापि असौ वागारम्भानुभावः इति एतावपि अप्राधान्यमेव अनुभवति ॥ एतावेव समाधि र्यथा,—

ऊरुद्वन्द्वोरुयुगं व्यतीत्य सुचिरं भ्रान्त्वा नितम्बस्थले
मध्येऽस्यास्त्रिवलीतरङ्गविषमे निष्पन्दतामागता ।
मद्दृष्टिस्तृषितेव सम्प्रति शनैरारुह्य तुङ्गौ स्तनौ
साकाङ्क्षं मुहुरीक्षते जलभरप्रस्यन्दिनी लोचने ॥

अत्र वत्सराजेन रूढ्टौ प्राणिधर्माः समाधीयमानाः सागरिकादर्शनार्थं वागारम्भे न्यग्भवन्ति ॥ एतावेव अर्थश्लेषस्य यथा,—

कपोले पत्राली करतलनिरोधेन मृदिता
निपीतो निःश्वासैरयममृतहृद्योऽधररसः ।
मुहुः लग्नः कण्ठे तरलयति वाष्पः स्तनतटीं
प्रियो मन्युर्जातस्तव निरनुरोधे न तु वयम् ॥

अत्र यद्यपि आक्षेपेण वाष्पोपसंहारः तथापि प्रिय इत्यादिभिः प्राधान्येन अभिधीयमानः श्लेष एव शृङ्गारिणो वागारम्भानुभावाङ्गतामङ्गीकरोति ॥ एतावेव पर्यायोक्ते र्यथा,—

मुक्ताः कन्धरया हृताः स्तनतटेनोत्तुङ्गता कुम्भयोः

ऊरुभ्यां परिणाहिना क्रमवती चसासन्न पद्भ्यां गतिः।
एतद् वः कथिषातिनस्तु कठिनं चम्मैव कोऽयं हठः
चण्डीति त्रिपुरारिकेलिवचनैरार्य्यंयाश्रितं पातु वः॥

अत्र भगवत्याश्चाटूक्तिवागारम्भो देव्याः पर्य्यायवर्णना स्वपभावं लभते। यत्र उदासीनेन वर्ण्यते सः अलङ्कारप्रधानः। स हि रसभावादेः सङ्करप्रकारसंभिधित्सुः स्वभावोक्तिं वक्रोक्तिं वा अवलम्बते। तत्र स्वभावोक्तिपक्षे जातिः। सा विधिमुखेन यथा,—

थोओसरन्तरोसं थोअपरिवट्टमानपहरिसं।
होइ अदूरपआसं उहअरसाअत्तविब्भंतीअ मुहं॥

अत्र सत्यभामायाः रोषस्य अपसर्पतः प्रहर्षस्य च प्रसर्पतः येऽनुभावाः जिह्मावलोकनमुखप्रसादादयः ते इह संकीर्य्यमाणाः कविना उभयरसायत्तम् इत्यनेन यथावदवस्थिताः भवन्तीति विधिमुखेन अभिधीयन्ते॥ जातिरेव निषेधमुखेन यथा,—

धीरेण माणभङ्गो माणक्खलणेण सहाय गरुअधीरा।
रम्भोउ ललइ तुलिने एक्कम्मि विसे थिरं न लग्गइ हिअम्॥

अत्र यद्यपि हेतूपन्यासो वर्त्तते तथापि तस्य भावाख्यानपरिकरत्वेन अप्राधान्येन हृदयक्रियास्वरूपमेव इह निषेधमुखेन अभिधीयते इति इयं जातिरेव भवति॥ सैव विधिनिषेधाभ्यां यथा,—

शैलोद्धरणमहीधरस्य तनुतामालोक्य दोष्णो हरेः
शैलेनांसत एव लब्धशरणावारोप्य तत्पादयोः।
शैलोद्धारसहायतां जिगमिषोरस्पृष्टगोवर्द्धनाः,
राधायाः सुचिरं जयन्ति गगने वन्ध्याः करभ्रान्तयः॥

अत्र, राधायाः प्रेयसि हरौ यथावदवस्थिता अङ्ग,तदभिलेखमुद्भोत्साशाः मिथः संकीर्य्यमाणाः, भयावेगस्मृतिमतिवितर्कादिभिः व्यभिचारिभावैः आलम्बनचर्य्याकर्मणसहकारतायां करभ्रान्तौ शरीरारम्भानुभावे प्रतीयमानाः अस्पृष्टगोवर्धनाः वन्ध्याः इति निषेधमुखेन, जयन्ति इति वि-

धिमुखेन च अभिधीयन्ते ॥ वक्रोक्तिपक्षे उपमादयः । तेषु उपमा यथा,—

चोरा सभअसतह्णं पुणो पुणो पेसअन्ति दिट्ठीओ ।
अहिरक्खिअणिहिकलसे व्व पोढ़महिलाथणुच्छङ्गे ॥

अत्र चौरगतभयानुरागयोः सङ्करस्वभावोक्तिमतिभूय उत्तरार्धगतमौपम्यं प्राधान्येन प्रतीयते ॥ उपमैव रसाभाससङ्करविषया यथा,—

एकेनाक्ष्णा प्रविततरुषा पाटलेनास्तसंस्थं
पश्यत्यक्ष्णा सजलतरलेनापरेणात्मकान्तम् ।
अह्नश्छेदे दयितविरहाशङ्किनी चक्रवाकी
द्वौ संकीर्णौ रचयति रसौ नर्तकीव प्रगल्भा ॥

अत्र निगदेनैव व्याख्याते स्पष्टतयैव उपमायाः प्रधानत्वेन प्रतीतिः । रसप्रशमयोरुपमासङ्कोक्ति यथा,—

दृष्टे लोचनवर्त्मना मुकुलितं पार्श्वस्थिते वक्रवत्
न्यग्भूतं बहिरासितं पुलकवत् तत्स्पर्शमातन्वति ।
नीवीबन्धवदागतं शिथिलतामाभाषमाणे ततो
मानेनापगतं ह्रियेव सुतनोरङ्घ्रिस्पृशि प्रेयसि ॥

अत्र कस्याश्चित् सखीविख्यातमानसंविधानकोपाख्यानवत्याः प्रियसन्दर्शनादालम्बनविभावात् उत्पन्नप्रकृष्टरतिप्रभवे प्रहर्षेऽप्यपि भावे तत्पार्श्वोपसर्पणादिभिरुद्दीपनविभावैरुद्दीप्यमाने समुत्पद्यमानेषु पुलकादिषु समुत्पद्यमानेषु व्यभिचारिषु नयननिमीलनाधोमुखनीवीविस्रंसनादिभिरनुभावैः प्रकर्षणारोपणाद् आनन्दरसानामापाद्यमाने स्थायिनि प्रबलविरोधिभावान्तरोदयाद् एतेभ्य एव कारणेभ्यः प्रतिक्षणमपचीयमानयो र्लज्जारोषयोः प्रशमसङ्करावभिभूय प्राधान्येन उपमासङ्कोक्तिः सङ्कीर्त्यते ॥ श्लेषाद्यलङ्कारसङ्करात् तु क्वचिदवास्तवमपि रसाभाससङ्करं कवयः कल्पयन्ति ॥ स रूपकश्लेषेण यथा,—

राममन्मथशरेण ताड़िता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥

अत्र बीभत्सो रसः श्लेषरूपकसामर्थ्यात् अविद्यमानेनापि शृङ्गाररसेन सङ्कीर्ण इव प्रतीयते ॥ श्लेषानुविद्धार्थान्तरन्यासेन यथा,—

दट्ठोट्ठह्वोअसिलवाअञ्चाओ
देवि मण्डलावइ लोअणभङ्गोवेवि ।
सुपओहरकुवलयपत्तलच्छि
कह मोहणजणहूणलग्गवच्छि ॥

अत्र वीरो रसः श्लेषसामर्थ्यात् अविद्यमानेनापि विप्रलम्भशृङ्गारेण संकीर्यते ॥ श्लेषोपमा यथा,—

चिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेचितः सम्भ्रमेण ।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स हरतु दुरितं शाम्भवो वः शराग्निः ॥

अत्र करुणो रसः श्लेषोपमासामर्थ्येनाविद्यमानेनापि विप्रलम्भशृङ्गारेण सङ्कीर्यते ॥ श्लेषव्यतिरेकेण यथा,—

पद्भ्यामूरुयुगं विभज्य भुजयो र्मध्यं निपीड्योरसा
पार्श्वेषु प्रसभं प्रहृत्य नखरै र्दन्तै र्विलुप्याधरम् ।
सुप्तानप्यवबोध्य युष्मद्दयितान् भूयोऽपि भुङ्क्ते वने
किं कान्ता सुरतैषिणी न हि न हि व्याघ्री करालानना ॥

इह श्लेषसामर्थ्यात् अपारमार्थिकी शृङ्गारप्रतीतिः पारमार्थिकेन बीभत्सरसेन व्यावर्त्तमाना तद्धर्माणां मिथः संसर्गबुद्धिमुत्पादयति ॥ श्लेषरूपकेण यथा,—

अन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-
व्यक्तोत्तंसभृतः पिनह्य सहसा हृत्पुण्डरीकस्रजः ।
एताः शोणितपङ्ककुङ्कुमजुषः सम्भूय कान्तैः पिब-
न्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥

अत्र बीभत्सो रसः शब्दसामर्थ्याचिप्तेन शृङ्गाराभासेन संकीर्यते ॥

समाधिरूपकेण यथा,—

शिरस्रं शरदिन्दुः शशिदिनकरौ कर्णयुगले
इयं ताराहाराश्चलमुडुपचक्रञ्च कुचयोः।
तडित् काञ्ची सन्ध्या सिचयरुचयः कालि तदयं
तवाकल्पः कल्पान्तसमविधेयो विजयते॥

अत्र भयानको रसः समाधिरूपकाद्रूपकल्पिताकल्परामणीयकाच्चिह्नेन स्रङ्गाराभासेन संकीर्यमाणः श्रोतुः प्रेयोरसाङ्गतां गच्छन् सङ्गच्छते। एवमियमनेकप्रकारसंसृष्टिः गुणालङ्कारसङ्करप्रभवाऽभिमन्तव्या। तत्रापि प्रधानाङ्गभावेन समकक्षतया च व्यक्ताव्यक्तोभयात्मकरूपाः तिलतण्डुल-क्षीरजलच्छायादर्शकादयो भेदाः यथायोग्यमवगन्तव्याः। ते किं वक्तव्याः न वक्तव्याः कथमनुक्ताः गम्यन्ते उक्तेष्वेवान्तर्भावात्। तद् यथा,—अर्थोभयालङ्काराभिधाने खं वस्ते इति चर्चां पारयति इति विभक्तिमुद्रा, कलविङ्ककण्ठमलिनं कादम्बिनीकम्बलम् इति पदमुद्रा च शब्दालङ्कारावपि संकीर्यमाणौ प्रतीयेते। एवमन्यत्रापि॥

अङ्गाङ्गिभावावस्थानं सर्वेषां समकक्षता।
इत्यलङ्कारसंसृष्टेः लक्षणीया द्वयी गतिः॥ १८८॥

तत्र अङ्गाङ्गिभावेन अवस्थानं यथा,—

आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम्।
कोपदण्डसमग्राणां किमेषामस्ति दुष्करम्॥

अत्र अरविन्दानि मुग्धे तव मुखश्रियमाक्षिपन्ति इत्युपमा, कोपदण्डसमग्राणां किमेषामस्ति दुष्करम् इति श्लेषोपसर्जनार्थान्तरन्यासः, प्रभवन्ति च अरविन्दानि कोपदण्डसमग्राणि तेन किं तेषां न किञ्चिद्-श्वयमस्ति कोपदण्डयो विजयसाधनत्वात्॥ एतेन श्लेषस्य साधनमान-भूतार्थसमर्थकत्वात् उपमायास्तु प्रस्तुतसाध्यवस्तुविशेषकत्वात् अर्थान्तर-न्यासं प्रति अङ्गभावो विज्ञायते॥ सर्वेषां समकक्षता यथा,—

लिम्पतीव तमोऽङ्गानि, वर्षतीवाञ्जनं नभः।

असत्पुरुषसेवेव दृष्टि र्विफलतां गता ॥

ननु च तमसश्च नभसश्च असतश्च सम्बन्धः समत्वात् स्यात् इति कथं सर्वेषां तुल्यकक्षतया सम्बन्धोत्पत्तिः, एवं मन्यते, यदा उत्प्रेक्षोपमादयोऽलङ्काराः विभावानुभावव्यभिचारिवर्णनापरतया रसादेरङ्गतां प्रतिपद्यन्ते, तदा भवति तेषां तुल्यकक्षता इति। तत्र लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः इति उत्प्रेक्षे, असत्पुरुषसेवेव दृष्टि र्विफलतां गता इति उपमा, वर्णनीयस्य तमसः उद्दीपनविभावभूतस्य समतयैवोत्कर्षप्रतिपादकत्वे प्रागभावमुपगता इति नास्ति लक्षणासुपपत्तिः इति। ननु उपमा इमास्तिस्रोऽपि कस्मान् नोच्यन्ते,इवो हि वाक्यान्तरेषु उपमाया एव दृश्यते। नैवम्; उपमानोपमेयशब्दं प्रति यत् तस्य सादृश्यार्थस्य द्योतनं इवेन क्रियते ॥ न च लिम्पति इत्यादौ उपमानमुपमेयं वास्ति, यत् सादृश्यद्योतनाय इवः प्रयुज्यते न च तिङन्तेन उपमानमस्ति; तस्य साध्यार्थाभिधायित्वेन असत्वार्थकत्वात् ॥ तदाह

सिद्धस्त्र हि समानार्थमुपमानं विधीयते।

तिङन्तार्थस्त्र साध्यत्वात् उपमार्थो न विद्यते॥

न च उपमायामेव इवशब्दो भवति तद् यथा,— कथमिव एतद् भविष्यति। अस्तु वा लिम्पतितमसोः उपमानोपमेयभावः तथापि तुल्यधर्मो न दृश्यते य उपमानोपमेयभावाय प्रभवति ।किमन्येन लेपनमेव भवति तर्हि लिम्पतिना केन भाव्यम् न हि लेपनं लिम्पेः पृथग् भवितुमीष्टे। ननु च इह द्वयं चकास्ति, धातु र्लिम्पति तदर्थश्च लेपनम्। नैवं; एवं सति लिम्पतिरिव इति स्यात् न तु लिम्पतीव इति॥ अथ यथा राहोः शिरः इति भेदाभावेऽपि अवयवावयविभावः तथा इह धर्मधर्मिभावो भविष्यति। नैवं; उपमानोपमेयभावस्त्र भेदसादृश्यप्रतिपत्तिनिबन्धनत्वात् ॥ सदभावेऽपि यस्तन् मनुते स कथं नोन्मत्तः स्यात् ॥ तदुक्तम्।

स एव धर्मो धर्मी चेतुन्मत्तोऽपि न भाषते ॥

अस्तु तर्हि तिङो यः कर्त्ता उपमानम् इति चेत् अग-भूतोऽसौ क्रियापदे। कथं पुनरसौ क्रियापदे न्यग्भूतो भवति। उच्यते षडर्थाः तिङन्तेन प्रतीयन्ते—क्रिया, कालः, उपग्रहः, साधनं, सङ्ख्या, पुरुषश्च इति। तेषु क्रियाकालात्मनेपदपरस्मैपदनिमित्तानि प्रकृतिरभिधत्ते, प्रत्ययः साधनम् सङ्ख्यां पुरुषञ्च॥ एतेषान्तु क्रियार्थत्वात् क्रिया प्रधाना कालात्मनेपदनिमित्ते क्रियाविशेषणत्वेन सङ्ख्यापुरुषौ साधनविशेषणत्वेन तयोरेव न्यग् भवतः। साधनं पुनः प्रकृतिप्रत्ययार्थौ स्वार्थं सह ब्रूत इति न्यायात् प्रधानभूतमपि भूतं भव्याय उपदिश्यते इति न्यायेन क्रियासिद्धौ उपात्तव्यापारं परार्थं तस्यां क्रियायां न्यग् भवति। तेन अयं कर्त्ता स्वक्रिया सिद्धा वा कुतः कथं उपमानत्वेन उपमेयत्वेन वान्यदपेक्षितं लभते। एवं तर्हि, योऽङ्गानि लिम्पति तेन क्रियोपलक्षितेन कर्त्रा तुल्यं तम इति अर्थः प्रतिपत्स्यते। नैवं; क्रियोपलक्षितस्य कर्तुः उपमानभूतस्य शब्दन्यायबलाद् अप्रतिपत्तिः। शब्दो हि मुख्यागौणीलक्षणाभिः अर्थप्रकरणादिसम्पादितसान्निध्यादिभिस्तिसृभिरेव वृत्तिभिरर्थविशेषप्रतिपत्तिनिमित्तं भवति॥ तद् यथा, गौरित्ययं शब्दो मुख्यया वृत्त्या सास्नादिमन्तमर्थं प्रतिपादयति। स एव तिष्ठन्मूत्रत्वादिगुणसम्पदमपेक्ष्य वाहीकादौ प्रयुज्यमानो गौणीं वृत्तिमनुभवति। यदा तु मुख्यया गौण्या वा उपात्तक्रियासिद्धौ साधनभावं गन्तुं समर्थः, तदा लक्षणया स्वार्थाविनाभूतमर्थान्तरं लक्षयति। यथा गङ्गायां घोषः प्रतिवसति इति गङ्गाशब्दो विशिष्टोदकप्रवाहे निरूढाभिधानशक्तिः घोषकर्तृकायाः प्रतिवसनक्रियायाः अधिकरणभावं गन्तुमसमर्थः स्वार्थाविनाभूतं तटं लक्षयतीति॥ न च, एतासाङ्किञ्च अन्यतमाऽपि वृत्तिः संगच्छते। तथाहि लिम्पतेः क्रियावचनत्वात् न मुख्या, नापि क्रियाकर्त्रोः असादृश्येन शुक्तिकादौ रजतादिवत् तद्-भावापत्तिः, क्रियागुणानां कर्तरि असम्भवात् वाचादिवमयोगाच्च न गौणी। क्रियायाश्च स्वयमेव धर्मरूपत्वात् बुद्धिः पश्यति इतिवत् अन्य-

धर्माणां अन्यत्राधिरोपणमुपचार इति न गौणीभेद उपचरितः। इवशब्दस्य च असादृश्येऽपि दर्शनात् न लक्ष्येत। यदि हि इवशब्दः सादृश्यमेव विद्योतयति, तदा लिम्पतिक्रियायाः सत्वभूतेन तमसा सादृश्यं न सम्भवतीति स्वार्थाविनाभूतं कर्त्तारमाक्षिपति। न च इह लक्षणाविरुद्धलक्षणाद्‌योऽपि वर्त्तन्ते, यथा प्रिये जने नास्ति पुनरुक्तं, स्वल्पैरसावपि न दृश्यत एव कालैरिति। न च शब्दान्यप विलम्बित-प्रायविलम्बिनी पदार्थप्रतिपत्तिः प्रेक्षावद्भिराद्रियते। यद्यपि अथाचारादिभिरिदमपि स्यात्, तथापि तुल्यधर्मो मार्गणीयः तद्वदेव विप्रतिपत्तेः॥ न च इन्दुमुखादिवद् अनभिधीयमानस्यापि तुल्यगुणस्य प्रत्ययो भवतीति वाच्यम्।

यथेन्दुरिव ते वक्त्रमिति कान्तिः प्रतीयते।
तत् तथा लिम्पते लेपाद् अन्यदत्र प्रतीयते॥ १८९॥
तदुपश्लेषणार्थोऽयं लिम्पति ध्वान्तकर्त्तृकः।
वर्णनार्थश्च विद्वद्भिः उत्प्रेक्ष्यत इतीष्यताम्॥ १९०॥
मन्ये शङ्के ध्रुवं प्रायो, नूनमित्येवमादिभिः।
उत्प्रेक्षा व्यज्यते शब्दैः इवशब्दोऽपि तादृशः॥ १९१॥

वाक्यावदेव प्रबन्धेषु अनौचित्यपरिहारेण गुणालङ्कारसङ्करनिवेशो भवति॥ तत्र अनौचित्यपरिहारो यथा, मायया कैकेयीदशरथाभ्यां रामः प्रलम्भितो, न मातापितृभ्यामिति निर्दोषदशरथे; राममेव योधयन् रामेण वाली निहतो न सुग्रीवमिति महावीरचरिते; रुधिरप्रियराक्षसेन दुःशासनस्य रुधिरं पीतं न भीमसेनेनेति वेणीसंहारे; दुर्वाससोऽपध्यानाद् दुष्मन्तः शकुन्तलास्वीकारं विसस्मार, न अनवस्थितानुरागतयेति शाकुन्तले; लवणप्रयुक्तराक्षसाभ्यां वासोपस्करेण सीता परित्याजिता न कैकेयीमन्थराभ्यामिति छलितरामे। किञ्च, दग्धायामपि वासवदत्तायां वैरप्रतिचिकीर्षया पद्मावती मयोढा, अवस्थिते च समीहिते तया विना क्षणमपि न जीवामीत्यविज्ञातवासवदत्ता-

सन्निधे वत्सराजस्य अग्निप्रवेशाध्यवसाय; प्रियाहृदयगतो व्यलीकशल्यसुद्धुस्थानेति तापसवत्सराजे; मरोचाधः स्वामिकार्यं साधयामीति प्रभुभक्त्या निरपराधामपि प्रेयसीं छित्वा स्वामिकार्यापेक्षयाऽहमेव एतावन्ति दिनानि जीवितः, अद्यासुकृतस्वामिकार्यः तामेवानुगच्छामीति प्रियगण: शूद्रकनिर्मितां मायामयीं चितां प्रियासमक्षं प्रविवेश, साऽपि सत्प्रेमावदानदर्शनापङ्कसुप्रियव्यलीकात् तद्वियोगकातरा तत्रैवात्मानं प्रतिचिक्षेप इति विक्रान्तशूद्रके, इति तदेतद्व्योपच्छानम् ॥ गुणोपादानन्तु सम्यग्गुणयोगेन संविधाने सुस्थता, अपि च चतुर्दशत्वङ्गसम्पन्नमिति। चतस्रो वृत्तयो भारती आरभटी कैशिकी सात्वती चेति । तत्,—

या वाक्प्रधाना नृपतिप्रयोज्या स्त्रीवर्जिता संस्कृतया प्रयुक्ता ।
स्वनामधेयै र्भरतप्रयोज्या सा भारती नाम भवेत्तु वृत्तिः ॥१८२॥
अत्रावपातस्तुतलङ्घितानि छेद्यानि मायाकृतमिन्द्रजालम् ।
चित्राणि युद्धानि च तत्र वृत्तिमेताद्दशीमारभटीं वदन्ति ॥१८३॥
या श्लक्ष्णनेपथ्यविशेषयुक्ता स्त्रीसङ्गता या बहुगीतवृत्ता ।
कामोपभोगप्रचुरोपचारा तां कैशिकीवृत्तिमुदाहरन्ति ॥ १८४ ॥
या सात्त्विकेनात्मगुणेन युक्ता त्यागेन वृत्तेन समन्विता च ।
हर्षोत्कटा संहृतशोकभावा सा सात्वतीति प्रथितेह वृत्तिः ॥१८५॥

आसामङ्गानि षोडश—तेषु प्ररोचना, प्रस्तावना, वीथी, प्रहसनमिति चत्वारि भारत्यङ्गानि । तत्र वक्तव्यार्थप्रशंसापरं वचः प्ररोचना, यथा,—

जयति भुवनकारणं स्वयम्भूः जयति पुरन्दरनन्दनो मुरारिः ।
जयति गिरिसुतानिरुद्धदेहो दुरितभयापहरो हरश्च देवः ॥

प्रस्तुतवस्तूपपादनावसरसूचकं वचः प्रस्तावना ; यथा रत्नावल्यां,—

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥

उद्घात्यकादीनामङ्गानां प्रवृत्तिः वीथी । उद्घात्यकः कथोद्घातः प्रयोगातिशयः प्रवर्तकः अवलगितमिति । तत्र उद्घातकः यथा,—

को जयति जयति शर्वः केन जितं जितमनङ्गदहनेन।
त्रिपुरारिणा भगवता बालशशाङ्काङ्कितजटेन॥

कथोद्घातो यथा,—

साकं पङ्कजजन्मना सुरपतेरभ्यर्थनाया वशात्
इक्ष्वाकोः शरदिन्दुविम्वविमले वंशेऽवतीर्य स्वयम्।
निःशेषात्तपदं त्रयीपदजुषां विद्वेषिणं राक्षसं
यः पौलस्त्यमहन् स पातु भवतो रामाभिधानो हरिः॥

प्रयोगातिशयो यथा,—

अत्याहितमवतु हरेः क्ष्मामुद्धरतो वराहवपुषो वः।
शेषफणारत्नदर्पणसहस्रसंक्रान्तविम्बस्य॥

प्रवर्तको यथा,—

आसादितप्रकटनिर्मलचन्द्रहासः
प्राप्तः शरत्समय एष विशुद्धकीर्तिः।
उत्खाय गाढतमसं घनकालमुग्रं
रामो दशास्यमिव सम्भृतबन्धुजीवः॥

अवलगितं यथा,—अमुमेव शरत्समयमाश्रित्य गीयताम्, तथा ह्यस्याः

सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः।
निपतन्ति धार्तराष्ट्राः कालवशान् मेदिनीपृष्ठे॥

स्वधर्मविप्रवलितानां तापसादीनामुपहासपरं वचः प्रहसनम्, यथा,—

श्रमणः श्रावकवध्वाः सुरतविधौ दशति नाधरं दत्तम्।
मदिराक्षि मांसभक्षणमस्मत्समये निषिद्धमिति॥

संक्षिप्तिका, अवपातः,वस्तूत्थापनं,संस्फोटः इति चत्वारि आरभट्यङ्गानि,॥
तेषु माहेन्द्रजालनेपथ्यादिभिर्वस्तुसंक्षेपः संक्षिप्तिका यथा,—

रक्षसा मृगरूपेण वञ्चयित्वा स राघवौ।
जहार सीतां पक्षीन्द्रप्रयासक्षणविघ्नितः॥

भयादिभिर्विद्रवादिकर्मानुप्रवेशनिर्गमनमवपातो यथा,—

स्वगरूपं परित्यजत्र विधाय विकटं वपुः ।
नीयते रक्षसा तेन लक्ष्मणो युधि संशयम् ।

अविद्रवः सविद्रवो वा सर्वरसभावसमासो वस्तूत्थापनं यथा,—

राहोश्चन्द्रकलामिवाननचरीं दैवात् समासाद्य मे
दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम् ।
आतङ्काद् विकलं द्रुतं करुणया विक्षोभितं विस्मयात्
क्रोधेन ज्वलितं मुदा विकसितं चेतः कथं वर्त्तताम् ॥

नानास्त्रयुद्धनियुद्धादिभिः ससंरम्भसंप्रहारः संस्फोटो यथा,—

स्पृष्टा येन शिरोरुहेषु पशुना पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः ।
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः ॥

नर्म, नर्मस्फिञः, नर्मस्फोटः, नर्मगर्भ इति चत्वारि कैशिक्यङ्गानि ॥ तेषु स्थापितशृङ्गारं वचः विचेष्टितं वा सपरिहासं नर्म यथा,—

वयं तथा नाम यथात्थ किं वदाम्ययं त्वकस्माद् विकलः कथान्तरे ।
कदम्बगोलाकृतिमाश्रितः कथं विशुद्धमुग्धः कुलकन्यकाजनः ॥

प्रथमसम्भोगे नवावस्थानं सम्भोगाश्रयवाक्यादिकर्म नर्मस्फिञः यथा,—

प्राप्तासौ दृपपर्वणः प्रियसुता सङ्केतखण्डे नवे
दृष्टिः सेयमनन्यदाऽश्वतमयी गात्राणि मे सिञ्चति ।
किं जानासि विनोदयिष्यति मनः सन्ततमेवाद्य मे
दुर्वातेव निवर्तयिष्यति न भोक्तो देवयानीं प्रति ॥

आविर्भूताभिलाषानुभावयोः अकाण्डसम्भोगभङ्गः नर्मस्फोटः यथा,—

इतः परानर्भकहार्यशस्त्रान् वैदर्भि पश्यानुमता मयाऽसि ।
एवंविधेनाहवचेष्टितेन त्वं प्रार्थ्यसे हस्तगता ममैभिः ॥

कार्यहेतोः स्वरूपविधानादिप्रच्छादनं नर्मगर्भः यथा,—

अयाजिनापादधरः प्रगल्भवाक् ज्वलन्निव ब्रह्ममयेन तेजसा ।

विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाश्रमो यथा ॥

उत्थापकः, परिवर्तकः, संलापकः, संघात्यक इति चत्वारि सात्वत्यङ्गानि ॥ तेषु परस्परीभूयार्थेषु उत्थापनं उत्थापकः यथा,—

प्रहर मम तु कार्यं प्राक्प्रहारप्रियोऽहं
अपि तु क्षतविघाते किं विदध्याः परस्मात्।
झटिति वितततवक्षद्वारभास्वत्कुठार-
प्रविघटितकठोरस्कन्धबन्धः कबन्धः ॥

प्रस्तुतार्थत्यागादन्यार्थभजनं परिवर्त्तकः यथा,—

मुनिरभिमुखतां निनीषवो याः समुपययुः कमनीयतां गुणेन।
मदनमुपदधे स एव ताभ्यो दुरधिगमा हि गतिः प्रयोजनानाम् ॥

सदसि नानावाक्यैश्च मिथोऽधिक्षेपः संलापकः यथा,—

कथमपि न निषिद्धो दुःखिना भीरुणा वा
द्रुपदतनयपाणिस्तेन पित्रा ममाद्य।
तव भुजबलदर्पाद्ध्मायमानस्य वामः
शिरसि चरण एष न्यस्यते धारयैनम् ॥

कार्यमन्त्रानुभावदैवादिभिः संघातभेदः संघातकः यथा,—

अपश्यद्भिरिवेशानं रणान्निववृते गणैः।
मुह्यत्येव हि कृच्छ्रेषु सम्भ्रमाधिगतं मनः ॥

चतुर इत्यनेन शास्त्रीयलौकिकव्यवहारवेदिनो नायकस्य धर्मार्थकाममोक्षेषु वैचक्षण्यमुच्यते। उदात्त इत्यनेन शौर्यविभूत्योराभिजात्ययौवनादीनां चोत्कर्षः प्रकाश्यते। चतुर्वर्गफलं प्रबन्धं को वा न बाध्नीयात् इत्यनेन श्रोतॄणां रामादिवद् वर्त्तितव्यं, न रावणादिवदिति विधिनिषेधनिबन्धनस्य प्रबन्धस्याभीष्टतमत्वमाख्यायते। मुखं प्रतिमुखमित्यादिना तु पञ्चाङ्गं प्रबन्धशरीरमभिधीयते। तदङ्गानि च उपक्षेपपरिकरादीनि चतुःषष्टिरपि मुखादिष्वेवान्तर्भवन्ति। यतः तद्देव पञ्चसन्ध्यङ्गकमपि वाक्यं प्रबन्धव्यपदेशमासादयति। तद्यथा,—

कथमपि सतप्रत्यासत्तौ प्रिये इति मुखं, स्खलितोत्तरे इति प्रतिमुखं, विरहकृशया सत्वा व्याजं प्रजल्पितमश्रुतम् इति गर्भः, असहनसखी-श्रोत्रप्राप्तिप्रसादससम्भ्रम-विवलितदृशा इति विमर्षः, शून्ये गेहे समुच्छ्वसितं (मुक्तः) इति निवर्हणम्। एतेन प्राचीनप्रबन्धार्थेऽपि एकवाक्योक्तेन प्रबन्धत्वमित्याख्यातं न भवति ॥ तद् यथा,—

तुरगनिचयव्यग्रानूर्वीभिदः सगराध्वरे
कपिलमहसा रोषात् प्लुष्टानपि प्रपितामहान्।
अगणिततनूतापस्तप्त्वा तपांसि भगीरथः
भगवति तव स्पृष्टानद्भिश्चिरादुददीधरत् ॥

अवि नूतमसंधिमत् इत्यनेन विस्तारभीरूणां कथारसविच्छेदशङ्किनाश्च चित्तमावर्ज्यते। अव्यान्तरैः इत्यनेन दृत्तान्तैराश्वासकादिपरिसमाप्तिरिति परिश्रान्ताः श्रोतार आश्वास्यन्ते, स्रुगादिसन्निवेशादिवत् सन्दर्भे च आश्वासादयो विभाव्यन्ते। पुरोपवनेत्यादिना च देशकालपात्रसम्पदुपवर्णनात् आलम्बनोद्दीपनविभावाः कथ्यन्ते। उद्यानसलिलक्रीडाद्युपलक्षणेन कामिनीनां दिवाचेष्टाः, मधुपानं रतोत्सव इत्यनेन च रात्रिचेष्टा उच्यन्ते, विप्रलम्भा इत्यनेन चत्वारोऽपि प्रथमानुरागादयः परामृश्यन्ते। विवाहा इत्युपलक्षणेन प्रथमानुरागो, विवाहान्तो मानः, प्रेमान्तः प्रवासः, सङ्गमान्तः करुणः, प्रत्युज्जीवनान्तः प्रबन्धः कर्तव्यः इत्युपदिश्यते। मन्त्रदूतेत्यादिपुरुषकारायत्तसिद्धिसूचनेन दूरततादिनिरासात् नायकस्य सत्वोत्कर्षः प्रकाश्यते। नावर्णनं नगर्यादेर्दोषाय इत्यादिना तु पुरुषार्थासन्नोपकारित्वेन शैलर्तुंदमनचन्द्रोदयमधुपानरतोत्सवादीनां मन्त्रदूतप्रयोगाभिनायकाभ्युदयादीनाञ्च नियमेन प्रयोगः, शेषाणान्तु प्रबन्धशरीरानुरोधेन इति प्रतिपाद्यते। गुणाः प्रागुपन्यस्य नायकं तेन विद्विषाम्। निराकरणम् इत्यनेन गुणवता भाव्यं न गुणद्वेषिणेति ख्याप्यते। वंशवीर्य(दृत्त, १३८)श्रुतादीनि इत्यादिना पुराभिजात्यौद्धत्यशौटीर्यवीर्यादय एव शत्रो र्वर्णनीयाः न त्वयस्के-

दृष्टेतयोऽन्यायप्राचरणाविनयादय इति प्रतप्रायप्रते। धिनोति न इति तु अयमेव पक्षः श्रेयानिति ग्रन्थकारेण स्वाभिप्रायः प्रकाश्यते।

इति निगदितभङ्गप्रानङ्गसर्वस्वमेतद्
विविधमपि मनोभिर्भावयन्तोऽस्य भेदम्।
तदनुभवसमुत्थानन्दसम्मीलिताक्षाः
परिषदि परितोषं हन्त सन्तः प्रयान्तु॥

यावन् मूर्ध्नि हिमांशुकन्दलभृति स्वर्वाहिनी धूर्जटेः
यावद् वक्षसि कौस्तुभस्तवकिता लक्ष्मी मुरद्वेषिणः।
यावच्चित्तभुवस्त्रिलोकविजयप्रौढं धनुः कौसुमं
भूयात् तावदियं कृतिः कृतधियां कर्णावतंसोत्पलम्॥

इति महाराजाधिराजश्रीभोजदेवविरचिते सरस्वतीकण्ठाभरणा-
लङ्कारे रसविवेचनो नाम पञ्चमः परिच्छेदः समाप्तः।

शुभमस्तु॥

---

१।१८. 'अजिघ्रायकीयिषन्' घ्रायकं कर्तुमैच्छन्; 'सक्ति' स्वपिति; कच्छप्रम्बशब्दौ जलाशयवाचिनौ (पा० ५।२।१३८); 'षरिष्यति' सेष्यति.

२।५ 'वर्वर्य्यादयो हृदयदफुल्लसतां यक्ति रूपाणि.'

५।१५ "ग्राम्यो मैथुनं ... ... पेलशब्दो मुष्कयोः प्रसिद्धः."

६।२२ "गण्डो व्रणः."

७।८ कि० १७. ६१.

८।१२ काकं खादति क्षुधितः शूरं (भक्तं) फेल्लति (? क्षिपति) निर्भर्त्सः। स्वानं गृह्णाति कण्ठे रक्षायति (? निवारयति) नप्तारं स्थविरः॥

८।१७ आवर्जत्र पीडत्रते (ताडत्रते) यथा कुक्कुरो नाम ("कुक्कुरो नाम शब्दः प्राकाश्ये" ?) ममर्त्ता। प्रेचत राजकुलकर्मकराः, आचष्ट कस्य क्रन्दामि॥

८।१६ संहतचक्रवाकयुगा विकसितकमलमृणालसंछन्ना।
वापी वधूरिव रोचनाविलिप्तस्तना सुखयति॥

८।२० अभिनवमनोहरविरचितवलयविभूषा विभाति नववधूः।
कुन्दलतेव समुत्फुल्लगुच्छपरिपीयमानभ्रमरगणा॥

१०।८ शैलसुतारुद्धार्धं मूर्धावहभुजगशशिलेखम्।
शीर्षपरिष्ठितगङ्गं संध्याप्रणतं प्रमथनाथम्॥

११।४ असितर्तेः सप्तार्चिनः अग्नेः तुक् अपत्यं कुमार इत्यर्थः।
स्वःचिता दिवौकसाम्।

११।१० काव्य० १।

१३।२० म० १४.४. १४।५,८ शि० ।३. १२-३.

१४।१६ कारयित्वा चौरं ग्रामप्रधानः (देशी. २।८१) मज्जित्वा अजिमितः (भक्षितवान्)। नक्षत्रतिथिवारान् ज्योतिष्कं प्रष्टुं चलितः॥

स ५०

"।२० विवाह्य नववधूः श्वाशुरकं (श्वशुरगृहं) दोलिकया नीयमाना रोदिति देवरस्तां संस्थापयति पार्श्वेन व्रजन् ॥

१५।५ खाद विषं पिब मूलं नीयसे मार्यया पततु ते वज्रम्। दन्तखण्डितस्तनी चिरा सुतं शपति माता ॥

१५।२१ नमत हरं रोषानलनिर्दग्धमुग्धमन्मथशरीरम्। विलुलितनितम्बनिर्गतगङ्गास्रोतसमिव हिमवन्तम् ॥

१६।१८ कोलाः खनन्ति सुस्थाः गृध्राः खादन्ति मृतकमांसानि। उलूका घ्नन्ति काकान् काका उलूकानपि वायन्ति (क्षिपन्ति)

१७।१८ सुरभिमधुपानलम्पटभ्रमरगणाबद्धमण्डलीबन्धम्। कस्य मनो नानन्दयति कूर्मपृष्ठस्थितं कमलम् ॥

"।२२ पट्टांशुकोत्तरीयेण पामरः पामर्याः प्रोञ्छति। अतिगुरुककुम्भीभरेण स्वेदार्द्रितं वदनम् ॥

१८।१५ शि० ।३. ८.—"।२० ग्र० ।२. ६.

२०।८ कु०. ५. १४.—"।१७ र० । १. १.

२३।२३ शि० । १४. ६६.—२४।६ वी० ।. १।५५. २५।१७ अम० । १.

२६।८ वि० । २।७.—"।१५ रत्न० । २. २०.

"।२२ बा० रा० । ६. २४.—२७।५ वाम० । २०. ६.

२७।१८ ग्र०. ७. १२.—२८।७ वी० । २. १४.—"।११ कु० । ६. ८.

२८।१६ वाम० । १९. २१.—२९।६ ग्र० । २. १३.

२९।११ वाम०. १८. १६.—३१।१५ याम०. १८. २६.

३२।१२ "नाघ्नाः राक्षसाः".—३३।३ शि० । १०. ८०.

३३।८ many read खातयः for खादयः and स्मार्ते for स्मार्त्ते काव्या० ३. १११.

"।१६ शि० । १. ४२.—"।२१ शि० । १० । ६४. ३४।१८. र० १३।

३४।१६ अपग्राहगा अपि कवयः हरिचन्द्रहालभसुखा अपि। मण्डूकमर्कटा अपि खलु भवन्ति हरयः सर्पसिंहा अपि ॥

"।२१ मयूरः कलापे यं वहति तस्य नाम्नः सदृशनामा।
उष्णीषान् पादान्तगतो नु नतं यथा नौका॥
"जिअनाउ इति पाठे जितनौक इत्यर्थः"।

३५।४ कु० १. २७.

३५।११. शि०।१६. २.—"।१८. कु०।६. ३६.—३६।८. कु०।३. १६.

३७।५. वे०।१. ६. ३८।७. वी०१।३५.—"।१४. मा, मा० ५।१८.

३९।२१. 'नगेट्' (श्)=हिमालयः; भेट्=भा+ईट्=चन्द्रः; उग्रहक् (च्)=सूर्यः; भुट् (द्रुच्)=द्रोहकारि; अप्+रट् (ह्)=जलजम्.

४१।७. "हातो इति महाराष्ट्रभाषया प्रश्नकाकु., अयं स इत्यर्थः"; 'दीसइ सच्चं' दृश्यते सत्यम्; 'ए दूए किअलेउ' अनेन व्याजेन छलः, 'दूअं व्याज.'—पच्छाए इत्यपरः पाठः पश्चादेव इत्यर्थः; 'एसे सच्च, जिवोसु;' एवं सत्यं जीवितः

४२।१६ शि० ।२.४४.

४४।११ यथा स्नातुमवतीर्णे आर्द्रीभूतसुश्लाघितसंशुकाङ्गीन्तम्।
तया च स्नाता भवसि त्वं स्वच्छे गोदानदीतोये॥

४६।१. 'न्यचेष' परशुरामेण सामस्तोत्रेनेति श्लेषार्थः.

"।२१. वे० ।३. २८.—४७।३. वाम०. १५. १२.—"।८. शि० ।२. ६८.

४८।११. मा० मा०।५।३०।

"।२०. कुतो लभ्यते पथिक स्वस्तरकं (प्रस्तरं) अत्र ग्रामणीगृहे।
उन्नतपयोधरान् प्रेक्ष्य पुन यदि वससि तदा वस॥

४९।१४. पाणि०।२।१।५५—५०।२०.अम०।२.

५१।१३. शि०।१६।५२.—५२।२. दश०.—"।८. चौर० ।११.

५४।८. शि०।२।६१.—५७।१७. श०।३।१८.

"।२०. श०।३।१८. तव न जाने हृदयं मम पुन र्मदनो दिवा च रात्रिं च।
निष्कृप तपति वलवत् त्वयि युक्तमनोरथानि अङ्गानि॥

"।२३. वेणी० ३।१ मतं मानुषमांसभारकाः कुम्भसहस्रं वसाभिः सञ्चितम्।
अनिशं च पिवामि शोणितं वर्षशतं समरो भविष्यति॥

